


ISSN 2321-6948

# राष्ट्री

## वार्षिकपत्रिका

2021–2022



निदेशकानां प्रो. जे.भानुमूर्तिवर्य्याणाम्
अभिनन्दनविशेषाङ्कः

**केन्द्रीय-संस्कृत-विश्वविद्यालयः**

( भारतसर्वकारस्य शिक्षामन्त्रालयाधीनः )
भोपालपरिसरः संस्कृतमार्गः, बागसेवनिया, भोपालम् ( म.प्र. )

खीष्टाब्दः 2021

अङ्कः — 20



ISSN-2321-6948

# राष्ट्री

**(वार्षिकपत्रिका)**

**2021-22**

## *निदेशकानां प्रो. जे.भानुमूर्तिवर्य्याणाम् अभिनन्दनविशेषाङ्कः*



**प्रकाशकः**

**केन्द्रीयसंस्कृतविश्वविद्यालयः**

**(शिक्षामन्त्रालय-भारतशासनाधीनः)**

**भोपालपरिसरः, संस्कृतमार्गः, बागसेवनिया, भोपालम्**

**ख्रीष्टाब्दः 2021-22** **अङ्कः – 20**

| | | |
|---|---|---|
| प्रकाशकः | - | निदेशकः<br>केन्द्रीयसंस्कृतविश्वविद्यालयः<br>भोपालपरिसरः, भोपालम् |
| प्रकाशनतिथिः | - | 26.03.2022 |
| अङ्कः | - | 20 |
| पत्रिका | - | राष्ट्री |
| ISSN | - | 2321-6948 |
| प्रतयः | - | 600 |
| मूल्यम् | - | 250 रु. |
| आकल्पनम् | - | डॉ. रोहित पचौरी |
| प्राप्तिस्थलम् | - | केन्द्रीयसंस्कृतविश्वविद्यालयः<br>भोपालपरिसरः, संस्कृतमार्गः, बागसेवनिया<br>भोपालम् (मध्यप्रदेशः) पत्राङ्कः -462043 |
| दूरभाषः | - | 0755-2418043 |
| दूरप्रैषः | - | 0755-2418003 |
| वै.पत्रम् | - | rsks_bhopal@yahoo.com |
| जालपुटम् | - | csu-bhopal.edu.in |
| मुद्रकः | - | SM Systems, M.P. Nagar, Bhopal |

ISSN-2321-6948

प्रो. श्रीनिवास बरखेड़ी
कुलपतिः
केन्द्रीयसंस्कृतविश्वविद्यालयः
संसदः अधिनियमेन स्थापितः
( प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्,
भारतसर्वकारस्य शिक्षामन्त्रालयाधीनम् )




Prof. Shrinivasa Varakhedi
Vice-Chancellor
Central Sanskrit University
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan,
Under Ministry of Education Govt. of India)




# शुभाशंसा

केन्द्रीयसंस्कृतविश्वविद्यालय आभारताततपरिसरैः समस्ताः भारतीया भारतीः समेधयन् गैर्वाणवाणीशास्त्राणि सम्वर्धयंश्च विश्वस्मिन् विश्वे विश्रुतोऽस्ति। तत्परिसरेष्वन्यतमोऽयं भोपालपरिसरः सुरसरस्वतीसेवया सम्पूर्णं राष्ट्रं समुपास्ते।

एतत्परिसरं भूषयन्तो व्याकरणसाहित्यशिक्षाशास्त्राद्यनेकपारम्परिकविद्यासु कृतावगाहाः प्रो.जे.भानुमूर्तिमहोदयाः सुदीर्घपञ्चत्रिंशद्वर्षाणि यावदविश्रान्तसेवया सुरसरस्वतीमुपकुर्वाणाः सम्प्रति निदेशकपदमलङ्कुर्वाणा अचिरेण सेवानिवृत्तिं लप्स्यन्ते।

अस्मद्राष्ट्रियगौरवविभवभव्यायाः विबुधभारत्याः श्रियं सभाजयन्त्याः भोपालपरिसरस्याऽस्याऽऽराष्ट्रं ख्यातायाः 'राष्ट्री'ति वार्षिकसंस्कृतपत्रिकायाः प्रो.जे.भानुमूर्ति-अभिनन्दनविशेषाङ्कः सद्यः प्रकाश्यमानोऽस्तीति विदित्वा मोदमनुभवामि।

श्रीमतामाचार्यभानुमूर्तिमहोदयानां निवृत्त्युतरकालोऽपि सकलसौख्यसङ्कुलः स्यात्, तेषां कीर्तिकौमुदीं निखिले जगतीतले प्रकाशयन्तीयं 'राष्ट्री' भूयसा प्रकर्षेण प्रकाशमातनोत्वित्याशंसे।

(प्रो. **श्रीनिवासः वरखेडी**)
**कुलपतिः**

प्रो. डॉ. दामोदर शास्त्री
प्रोफेसर व अध्यक्ष
(राष्ट्रपति-पुरस्कृत)
संस्कृत-प्राकृत विभाग
e-mail : shrutganga@gmail.com

जैन विश्व भारती संस्थान
(मान्य विश्वविद्यालय)
पो. लाडनूं-341306 (जिला-नागौर, राज.)
मोबा.- 09571773477

क्रमांक :.......... दिनांक :

# शुभाशंसनम्

**(1)**

संस्थानीये च भोपाल-स्थिते परिसरे वरे।
निदेशकपदे नूनम्, नीतिविज्ञाः विराजिताः।।

**(2)**

देववाणीसुभाषायाः, सेवायां तत्पराः सदा।
विनयावनताश्चापि, धर्मश्रद्धासमन्विताः।।

**(3)**

शिक्षाशास्त्रविशेषज्ञाः, विद्वद्वर्गेऽपि विश्रुताः।
छात्रानुशासने दक्षाः, कुशलाः सुप्रशासने।।

**(4)**

निवृत्ते उचिते काले, सेवाकार्याद् यशोमयात्।
जीयासुः सुचिरं स्वस्थाः, द्राक्तरा भानुमूर्तयः।।

-इत्याशासे
दामोदर : शास्त्री

 ISSN-2321-6948

**प्रो. लक्ष्मीनिवास पाण्डेय**
निदेशक
केन्द्रीय संस्कृत विश्वविद्यालय
वेदव्यास परिसर, बलाहर, हि.प्र.




**Prof. L.N. Pandey**
Director
Central Sanskrit University
Veda Vyas Campus, Balahar, H.P.

# शुभाशंसन

प्रो. जे. भानुमूर्ति, केन्द्रीय संस्कृत विश्वविद्यालय (पूर्वतन राष्ट्रिय संस्कृत संस्थान) में सुदीर्घ सेवाकाल पूर्ण करके भोपाल परिसर से सेवानिवृत्त हो रहे हैं, इस अवसर पर उनका एवं उनके परिवार का उत्तरोत्तर मंगल कामना करते हैं।

भानुमूर्ति जी यथानाम भानुवत् (सूर्य के समान) तेजो मूर्ति हैं। आप प्रखर बुद्धि, हाजिर जवाबी, स्पष्ट वक्ता एवं सहयोगी प्रवृत्ति आदि गुणों के धनी हैं। आपके वैदुष्य से कई वर्षों तक भारत के विभिन्न प्रान्तों के छात्र लाभान्वित होते रहे हैं।

भानुमूर्ति जी से मेरा व्यक्तिगत एवं पारिवारिक सम्बन्ध पुराना है। इनके मामाजी श्री राममूर्ति जी केन्द्रीय विद्यालय तिरुपति में हमारे अंग्रेजी के अध्यापक थे। यद्यपि वे अंग्रेजी के अध्यापक थे पर भारतीय संस्कृति के अनन्य समर्थक थे। प्रतिदिन अंग्रेजी की कक्षा में भी तेलुगू साहित्य के पद्यों का लयबद्ध गान करके उद्धरण देते थे, जो कि संस्कृतनिष्ठ होते थे। उसके बाद तिरुपति विद्यापीठ में भानुमूर्ति जी शिक्षाशास्त्री कक्षा में मेरे पिता जी श्री चन्द्रशेखर पाण्डेय जी के छात्र रहे हैं और मैं उस समय व्याकरणाचार्य कक्षा का छात्र रहा। इन सम्बन्धों के कारण वे मेरे प्रति स्नेहभाव रखते रहे हैं। 1982-83 में मैंने तिरुपति विद्यापीठ में शिक्षाशास्त्री में प्रवेश लिया, तब वे श्री लालबहादुर शास्त्री विद्यापीठ से संस्थान के प्रथम शिक्षाचार्य बैच के छात्र रहे हैं। उसके अगले वर्ष 1983-84 में तिरुपति विद्यापीठ से मैंने शिक्षाचार्य उपाधि प्राप्त की। इस प्रकार दोनों ही शिक्षाशास्त्र के अध्येता रहे हैं।

तत्पश्चात् अन्य जगहों पर कार्य करके दोनों ही एक साथ 1987 में संस्थान में शिक्षाशास्त्र विभाग में व्याख्याता पद पर नियुक्त हुए, मैं लखनऊ परिसर में तथा मूर्ति जी जयपुर परिसर में। अपने सेवाकाल में मूर्ति जी कई परिसरों में सेवा दे चुके – जयपुर के बाद क्रमशः श्रृंगेरी, गुरुवायूर, पुरी, जम्मू तथा वर्तमान में भोपाल। इस अंतराल में यद्यपि हम अलग-अलग परिसरों में कार्य करते रहे किन्तु स्नेह सम्बन्ध लगातार सुदृढ़ होता रहा। बीच-बीच में विभिन्न गोष्ठियों कार्यशालाओं में मुलाकात होती रही।

इस प्रकार लगभग 35 वर्षों तक संस्थान के 6 परिसरों में सफलतापूर्वक सेवा कार्य करके भोपाल परिसर से निदेशक पद पर कार्य करते हुए सेवानिवृत्त हो रहे हैं। भानुमूर्ति जी अपनी सहृदयता, सहज स्वभाव एवं प्रखर परामर्शों के कारण हमेशा याद आते रहेंगे। इस अवसर पर आपके दीर्घायु एवं स्वस्थ जीवन के लिए अनन्त शुभकामनाएँ!!

(प्रो. लक्ष्मी निवास पाण्डेय)
निदेशक

**Prof. K. Bharathbooshan**
Former dean, Faculty of Education
SLBSN Sanskrit University
Katwariyasarai, NewDelhi-110016

# MESSAGE

It feels me an inestimable sense of pleasure to write few lines for the facilitation volume of Prof. J Bhanumurthy ji, who is a Guide, Friend, and Philosopher to many. In this very long list of his career, I am also one among them. Prof. J. Bhanumurthy has taught Educational Methodology and allied subjects, Sanskrit Literature throughout his service. I know him since I have joined in Sringeri, till this moment I cherish his loving guidance and blessings. He is a versatile and profound scholar of Sanskrit and Education. He is well versed in Classical Sanskrit Literature Great Epics, Vedas, Indian Philosophy, and a true lover of Ramayana.

He has worked in many parts of India and being a psychologist, very easily studies the mind of the individuals. A man of Spiritual Intelligence, followed his own style of life and enspired many to follow. Many this to describe to follow.

I take this opportunity to thank the organising committee members for giving me a space to say my feelings with limited words. My sincere prayers for him and his family members to be healthy, with lots of prosperity in his life.

# सम्पादकीयम्

अस्मद्राष्ट्रियगौरवविभवभव्यायाः विबुधभारत्याः संवर्धनाय केन्द्रीयसंस्कृतविश्वविद्यालयस्य भोपालपरिसरस्याराष्ट्रं ख्यातायाः 'राष्ट्री' इति वार्षिकसंस्कृतपत्रिकायाः प्रो.जे.भानुमूर्ति-अभिनन्दनविशेषाङ्कोऽयं संस्कृतसुधास्वादकानां पाठकानां पुरस्तात् पुरस्क्रियते।

केन्द्रीयसंस्कृतविश्वविद्यालयस्य भोपालपरिसरे निदेशकपदमलङ्कुर्वाणाः प्रो.जे.भानुमूर्तिमहोदया व्याकरणसाहित्यशिक्षाशास्त्राद्यनेकपारम्परिकविद्यासु कृतावगाहाः सुदीर्घपञ्चत्रिंशद्वर्षाणि यावदविश्रान्तसेवया सुरसरस्वतीमुपकुर्वाणाः सम्प्रति सेवानिवृत्तिं लभमानाः सन्तीति तेषां व्यक्तित्वकृतित्वप्रकाशनपरैः संस्मरणैः, विविधशास्त्रीयलेखैश्च सह शोभमानोऽयं पत्रिकाङ्कोऽवश्यं विद्वद्भिः संस्कृतानुरागिभिश्च सादरमवगाहयिष्यत इति विश्वसिमः ।

भारतीयविद्यापरम्पराशिक्षादीक्षिताः संस्कृतसंस्कृतिप्रवाहसंवाहकाः केन्द्रीय-संस्कृत-विश्वविद्यालयस्य भोपालपरिसरस्य यशस्विनो निदेशकाः प्रो. जे.भानुमूर्तिमहोदया व्याकरण-साहित्य-दर्शन-शिक्षाशास्त्रादिषु अनन्यसुलभपाण्डित्यमण्डिताः राष्ट्रियसंस्कृतसंस्थानमिति ख्यातपूर्वस्य केन्द्रीयसंस्कृतविश्वविद्यालयस्य आसेतुहिमाचलं विद्यमानेषु विविधपरिसरेषु नैजतपोनिष्ठसेवया अमरभारतीपरिवारमुपचक्रुः। इमे 15.03.1957 तमे दिनाङ्के आन्ध्रप्रदेशे लब्धजन्मानः पित्रोः श्रीमतीनागलक्ष्मम्मा-श्रीलक्ष्मी-नारायणजम्मलमडकयोः उत्सङ्गे वात्सल्यरसमनुभवन्तः लीलया बाल्यकालं यापयामासुः। तीर्णशैशवैः विहितोपनयनसंस्कारैः ब्रह्मचर्यं चरद्भिः तैः प्रतिष्ठितेभ्यो विद्यागुरुभ्यः साम्बमूर्तिशास्त्रि- मल्लुसोमयाजुलु-वीरेश्वरशास्त्रि-श्रीधरवाशिष्ठ- आरलिकट्टि-चन्द्रशेखरपाण्डेय- विनयकुमाररायप्रभृतिभ्यः पारम्परिकरीत्या व्याकरण-न्याय-साहित्यमीमांसा-वेदान्तशिक्षाशास्त्रादीनि अधीत्य अधीतिबोधाचरणप्रचारैः विद्यानां चतुर्दशत्वमन्वर्थीकृतम्।

प्रो. भानुमूर्तिमहोदयैः निजसेवाकाले शिक्षाशास्त्रे आचार्यत्वेन शिक्षाविभागाध्यक्षत्वेन परिसरनिदेशकत्वेन च नैजकार्यकुशलताद्वारा प्रशासनपटुताम् अनुशासननिष्ठतां च प्रमाणयद्भिः समानुरागपूर्वकम् आनुषङ्गिकानि शास्त्राण्यपि अधीतेभ्योऽध्यापितानि।

श्रीमत्या जे. जयलक्ष्मीत्यभिधया सुश्रूषाशीलया विदुष्या धर्मपरायणया गृहलक्ष्म्या सह रममाणः श्रीभानुमूर्तिमहोदयः गार्हस्थ्यमाचरन् वरुण-प्रत्याशाख्यौ सुयोग्यौ पुत्रौ प्राप।

शिवसूत्र-चारुचर्या-चित्रबन्धरामायणाख्यान् संस्कृतग्रन्थान् सम्पाद्य अधिगममनोविज्ञान-संस्कृतशिक्षणे मातृभाषाप्रभावादिग्रन्थान् प्रणीय सुरसरस्वती सम्वर्धिताऽनेन विदुषा। संस्कृत-तेलुगु-हिन्दी-आङ्ग्लादिभाषासु समानदक्षतां प्रमाणयद्भिः प्रो. भानुमूर्तिमहोदयैः विविधासु राष्ट्रियान्ताराष्ट्रियसङ्गोष्ठीषु शोधपत्राणि प्रस्तूय अनेकेषु शैक्षिककार्यक्रमेषु संसाधक-मुख्यातिथित्वेन अलङ्कृत्य अमरभारतीविजयवैजयन्ती चिरमुदञ्चिता।

आर्षपरम्परासंवाहकानां प्रो. जे.भानुमूर्तिमहोदयानां सरलनिराडम्बरमयं सम्पूर्णं जीवनं सत्यनिष्ठया, स्वाध्यायतपश्चर्यया, शास्त्रव्यसनतया वाग्देवीसमर्चनया च परिपूतमस्ति।

राष्ट्रीपत्रिकायाः प्रस्तुताङ्के भारतस्य विविधप्रान्तेषु प्रतिष्ठितेभ्यः केन्द्रीयसंस्कृतविश्वविद्यालयपरिसरेभ्यः, अन्याभ्यः संस्थाभ्यो, विश्वविद्यालयान्तरेभ्यो, देशान्तरेषु विद्यमानेभ्यश्च विद्वद्भ्यो विदुषीभ्यश्च प्राप्तानि विपुलानि भावव्यञ्जकानि संस्मरणानि महत्तराणि वैदुष्यजुष्टानि च शोधपत्राणि प्रकाशितानि सन्ति, तानि सर्वाणि प्रो.भानुमूर्तिमहोदयान् प्रति श्रद्धामादरं च प्रकाशयन्ति संस्कृतगौरवं वर्धयन्तीति जानीमः। विशिष्य केन्द्रीयसंस्कृतविश्वविद्यालयस्य मान्यानां कुलपतिवर्याणां प्रो.श्रीनिवासवरखेडी-महोदयानामाशीर्वचसा तथा च कुलपतिचराणां प्रो.के.बी.सुब्बरायुडुवर्याणां शिवाशंसनेन च नितरामेव पत्रिकाया अस्या गौरवं वर्धते। पत्रिकाया अस्याः स्वरुपावाप्तये यैः विद्वद्भिः संस्मरण-शोधपत्रादीनि प्रदत्तानि तेभ्य आधमर्ण्यं समर्पयामः । परिसरस्य निदेशकवर्येभ्यः, सर्वेभ्यः आचार्येभ्यः कर्मचारिभ्यश्च साधुवादान् वितनुमो यैः तत्तत्कार्येषु स्वीयोऽमूल्यः सहयोगः प्रदत्तः।

अन्ते परमात्मने अस्माकं भावपूतां नमोवाकं प्रस्तूय सर्वमपि मङ्गलमिह कांक्षामहे।

सम्पादकमण्डलम्

ISSN-2321-6948

# केन्द्रीय संस्कृत विश्वविद्यालय
# भोपाल परिसर

## उद्देश्य

- दुर्लभ प्राच्य ज्ञान को सुरक्षित करने की दृष्टि से अवहेलित तथा अतिविशिष्टसंस्कृतवाङ्मय की शाखाओं सहित संस्कृत के अध्ययन की पारम्परीण पद्धति में व्यवस्था करना।
- संस्कृत के अध्ययन-अध्यापन का प्रचार-प्रसार करना।
- संस्कृत अध्यापकों के प्रशिक्षण की व्यवस्था करना।
- संस्कृत शिक्षा पर प्रभाव रखने वाली अन्य भाषाओं तथा साहित्य के अध्ययन की सुविधा प्रदान करना।
- संस्कृत में प्राचीन तथा आधुनिक ज्ञान से सम्बद्ध मौलिक तथा अनूदित साहित्य का सम्पादन एवं प्रकाशन करना।
- ग्रन्थों तथा अनुसंधान सहायक सामग्री, जैसे-विषय-सामग्री, सूची संग्रह तथा पुस्तक सूची का प्रकाशन करना।
- पाण्डुलिपियों का संग्रह-संरक्षण तथा प्रकाशन करना।
- प्राचीन और अर्वाचीन पद्धतियों से संस्कृत वाङ्मय में अनुसंधान करना।

# मङ्गलाचरणम्

अहं दधामि द्रविणा हविष्मते सुप्राव्या यजमानाय सुन्वते।
अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्।
अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे।
सरस्वती देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने।
(अथर्ववेदः)

***

मध्यादाविर्भवन्ती सुरविभववतो भारतस्य प्रदेशाद्-
भेदानाम्भेदयित्री भुवनभयहरी संविधात्रीव धात्री।
येयं राष्ट्री स्वराष्ट्री निखिलजनमनोरञ्जयित्री पवित्री
साऽज्ञानध्वान्तहन्त्री जगति विजयतां सर्वदाऽऽनन्दयित्री।।

ISSN-2321-6948

# विषयानुक्रमणिका

## संस्मरणम् -

## व्याकरणश्रीः



## साहित्यश्रीः

## ज्यौतिषश्रीः



## धर्मदर्शनश्रीः

## शिक्षाशास्त्रश्रीः



## जैनदर्शनश्रीः

## हिन्दीश्रीः



## English Elegance

 ISSN-2321-6948

# जयपुर-विद्यापीठात्-शृङ्गेरी-विद्यापीठे जिगमिषूणां डॉ. भानुमूर्तिमहोदयानां सौप्रस्थानिकमभिनन्दनम्

**डॉ. दामोदर शास्त्री**
प्रतिनिधिः- जयपुरविद्यापीठीय
अध्यापकपरिषदः

(1)

न तेजो दिशि दक्षिणस्याम्,
करोति नित्यं कुमुदैः सुहृत्त्वम्।
न वारिजातान् मुदितान् विधत्ते,
अहो विचित्रः खलु भानुमूर्तिः।।

(2)

विधौ न दृष्टा प्रतिकूलताऽपि,
दोषाक्षये स्वोदयमीहते न।
सहस्य-वृत्तौ च सुवृद्धतेजाः,
अहो विचित्रः खलु भानुमूर्तिः।।

(3)

आदित्यतेजः प्रतिभासि-चन्द्रम्,
वैज्ञानिकाः संप्रति निर्दिशन्ति।
दोषाकरीयं क्षपयन् हि तेजः,
अहो विचित्रः खलु भानुमूर्तिः।।

(4)

विचित्ररूपाद् भवतो विमुक्ताः,
दशां विचित्रां वयमाप्नुवानाः।
भवद्वियोगेन च दुःखिताः स्मः,
दाक्षिण्यमाकर्ण्य तु सुप्रसन्नाः।।

***

# श्रीभानुमूर्तिर्बुधः

**प्रो. सूर्यमणिरथः**
आचार्यः, साहित्यविभागाध्यक्षश्च, केन्द्रीयसंस्कृतविश्वविद्यालयः
श्री सदाशिवपरिसरः, पुरी, ओडिशा।

१९९८ खीष्टाब्दे जुलाईमासे २९तमे दिनाङ्के मया राष्ट्रियसंस्कृतसंस्थानात् अध्यापकपदे योगदानाय नियुक्तिपत्रं प्राप्य कर्णाटकस्य शृङ्गेरीजनपदमासादितम्। तत्र श्रीराजीवगान्धीकेन्द्रीयसंस्कृतविद्यापीठमिति एकं शिक्षानुष्ठानमस्ति। तस्मिन् शिक्षानुष्ठाने संस्कृतसाहित्यविभागे मया तस्माद्दिनात् अध्यापना विहिता। तत्रानुष्ठाने शिक्षाशास्त्रविभागः समृद्धशाली महान् च भवति। तस्मिन् विभागे विद्यमानाः सर्वे अध्यापकाः विद्वांसः आसन्। अध्यापकेषु श्रीमान् भानुमूर्त्तिमहोदयः अन्यतमः। सुन्दरस्वास्थ्यः श्मश्रुलमुखः, दीर्घकायः, संस्कृताङ्गलोप्रभृत्यनेकासु भाषासु प्रगल्भवाक् सः सहसा दृष्टिमाहरति। तद्विषये एतदुच्यते चेन्नातिशयोक्तिर्भवति, यथा-

**सर्वाज्ञानतमोविनाशनपटुर्भास्वत्-शरीरद्युति-**
**दुर्स्थास्याम्बुजमोदकारिकृतिनामग्रेसरो धर्मवित्।**
**स्वं स्वं कर्म विधातुमृद्धमसकृत् सम्प्रेरयन् सर्वदा**
**शुद्धान्तःकरणो विराजतितरां श्रीभानुमूर्तिर्बुधः॥**

शृङ्गेरीपरिसरे साधरणप्रकोष्ठे (Common room) विश्रान्तिकाले तेन सह मम वहुषु विषयेषु गभीरा आलोचना समजायत। सः शिक्षाशास्त्रे अध्यापयन्नपि साहित्ये रुचिमानासीत्। समये समये रसगङ्गाधर-ध्वन्यालोकादीन् आदाय शास्त्रीयचर्चा आवयोर्मध्ये अभवत्।

अहं तत्रानुष्ठाने अध्यापयन् छात्रावासस्यापि अधीक्षकः आसम्। छात्रावासस्य कार्यपरिशीलनाय मया तत्र कियत्कालः याप्यते स्म। छात्रावासस्य प्रायशः सम्मुखभागे भानुमूर्त्तिमहोदयः भाटकगृहे परिवारेण सह न्यवसत्। सः यथा नीतिवादी तथा तस्य परिवारोऽपि। अतीवसरलजीवनयापनं तस्य व्रतमासीत्। कदाचित् कदाचित् तस्य गृहे कफिपानमपि क्रियते स्म। छात्रेषु यदि कश्चित् विपथगामी भवति तर्हि कठोरशासनेन सः उपयुक्तमार्गमानीयते।

चतुर्णां वर्षाणामनन्तरं शृङ्गगिरितः अहं स्थानान्तरनिर्देशं प्राप्य उत्कलराज्ये पुरीनगरे विद्यमानं श्रीसदाशिवपरिसरं प्रति समागतः। श्रीमान् भानुमूर्त्तिरपि तदनन्तरं शृङ्गेरीतः

श्रीसदाशिवपरिसरं प्रति समागतः। शिक्षाशास्त्रविभागे अध्यक्षत्वेन कार्यं सुचारुतया संपादयन् सः छात्रैः अध्यापकैश्च प्रशंसितः अभवत्। आर्थिकदृष्ट्या दुर्वलच्छात्राणां सहायक आसीत् भानुमूर्त्तिमहोदयः, अधुनापि मया स्मर्यते यत् शिक्षाशास्त्रविभागे तेन अनेकानि संस्कारमूलानि कार्याणि कृतानि, येन सर्वे छात्राः उपकृताः आसन्। तदानीं श्रीसदाशिवपरिसरस्य नवीनभवनं निर्माणाधीनमासीत्, तेन हेतुना परिसरस्य संपूर्णं कार्यं वडदाण्ड (Grand Road) मध्ये विद्यमानायाम् एकस्यां धर्मशालायां प्रचलदासीत्। शिक्षाशास्त्रविभागस्य कृते अपेक्षितस्थानापेक्षया न्यूनतरे स्थानेऽपि विभागाध्यक्षत्वेन विद्यमानेन तेन विभागीयच्छात्राः शृङ्खलिततया नियन्त्रिता आसन्। एतेन तस्य दक्षता प्रमाणिता भवति।

अधुना भोपालपरिसरे निदेशकत्वेन विद्यमानः सः पूर्वानुभूतिं पाथेयीकृत्य कार्यं परिचालयति। आगामिनि मार्चमासे सः कार्यादवसरं प्राप्नोतीति ज्ञातम्। सेवानिवृत्त्यनन्तरं तस्य भाविजीवनं सुखमयं भवत्विति आशास्य पुनः काम्यते यत्-

**श्रीनीलकन्दरे राजज्जगन्नाथः परात्परः।**
**दद्यात् स्वास्थ्यं च सौख्यञ्च बुधाय भानुमूर्तये।।**

***

# प्रो.जे.भानुमूर्त्यभिनन्दनम्

प्रो. कमलचन्द्रयोगी

**मङ्गलाचरणम्**

गणेशं शारदां नत्वा,कृत्वा च गुरुवन्दनम्।
स्मारं स्मारं लिखाम्येव भानुमूर्त्यभिनन्दनम्।1।
व्यक्तित्वं भानुमूर्तीनां स्मृतयः सन्ति ता यथा।
व्यक्तित्वं च कृतित्वञ्च तथैव लिख्यते मया।2।
योगिकमलचन्द्रेण, यथाकालं यथामति।
इतः परं शुभं श्रेष्ठं व्यक्तित्वं परिचायकम्।3।
शोभते भानुमूर्तिनां ललाटं रक्तबिन्दुना।
आन्तर्जाले स्वचित्रे तैः धत्ता रक्ताङ्गरक्षिका।4।
इमे शाक्ताः प्रतीयन्ते,रक्तवस्त्रादि-धारणात्।
शारदायाः वरं प्राप्य, विद्वान्सः सन्ति शोभनाः।5।
परिसरे हि मुख्यत्वं वैदुष्यं शास्त्रकौशले।
विलक्षणा पण्डितास्ते, शिक्षाशस्त्रे विचक्षणाः।6।
प्राधान्यं वर्तते भानोः ब्रह्माण्डात्मा स्वरुपतः।
नवग्रहेषु सुष्ठुत्वं प्रामुख्यं सौरमण्डले।7।
परिसरे हि भोपाले निदेशकस्वरूपतः।
सर्वाचार्य-वरिष्ठत्वात्,प्रामुखाः भानुमूर्तयः।8।
वाक्-चतुष्टय-वेत्तारः शिक्षामनोविदस्तथा।
बहुविद्-व्यक्तिता श्रेष्ठा, भानुमूर्तिषु राजते।9।
तेलगुं कन्नडां हिन्दीमाङ्ग्लभाषाञ्च संस्कृतम्।
मनोविज्ञान-शिक्षां च जानन्ति भानुमूर्तयः।10।
नैकशास्त्रनिष्णातास्ते जे.भानुमूर्तयः शुभाः।
श्लाघनीयाः हि विद्यन्ते शैक्षणिक-प्रशासकाः।11।
ज्ञानविज्ञाननैपुण्यात्सकलानां हितैषिणः।

शिक्षाशास्त्रविशेषज्ञाः ज्ञाने भानुवदुज्ज्वलाः। 12।
वाग्मिनः सन्ति तस्मात्ते वदन्ति सारगर्भितम्।
दूरवाग्व्यवहारेषु हितां मिताञ्च वाग्मिताम्। 13।
धारयन्त्येव विद्वान्सः आचार्या भानुमूर्तयः।
वरिष्ठाः बन्धवः सन्ति, सौभाग्यशालिस्तथा। 14।
साहित्यरसिकाः सन्ति शास्त्राणां मर्म-सद्विदः।
वैदुष्यं भानुमूर्तीनां, दृष्टं जयपुरे मया।15।
दूरवागल्पवक्तारः हितं मितञ्च भाषिणः।
संसिद्धा वाग्मिता तेषां स्वतःवाग्व्यवसायतः16।
कृतित्वं भानुमूर्तीनाम् -
एकं प्रकाशितं ह्यस्ति मनोविज्ञान-पुस्तकम्।
शिव-सूत्रं समाधृत्य प्रकाशितं हि पुस्तकम्। 17।
शोभनाः कृतयः सन्ति लिखिताः भानुमूर्तिभिः।
प्राशस्त्यं भानुमूर्तीनां स्थानं विद्वत्सु वर्तते।18।

***

 ISSN-2321-6948

# भानुमूर्तिः तपोमूर्तिः मनस्वी वाग्विदां वरः

**प्रो. सुबोधशर्मा**
व्याकरणविभागाध्यक्षः
केन्द्रीयसंस्कृतविश्वविद्यालयः, भोपाल परिसरः

मनोविज्ञानतत्त्वज्ञः शिक्षाशास्त्रविचक्षणः।
नैकशास्त्रगुणग्राही मनस्वी वाग्विदां वरः।।1।।

वेदोपनिषदां विद्वान् मीमांसान्यायपण्डितः।
साहित्यशास्त्रमर्मज्ञः मनस्वी वाग्विदां वरः।।2।।

शास्त्राऽनुचिन्तने लग्नः ज्ञानी ज्ञानाप्तये सदा।
ज्ञानब्रह्म परं यस्य मनस्वी वाग्विदां वरः।।3।।

छात्रवात्सल्यभावेन छात्रसन्मार्गदर्शकः।
निश्छलो निरहंकारो मनस्वी वाग्विदां वरः।।4।।

तुच्छं मानञ्च सम्मानं लौकिकं योऽभिमन्यते।
समः शत्रौ च मित्रे च मनस्वी वाग्विदां वरः।।5।।

ईर्ष्यामात्सर्यशून्यो यो हरिसेवापरायणः।
मितभाषी महात्मायं मनस्वी वाग्विदां वरः।।6।।

शुचिःप्रशासने मुख्यः मुक्तः शासकदुर्गुणात्।
भयलोभविनिर्मुक्तः मनस्वी वाग्विदां वरः।।7।।

निर्भीकतां यो न जहाति विद्वान्,
शास्त्रानुसन्धान विधौ पटीयान्।
स्वच्छः कठोरो मधुरश्च धीमान्,
श्रीभानुमूर्तिर्मनसा बलीयान्।।8।।

भातीह कीर्तिर्धवला च देशे,
यस्यानुरागो हरिपादपद्मे।
दृढः स सत्कर्मरतः सुधर्मा,
श्रीभानुमूर्ति यशसा महीयान्।।09।।

सत्यानुरागी सदसद्विवेकी,
गुरौ हरौ यस्य समानभक्तिः।

सत्यानुगामी शुभकार्यकर्ता,
श्रीभानुमूर्तिर्वचसा द्रढीयान्।।10।।

नुता सदा येन हि शारदाम्बा
नुतश्च छात्रैः विबुधैः स्वयं यः
निःसङ्गभावेन समानदृष्टिः,
श्रीभानुमूर्तिः क्रियया गरीयान्।।11।।

सत्प्रियः सत्यनिष्ठो हि ज्ञानी भक्तो दृढव्रतः ।
भानुमूर्तिः तपोमूर्तिः मनस्वी वाग्विदां वरः।।12।।

***

# स जयतु यशस्वी भानुमूर्तिर्मनस्वी

**प्रो. हंसधर झा**
आचार्योऽध्यक्षश्च, ज्योतिषविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः, भोपालपरिसरः (मध्यप्रदेशः)

दिव्यगुणगणमण्डितस्य वाल्मीकि-व्यास-कपिल-कणाद-गौतम-याज्ञवल्क्यादिमहर्षीणान्तपोभूमेर्विश्ववन्द्यपावनभारतदेशस्य हृदयस्थल्यामवस्थिते मध्यप्रदेशराज्ये केन्द्रीयससंस्कृतविश्व- विद्यालयस्य भोपालपरिसरे निदेशकपदमलङ्कुर्वाणस्य व्याकरण-साहित्य-वेदान्त-दर्शन-शिक्षाशास्त्र- धर्मशास्त्र-ज्योतिषा- युर्वेदादि-विविधशास्त्र-मर्मज्ञ-लोभ-मत्सर-द्वेषादिदोषविमुक्त-वीतराग-सत्यनिष्ठ- समदर्शि-यशोधनच्छात्रानुरागरञ्जित-कुशलप्रशासक-कर्मयोगिनः आचार्यभानुमर्ति-महाभागस्य सेवानिवृत्त्यवसरे प्रतिवर्षम्प्रकाश्यमानाया राष्ट्रीतिनामधेयायाः परिसरवार्षिकपत्रिकायाः परिसरीयाश्श्रीमूर्तिवर्यस्याभिनन्दनग्रन्थरूपेण प्रकाशनमिच्छन्तीत्यमन्दानन्दसन्दोहविषयः। तदत्र श्रीमूर्तिवर्यस्याभिनन्दनग्रन्थ-प्रकाशनरूपसारस्वतयज्ञे ममापि काश्चन शब्दाहुतयः स्युरितिधिया लिखितुं प्रवृत्तोऽस्म्यहमल्पज्ञो दैवज्ञः। यतः-

**क्व नैकशास्त्रमर्मज्ञो भानुमुर्तिर्गुणाकरः।**
**क्व सामान्योऽल्पशास्त्रज्ञो दैवज्ञोऽहं गुणार्चकः।।**
**तथापि प्रयते मोहाल्लिलिखितुं श्रद्धयान्वितः।**
**मूर्तिवर्यस्य सम्बन्धे ह्यनुभूतं यथा तथा।।**

वस्तुतः **"स जातो येन जातेन याति वंशः समुन्नतिम्"** सूक्तिमिमाञ्चरितार्थयमानः पुण्यभूमौ आन्ध्रप्रदेशे सौम्यनामगौरवसंवत्सरे शिवाक्षिचन्द्राभ्रलोचनप्रमिते (2013) विक्रमसंवत्सरे, वस्वद्रिनागचन्द्रमिते (1878) शकाब्दे, मीनराशिस्थिते भगवति भास्करे, उत्तरायणे, शिशिरर्तौ, मासोत्तमे फाल्गुने मासे शुक्ले पक्षे, चतुर्दश्यान्तिथौ, अश्वाक्षाङ्कनिशाकरप्रमिते क्रीष्टाब्दे, मार्चमासे, पञ्चदशे (15.03.11957 ई.) दिनाङ्के, भृगुवासरे श्रीमतीनागलक्ष्मा-श्रीलक्ष्मीनारायणजम्मलमडकयोर्गृहे पुत्ररत्नरूपेण समुत्पन्नोऽयं प्रतिभासम्पन्नो महात्मा शैशवादेव यथासमयं प्राथमिकीं शिक्षां समवाप्य निजकुलस्य पररम्परानुगुणं शास्त्राध्ययनमारभत। लोकोक्तिरियमत्यन्तं प्रसिद्धा यत् "बाढै पूत पिता निज धर्मा" अर्थात् पित्रोः पुण्यबलेन पुत्रस्याभ्युन्नतिर्भवतीति। पित्रोः पुण्यबलेन आचार्यभानुमूर्तिहोदयश्शास्त्राणामध्ययनक्रमे सहजतयैव लब्धप्रतिष्ठितानां शास्त्रमूर्तीनां गुरूणां सान्निध्यमवाप्तवान्। तत्र हि पण्डितप्रवरसाम्बमूर्तिशास्त्रि-मल्लुसोमयाजुलु-वीरेश्वरशास्त्रि- श्रीधरवसिष्ठ-आरलिकट्टि-चन्द्रशेखरपाण्डेय-विनयकुमाररायप्रभृतिभ्यश्शास्त्रमूर्तिभ्यो विद्यागुरुभ्यो व्याकरण-साहित्य-

वेदान्त-मीमांसा-दर्शन-शिक्षाशास्त्र-धर्मशास्त्र-ज्योतिषायुर्वेदादिविविधशास्त्राण्यधीत्याचिरेणैव कालेन श्रीमूर्तिवर्यो गुरुत्वमध्यगच्छत्। असौ कर्मयोगी निजविशिष्टप्रतिभया राष्ट्रियसंस्कृतसंस्थानस्य शिक्षाशास्त्रविभागे सेवामवाप्य जयपुर-शृङ्गगिरि-गुरुवायूर-पुरी-जम्मू- भोपालनगरेषु स्थितेषु संस्थानपरिसरेष्वाचार्यत्वेन विभागाध्यक्षत्वेन च स्वीयं दायित्वम्परिपालयन् सम्प्रति भोपालपरिसरस्य निदेशकत्वेन प्रतिष्ठितोऽस्तीति परिसरस्यास्य नितान्तङ्गौरवायैव।

अथापि सारस्वतसाधनातत्परेणाचार्यप्रवरमूर्तिवर्येण शिवसूत्रं, चारुचर्या, चित्रबन्धरामायणञ्चेति त्रयो ग्रन्थाः सम्पादितास्तथा अधिगममनोविज्ञानं, संस्कृतशिक्षणे मातृभाषाप्रभावश्चेति द्वौ मौलिकग्रन्थौ रचितौ। पुनश्च नैकानि शोधपत्राणि, बहवो निबन्धाश्च सन्ति प्रकाशिता मूर्तिमहोदयस्य यत्सर्वं खलु शास्त्राध्येतॄणामुपकारायैव। एवं हि राष्ट्रियान्ताराष्ट्रियसङ्गोष्ठीषु शोधपत्राणि प्रस्तूय, नैकेषु शैक्षिककार्यक्रमेषु च संसाधक-मुख्यातिथित्वादिरूपेणोपस्थाय आचार्योऽसौ तत्तत्कार्यक्रमाणां गौरवं समवर्धयत्।

एवं हि मूर्तिवर्यस्य यथा सारस्वतजीवनं संलक्ष्यते सफलं तथैवास्य गार्हस्थजीवनमपि विद्यते परिपूर्णम्। यतः-

**श्रीभानुमूर्तिवर्यस्य रूपशीलगुणान्विता।**
**श्रीमती-जयलक्ष्मीति नामिका गिरिजोपमा ।।**
**धर्मपत्नी सत्यनिष्ठा कुलधर्मानुगामिनी।।**
**भार्या पतिप्रिया नित्यं पतिसेवापरायणा।**
**सदाचारी सुपुत्रोऽस्ति वरुणः कुलभूषणः।**
**शुभशीलयुता पुत्री प्रत्यूषाख्या सुलक्षणा।।**
**द्वावप्येतौ सुयोग्यौ स्तः पित्राज्ञापालकौ सदा।**
**तेनास्य सफलं मन्ये गार्हस्थञ्चापि जीवनम्।।**

किमधिकं वच्मि, प्रो.जे.भानुमूर्तिमहोदयः कार्यकुशलता-प्रशासनपटुता-अनुशासननिष्ठता-समदर्शिता-सहृदयता-प्रियवक्तृता-धीरता-गभीरता-सत्यनिष्ठताद्यनेकोत्कृष्टगुणानां विग्रहोऽ स्तीतिकथने नातिशयोक्तिः।अतः-

**गणयति न हि विद्वान् सात्त्विको लौकिकं स्वं,**
**विहरति सततं यो वेदविद्यावनेन्द्रः।**
**बुधजनसमुपेतः कानने शास्त्ररूपे**
**स हि जयतु यशस्वी भानुमूर्तिर्मनस्वी।।**

एवं हि प्रार्थये भगवन्तम्भूतभावनम्भवानीपतिङ्कालकालम्महाकालं यद् गणनिलयस्याचार्च-प्रवरस्य प्रो.जे.भानुमूर्तिमहोदयस्य सेवानिवृत्यन्तरमपि चिरकालिकं स्वस्थजीवनं विद्याविनोदमयं सर्वविधसुखोपेतम्भक्तिमयञ्च भूयादिति शम् ।।

स्नेहाकाङ्क्षी शुभेच्छुः-

प्रो.हंसधर झाः

***

ISSN-2321-6948

# विद्याविनयमूर्तिर्भानुमूर्तिः

**प्रो. सनन्दनकुमारत्रिपाठी**
साहित्यविभागाध्यक्षः
केन्द्रीयसंस्कृतविश्वविद्यालयः, भोपालपरिसरः, भोपालम्

**आन्ध्रे लब्धजनिः सुधार्मिककुले विद्यां समभ्यस्य यः**
**साहित्यादिवराननेकविषयानालोड्य शास्त्रव्रती।**
**वैदुष्यं समुपार्ज्य शिष्यनिकरं प्राध्यापयत् कोविदो**
**ग्रन्थान् संरचयन् स राजतितरां जे. भानुमूर्तिर्बुधः॥**
**पवित्रकुलसम्भूतिर्विद्याप्रीतिर्निसर्गतः।**
**नानाशास्त्रसुपाण्डित्यं ग्रन्थनिर्माणकौशलम्।।**
**आचार्यत्वं सुवाग्मित्वं धर्मनिष्ठत्वमेव च।**
**गुणास्ते सन्ति बहवो गुरो ! तुभ्यं नमो नमः॥**

15.03.1957 तमे ख्रीष्टदिनाङ्के आन्ध्रप्रदेशे पवित्रब्राह्मणकुले लब्धजन्मनां व्याकरणसाहित्य-दर्शन-शिक्षाशास्त्रादिविविधशास्त्रपारङ्गतानां परमविदुषां ज्ञानमूर्तीनां पूज्यचरणानां भोपालपरिसरनिदेशकानां प्रो. जे.भानुमूर्तिवर्याणां गुणकीर्तनं भगवदीयगुणकीर्तनमिव पवित्रं पुण्यावहं कृत्यमिति न प्रमाणसापेक्षं प्रेक्षावताम्। भगवती गीता प्रमापयत्येतादृशानामेव तेजस्विनां भगवत्तेजोंऽशसम्भवत्वम्-

**यद् यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।**
**तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्॥** गीता 10.41

बाल्यकाल एव भवतां मनसि पूर्वजन्मनः संस्कारवशात् संस्कृतविद्याध्ययनाभिलाषः समजनि। यद्यपि भवतां कुले परिवारजनाः सम एवाधुनिकविद्याध्ययनपरा आसन् तथापि भवद्भिः संस्कृताध्ययनमेव आरब्धम्। भगवत्कृपावशतो महद्भ्य आचार्येभ्यः श्रीसाम्बमूर्तिशास्त्रि-मल्लुसोमयाजुलुवीरेश्वरशास्त्रि-श्रीधरवशिष्ठ-अरलिकट्टि-चन्द्रशेखरपाण्डेय-प्रभृतिभ्यः व्याकरण-साहित्य-दर्शन-शिक्षाशास्त्रदयो विविधाः पारम्परिकपवित्रविद्या भवद्भिः समधीताः। तथापि

भवदीया ज्ञानपिपासा न शान्ता तर्हि हिन्द्याङ्ग्लादिभाषास्वपि दक्षत्वमासाद्य एम्.ए.प्रभृतयः परीक्षाः समुत्तीर्णाः।

शिक्षाशास्त्रविभागेऽपि व्याकरणसाहित्यदर्शनाद्यभिज्ञा विद्वांसोऽध्यापका भवेयुरिति धिया तात्कालिकराष्ट्रियसंस्कृतसंस्थानस्य निदेशकाः सुगृहीतनामधेयाः आचार्यमण्डनमिश्रवर्याः भवदीयेन वैदुष्येण विनयेन च प्रभाविताः जयपुरपरिसरे शिक्षाशास्त्रविभागे भवदीयां नियुक्तिं विधायादिष्टवन्तो यद् भवद्भिः शिक्षाशास्त्रं सुदुर्लभव्याकरण-दर्शन-साहित्यादिशास्त्र-निहितज्ञानालोकेनालोकनीयमिति। तेषां विद्यापरिव्राजकानामादेशं भगवदीयमादेशमिवाङ्गीकृत्य भवद्भिः शृङ्गेरीपरिसरे गुरुवायूरपरिसरे पुरीपरिसरे जम्मूपरिसरे भोपालपरिसरे च शिक्षाशास्त्र-विभागे आचार्य-विभागाध्यक्षादिपदमलङ्कुर्वद्भिः शिक्षाशास्त्रवल्ली स्वज्ञानसुधाधारयाऽभिषिक्ता संवर्धिता च। अद्यत्वे भवद्भिरध्यापिता असंख्यविद्यार्थिनो निखिलभारते विभिन्नपदेषु प्रतिष्ठिताः भवदीयां विद्याकीर्तिं प्रसारयन्तीति अविच्छिन्नरुपेण भवत्संरोपिता शास्त्रलताऽनुदिनं वरीवृद्ध्यते। नूनमेव शिष्यपरम्परया भवदीया शास्त्रकीर्तिर्यावच्चन्द्रदिवाकरौ स्थास्यत्येव। भवादृक्षाणां विदुषां प्रशस्तावेव प्रोच्यते-

**जयन्ति ते सुकृतिनः शास्त्रसिद्धा मनीषिणः।**
**नास्ति येषां यशः काये जरामरणजं भयम्।।**

भवद्भिरध्यापनेन सममेव विविधग्रन्थानामपि सम्पादनं लेखनञ्च कृत्वा स्वीयं शुभ्रं यशो विस्तीर्णं संस्कृतजगति। तत्र शिवसूत्रम्, चारुचर्या, चित्रबन्धरामायणम्, अधिगममनोविज्ञानम्, संस्कृतशिक्षणे मातृभाषाप्रभाव इत्यादयो भवदीया ग्रन्था नैके शोधनिबन्धाश्च हठादाकर्षन्ति सचेतसां सुधियां चेतांसि।

व्याकरण-न्याय-साहित्य-विभिन्नदर्शनादिषु शास्त्रेषु भवन्मनसि वरीवृत्यतेऽगाधा श्रद्धा। भवतां प्रथमः साक्षात्कारो मया 2009 तमे ख्रीष्टाब्दे भोपालपरिसर एव कृतः। अहं भवद्भिः साकं साक्षात्कर्तुमधिशिक्षाशास्त्रविभागं यदाप्यगच्छ तदा भवतां हस्तयोः कमपि दुर्लभदर्शनानुभूति प्रकाशपञ्जदश्यादि व्यलोकयन्। सर्वदैव भवन्तः शास्त्राध्ययन-भगवत्स्तोत्रपाठ- श्रवणादिपरायणा दरीदृश्यन्ते। भवतां भगवति श्रीरामेऽगाधा श्रद्धा मयावलोकिताऽनुभूता च। प्रायः प्रत्यहं भोपाले भगवतः श्रीरामचन्द्रस्य दर्शनार्थं भवन्तो बागमुगलियास्थ-शिक्षककांग्रेसाभिधाने महालये विद्यमानं श्रीरामन्दिरं व्रजन्ति। भवद्भिः बहुशो मयाऽपि भगवतः श्रीरामस्य दर्शनसौभाग्यमलम्भि। यदा कदाऽहं श्रीरामेश्वरमहालये विराजमनस्य पञ्चमठस्थस्य महादेवस्य दर्शनाभिलाषं प्राकटयं तर्हि

सत्यपि समयाभावे भवन्तो महादेवदर्शनाय नूनमेवाऽव्रजन्। प्रायोऽधिमार्गं रसगङ्गाधरादिग्रन्थानां दुरुहस्थलचर्चा भगवद्गुणमाहात्म्यसम्बद्धान्यपुराणादिशास्त्रचर्चा वाऽस्माकं विमर्शविषयोऽभूत्। अनेकशो भवन्तो मदीयं शारीरिककष्टं ज्ञात्वा गृहमागत्य यौगिकमासनं प्राणायामादिकं योगमुद्रां च शिक्षितवन्तः इति भवतामधमर्ण एवायं जनः।

परिसरनिदेशकत्वेन भवतां व्यवहारः सर्वथा साधुत्वपूर्णः स्मरणीयश्च। सर्वदा साक्षात्कारे सति भवतां सहृदयतापूर्णेन सद्व्यवहारेण निर्मलनिश्छलवाग्विनिमयेन चाऽस्मकं स्वान्तं नितान्तं मुग्धमेव बोभवीति। भवन्तः समेषामेव शिक्षकाणां छात्राणामन्येषाञ्च परिसरसदस्यानां सर्वदैव हितं चिन्तयन्ति। वस्तुतो भवन्तो विद्याविनयमूर्त्तयः।

2022 खीष्टाब्दे मार्चमासे एकत्रिंशे दिनाङ्के भोपालपरिसरस्य निदेशकपदतो भवन्तः सेवानिवृत्तिं लभन्त इति भवदीयं दीर्घायुष्यं सततमारोग्यं सर्वविधं पारिवारिकमभ्युदयञ्च सर्वलोकशरण्यमकारणकरुणावरुणालयं भगवन्तं श्रीरामं भगवतीं पराम्बां जगज्जननीं जानकीञ्च प्रार्थये। इति शम्।

***

ISSN-2321-6948

# अनुशासनप्रियाः आचार्याः

**प्रो. श्रीगोविन्दपाण्डेयः**
आचार्यः, शिक्षाशास्त्रविभागः
केन्द्रीय संस्कृत विश्वविद्यालयः, भोपालपरिसरः, भोपालम्

आचार्यैः सह साक्षात्परिचयः 1988 तमे वर्षे तदानींतनकेन्द्रीयसंस्कृतविद्यापीठे जयपुरे अन्तर्विद्यालयीययुवसमारोहे अभवत्। तदानीम् अहं गुरुवायूरपरिसरस्य शास्त्रिकक्षायाः छात्रः आसम्। आचार्याः मम विषये पूर्वतः जानन्ति स्म, यतोहि तेषां मातुलः श्रीमन्तः डी.राममूर्तिमहोदयाः तिरुपतिस्थकेन्द्रीयविद्यालये आङ्ग्लविषयस्य स्नातकोत्तराध्यापका आसन्। तेषु दिवसेषु केन्द्रीयविद्यालयेन सह तिरुपतिविद्यापीठीयाध्यापकानां सम्पर्कोऽपि आसीत्। मम अध्ययनं किञ्चित्कालपर्यन्तं तिरुपतिस्थकेन्द्रीयविद्यालये जातम्। अस्मत्पितृचरणाः आचार्याः चन्द्रशेखरपाण्डेयमहोदयाः तिरुपतिस्थकेन्द्रीयविद्यापीठे शिक्षाशास्त्रविभागे कार्यरता आसन्। आचार्याः भानुमूर्तिमहोदयाः तेषु दिनेषु शिक्षाशास्त्रिकक्षायां पठन्तः आसन्।

यदाऽहं पुरी परिसरे आसम् तदानीम् आचार्याणां विभागाध्यक्ष्ये कार्यं कृतवान्। स्वानुशासने तत्पराः अन्यान् अपि अनुशासनं रीतिं नीतिं च बोधयन्ति स्म। विशेषरूपेण पुरी परिसरस्य छात्राः प्रभाविताः आसन्। विभागीयक्रियाकलापेषु महदुत्साहेन भागं गृह्णन्ति स्म। तत्रापि छात्राणां सौविध्यं यथा स्यात् तथा प्रयत्नं कुर्वन्ति स्म। विभागीयकार्याणां संयोजनं बहूत्तमरीत्या सावधानेन कुर्वन्ति स्म। संस्कृतमाध्यमेन शिक्षयितुं विभागे सर्वान् प्रेरयन्ति स्म। शिक्षाशास्त्रि-छात्राणाङ्कृते संस्कृतसाहित्यस्य व्याकरणस्य सामान्यज्ञानं यथा वर्धेत तथा प्रयत्नं कुर्वन्ति स्म।

आचार्याः जयपुर-शृङ्गेरी-गुरुवायूर-पुरी-जम्मू-भोपालपरिसरेषु शिक्षाशास्त्रविभागे जयपुरपरिसरे तथा शृङ्गेरी परिसरे साहित्यविभागे अपि योगदानं दत्तवन्तः। भोपालपरिसरे आचार्याः शिक्षाशास्त्रि-शिक्षाचार्य-कक्ष्यासु अध्यापनद्वारा बहूनां छात्राणां शोधमार्गदर्शकरूपेण च योगदानं कृतवन्तः। विभागाध्यक्षरूपेण निदेशकरूपेण बहुकुशलतया कार्याणि साधितवन्तः। बृहत्तमविभागे विभिन्नाः विचाराः भवन्त्येव तथापि आचार्याः सर्वैः सह समन्वयं स्थापयित्वा शैक्षिकगतिविधीः सञ्चालितवन्तः।

कालिदास अकादमी, उज्जैन, क्षेत्रीय शिक्षा संस्थानम्, भोपालम्, बरकत-उल्लाह-विश्वविद्यालयः, भोपालम्, रविन्द्रनाथटैगोरविश्वविद्यालयः, भोपालम्, पतञ्जलिसंस्कृतसंस्थानम्, भोपालम् इत्यादिषु एवम् अन्यासु बह्वीषु संस्थासु आचार्याणां भाषणं प्रवचनकार्याणि शास्त्रीय दृष्ट्या भवन्ति स्म। आन्ध्रविश्वविद्यालयतः विद्याप्रवीणोपाधिं धृत्वा राष्ट्रियसंस्कृतसंस्थानात् शिक्षाशास्त्रे शिक्षाचार्यविद्यावारिधिं प्राप्य साहित्य-व्याकरण-दर्शन-ज्योतिषादिशास्त्रेषु कृतभूरिपरिश्रमाः सर्वदा स्वाध्यायेऽपि रताः स्वीयज्ञानकौशलस्य परिचयं प्रदत्तवन्तः। विभिन्नेषु कार्यक्रमेषु परिसरे एवं प्रतिष्ठितासु संस्थासु यथा दरभंगासंस्कृतविश्वविद्यालये, श्रीजगन्नाथसंस्कृतविश्वविद्यालये, देहलीस्थे श्रीलालबहादुर-शास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालये, तिरुपतिस्थराष्ट्रियसंस्कृतविश्वविद्यालये, उज्जैनस्थ-पाणिनीय-संस्कृत एवं विश्वविद्यालये तथा अन्येषु बहुषु विश्वविद्यालयेषु आचार्या शैक्षिकगतिविधिषु योगदानं दत्तन्वतः।

मातृ देवो भव, पितृ देवो भव, आचार्य देवो भव इति उपनिषद्वाक्यम् अनुसरन्तः सर्वदा मातृ-पितृ-गुरुसेवायां तत्परा आसन्। मातुः अस्वास्थावस्थायां महता धैर्येण क्षमयाः आत्मानं संनियम्य तस्याः सेवायां संलग्नो भूत्वा स्वास्थ्यरक्षणं कृतवन्तः। तथैव कालेन पुत्र्याः विवाहसंस्कारं सम्पाद्य पुत्रस्य प्रगतिं प्रति प्रवृत्ताः सन्ति।

एवमेव स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् इति उपनिषद्वचनमनुसृत्य स्वजीवनं यापयन्तः सन्ति। सुरभारत्याः सेवां सर्वदा साधयितुं भगवतः महाकालस्य परमानुग्रह एतेषु आचार्येषु प्रसरतु इति कामये। सेवानिवृत्तिकालात्परमपि एतादृशकर्मसु कालं यापयन्तः शतमानं जीवन्तु इति।

***

# पुनश्च भूयोऽपि नमो नमस्ते

**प्रो. जयकृष्णन्**
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविश्वविद्यालयः
शिक्षाशास्त्राध्यापकः

**आचार्यभानुमूर्तिवर्याणां सान्निध्ये**
**कञ्चित्कालम् अध्यापयितुं लब्धावसरोऽहं**
**तेषां स्नेहमयं व्यवहारं सदा स्मरामि।**
**सादरम् आचार्याणां सविधे निवेदयामि,**
**स्वीयशिक्षामनोविज्ञानाध्यापनस्य दीर्घ-**
**कालानुभवाधारेण पाश्चात्त्यं भारतीयञ्च**
**परिप्रेक्ष्यपूर्वकं 'मनोविद्यादीपिका' कामपि**
**प्रोज्ज्वाल्यन्ताम् इति।**

भगवतो चन्द्रकलार्धचूड़स्य परमया असीमया च दयया सपरिवारम् एहिकं पारलौकिकञ्च कल्याणमवाप्य शिक्षाजगद्भानुमानिव भासेत इति शम् ।

***

# अभिनन्दनीयाः आचार्याः

**प्रो. सोमनाथ साहु**
आचार्यः, शिक्षाशास्त्रविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, भोपालपरिसरः

महतः प्रमोदस्य विषयो यत् साहित्य-वेदान्त-व्याकरण-शिक्षाशास्त्रनिष्णातानां विश्वविस्तृत-केन्द्रीयसंस्कृतविश्वविद्यालयस्य पुरी-जयपुर-गुरुवायुरु-शृङ्गेरी- जम्मू-भोपालादि परिसरेषु आदर्शाध्यापकत्वेन कार्यकर्तृणामाचार्याणां सम्प्रति केन्द्रीयसंस्कृतविश्वविद्यालयस्यास्य भोपालपरिसरस्य छात्रवत्सलानां प्रशासनकुशलानां माननीयानां निदेशकवर्याणाम् आचार्य जे.भानुमूर्तिमहोदयानां सुदीर्घसरस्वतीसेवायाः सम्पूजनार्थमभिनन्दनग्रन्थोपक्रमो अस्मत्परिसरस्याध्यापकबान्धवैः क्रियत इति।

एते आचार्याः छात्राणामुपकाराय सदैव तत्पराः, कठिनं शास्त्रीयं विषयं शिक्षाविषयं वा सरलरीत्या पाठनदक्षाः, सरससमृदुस्वभावयुक्ताः सहृदयाः सदा प्राच्यपाश्चात्यशैक्षिकचिन्तने रताः च वर्तन्ते। एतेषां धार्मिकव्यवहारेण सर्वे सुपरिचिताः। 'आचारः परमो धर्मः' इति भारतीयमुनिऋषीणामादर्शं परिपालयन्तः सदाचारनिष्ठाः सन्तः कर्तव्यपथे प्रवर्तन्ते इति ममानुभवः।

यदाहं तिरुपतिराष्ट्रियसंस्कृतविद्यापीठे शिक्षाशास्त्रिकक्षायां पठन्नासं तदा एते आचार्याः प्रायोगिकशिक्षणाभ्यासे बाह्यपरीक्षकत्वेन समागताः आसन्। तदा इमे शृङ्गेरीस्थराष्ट्रियसंस्कृत-संस्थानस्य राजीवगान्धिपरिसरस्य शिक्षाविभागे प्रवाचकरूपेण पदमलमकुर्वन्। तदारभ्य आचार्यैः सह मम मेलनमभवदिति सम्प्रत्यपि स्मराम्यहम्। ततः परं पुनः यदाहं भोपास्थराष्ट्रियसंस्कृतसंस्थानस्य भोपालपरिसरस्य शिक्षाविभागे सहायकाचार्यरूपेणकार्य-मकरवरम् तदा इमे सदा समयानुवर्तितासन्तः जिज्ञासूनां छात्राणां सन्देहदूरीकरणे तत्पराः वर्तन्ते इति अपश्यम्। आदर्श शिक्षकोऽसौ छात्रान् पुत्रवत् स्नेहेन अपाठयत्। सत्यं हि कथितम् –

**गुरवो बहवः सन्ति शिष्यवित्तपहारकाः।**
**दुर्लभोऽयं गुरुर्देवो शिष्यसन्तापहारकाः॥** इति (गुरुगीता)

अस्मिन् मार्चमासे एते आचार्याः स्वकार्यात् अवसरं नेष्यन्तीति विज्ञाय एतेषां स्मरणार्थमायमभिलेखः। अहं सदा सर्वदा आचार्याणां मङ्गलाभिलाषि। अवसरप्राप्त्यनन्तरमपि एतेषां समयः सुखेन प्रयातु इति परमपिता परमात्मानं प्रार्थयामि। इति शम्।

ISSN-2321-6948

# मन्नाथः श्रीजगन्नाथः मद्गुरुः श्रीजगद्गुरुः ।
# मदात्मा सर्वभूतात्मा तस्मै श्रीगुरवे नमः ॥

**डॉ. हरेकृष्ण अगस्तिः**
अधिष्ठाता, वेदविद्यासंकायः
कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयः
रामटेकम्, नागपुरम्।

जीवनस्य सर्वेषु क्षेत्रेषु गुरोः आवश्यकता वरीवर्ति। अज्ञानेन आवृते नेत्रे गुरुः ज्ञानशलाकया उद्घाटयति। यद्यपि ग्रन्थैरपि ज्ञानं प्राप्यते परन्तु तज्ज्ञानं निःसन्दिग्धं न भवति। नैतादृशं ज्ञानं अस्मान् समीचीने पथि प्रेरयति । गुरोश्च सकाशात् प्राप्ता विद्या निस्सन्दिग्धं प्रत्ययं जनयति ।

उत्कलदेशस्य पुरीस्थे केन्द्रियसंस्कृतविश्वविद्यालस्य श्रीसदाशिवपरिसरे २००२ – ०३ शैक्षिके संवत्सरे मामकीने शिक्षाशास्त्रपदविसम्पादनसन्दर्भे प्राध्यापकत्वेन शिक्षाशाश्त्रविभागाध्यक्षपदमलङ्कुर्वाणः लब्धः आचार्यः जे भानुमूर्तिवर्यः सरलः सज्जनः छात्रवत्सलश्च । नारिकेलफलमिव गभीरस्वरुपः कोमलहृच्च । शिक्षाशास्त्रे लब्धपदवीकोऽयम् आचार्यः न्यायसाहित्यशास्त्रयोरपि विचक्षणः । संस्कृतम्, तेलुगु, हिन्दी, आङ्ग्लम्, कन्नडम् इति पञ्चभाषाज्ञश्चायमाचार्यः शैक्षिकमनोविज्ञाने सांख्यिकविज्ञाने च पटुः, उपचतुस्त्रिंशद्वत्सराणि अध्यापनक्षेत्रे स्वात्मानं संन्यस्य छात्रोन्मुखं जीवनम् अजीवत्। सर्वानुसरणीयाध्यापनकुशलतावानयं शिक्षामनोविज्ञानमिव नातिसहजबोधावहमपि विषयं छात्रान् लीलया समबोधीत् । स्वीयाध्यापनपद्धत्या छात्रोन्मुखजीवनेन सर्वप्रियः अगणितेषु छात्रहृत्सु चिरस्थायी । नैकानां ग्रन्थानां लेखकस्सम्पादकश्चायं वृत्तिजीवननिवृत्त्युत्तरमपि छात्रोपलब्धः भवत्विति मन्मनीषा ।

एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद् द्रव्यं यद्दत्वा ह्यनृणी भवेत् ॥

***

# श्रीभानुमूर्तिः कृती

**डॉ. सुज्ञानकुमारमाहान्तिः**
Central Sanskrit University, Bhopal Campus, Bhopal, M.P.
PIN – 462043
Email: mahantysugyankumar@gmail.com

बह्न्यभ्रचन्द्रयमके शुभविक्रमाब्दे
पुण्याहलग्नकलिते वरपुष्यमासे।
पूर्णेन्दुपर्वणि महाध्युषितान्ध्रदेशे
कश्चित्प्रकाशरुदभूद्भुवि भानुमूर्तिः ॥1॥

नारायणाख्यविबुधाग्रिमपूर्वलक्ष्मीः
वेदादिशास्त्रसमवायविविक्तचित्तः।
यज्ञान्नशेषितसिताशनमात्रवृत्तिः
तातो द्विजातिजनपूजितपादपद्मः ॥2॥

आतिथ्यदेवयजनादिषु रक्तचित्ता
गीताश्रुतिस्मृतिततिश्रवणाभिरामा।
लक्ष्मीप्रियार्चनसमर्जितपुण्यलक्ष्मा
माता गुणिप्रसविनी खलु नागलक्ष्मीः॥3॥

श्रीसाम्बमुर्तिसुधियोऽधिगताक्षपादः
काणादशब्दविषयेषु कृतावगाहः।
श्रीसोमयाजुलुबुधार्जितकाव्यशास्त्रः
प्रज्ञाप्रकाशरुचिरच्छविभानुमूर्तिः॥4॥

श्रीचन्द्रशेखरबुधारलिकट्टिकश्री-
वाशिष्ठजुष्टविनयादिगुरुप्रसादात्।
शिक्षादिशास्त्रनिचयेषु कृतावधानः
विद्वान्बभूव शुचिसंस्कृतभानुमूर्तिः॥5॥

प्रत्यूषेति सुता स्वभावविनता सौम्या शुभासंस्कृता
पुत्रोऽसौ वरुणो नयप्रवणताशीलाभिरूपान्वितः।
श्रौतस्मार्तविधीष्टकारिजयलक्ष्मीर्धर्मपत्नी सती
गार्हस्थ्याश्रमधर्मसंयमपरश्श्रीभानुमूर्तिः व्रती॥6॥

शास्त्रोपस्कृतशब्दसुन्दरतनुर्लीलायते भारती
यस्मिन्दातरि मोदनिर्भरमदा लक्ष्मीः परं माद्यति।
अन्योन्याक्षमयेव वर्धनपरां लक्ष्मीं तथा भारती-
माराध्यञ्च समं सदा विजयते श्रीभानुमूर्तिः कृती॥7॥

***

# प्रत्यक्षसाधकं भानुः

**डॉ. प्रदीपकुमारपाण्डेयः**
**उपाचार्यो व्याकरणविभागः**
**केन्द्रीयसंस्कृतविस्वविद्यालयः, भोपालपरिसरः**

अधुना केन्द्रीयसंस्कृतविश्वविद्यालयस्य भोपालपरिसरे द्वितीयनिदेशकत्वेन शोभां वर्धयमानानां प्रो. जे.भानुमूर्तिमहोदयानां विषये यदा किञ्चित्संस्मरणं वेत्तुमिच्छामि तदा मम मनस्येक एव विचार प्रादुर्भूयते यन्मूर्तिः प्रत्यक्षसाधकम्, तत्र कारणमिदमस्ति यत् यदा ते भोपालपरिसरे नासन् तदा मात्र कर्णपरम्परयैव श्रुतवान्नासम्,यत्तेषां ज्ञानप्रवाहः समेषु शास्त्रेषु समानरूपेण वर्तते, किन्तु, यदा ते जुलाईमासे 2009 ईषवीये वर्षे जम्मूपरिसरतः परिसरेऽस्मिन्नागतवन्तः साक्षात्कारश्च जातः तदा स्वयमेवानुभूतो मया। यद्यपीदमपि सत्यं यदधुना काले नह्येकः सर्वशास्त्रवित् भवितुमर्हति तथापि तेषां गतिः सर्वशास्त्रे मया अनुभूता। संस्कारभेदादनुभवानां भिन्नत्वेन, भवितुं शक्नोति यदन्येषामनुभवो भिन्नः-भिन्नः स्यात्, किन्तु मदीयः तादृश एवानुभवः। बोधस्तु स्वस्वव्युत्पत्त्यनुसार्येवेति शास्त्रसिद्धात्वात्। अपि चेन्द्रियाणां विषयप्राप्यकारित्वनियमात् मया स्वशरीरसम्बन्धिश्रोत्रेन्द्रियेण यत् वैदुष्यपूर्णं वक्तव्यं श्रुतं यादृशश्च शीलो दृष्टः तदेव संस्मरणरूपेण वच्मि। मद्रीत्या नेदं किमपि वैलक्षण्यं यदेकस्य जनस्य सर्वशास्त्रे समानगतिः किन्तु वैलक्षण्यं तत्कारणविषये, यदीदृशं वैलक्षण्यं कथं प्राप्यते मानवैः, तत्र किं कारणं भवितुं शक्नोति यदीदृशं वैलक्षण्यं तेषामतिष्ठत्। एतद्विषये यदा चिन्तयामि तदा तेषां नाम्न्येव तत्कारणं निलीनमस्तीतिभावयामि। तच्चेत्थम्। सत्त्वरजस्तमसां गुणानां यदा स्वरूपकार्यकारणानां विषये चर्चा चर्चिता तदा सिद्धान्तद्वयमुपस्थापितवान् परं सांख्याचार्य्यः। तत्रैकः सिद्धान्तो वर्तते यत् ‘‘प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः’’ इति। द्वितीयः सिद्धान्तः इत्थमस्ति यत् ‘‘सत्त्वं लघुप्रकाशकमिष्टम्’’इति। सिद्धान्तद्वयमध्ये प्रथमसिद्धान्ते प्रकाशः इति शब्दः आगतः। स च भानुशब्दसमानार्थकः एव। उभयोरेककार्यसम्पादकत्वात्। भानोरयं स्वभावो यत् तस्मिन् प्रकाशावधौ यानि वस्तूनि, आगच्छन्ति तेषां प्रत्यक्षात्मकं ज्ञानं चक्षुषा भवति, तद्वदेव, एषां सानिध्ये,यः आगच्छति तेषामेवेयमनुभूतिर्जायते यदेतेषां वैदुष्यं कीदृशमिति। भानुः गङ्गाजलवत् विद्यते। यथा गङ्गाजलं स्वतः पवित्रत्वं भजति, अतोऽन्यदपि पवित्रयति, स्वात्मानं पवित्राय तु नान्यदपेक्षते किमपि। तद्वदेव भानुः स्वतः प्रकाशकः , न स्वात्मानं प्रकाशयितुं प्रकाशान्तरमपेक्षते, अपितु-एषामवधौ यः आगच्छति सः प्रकाशितो भवति। यतः प्रथमसिद्धान्ते यथासंख्यान्वये सति प्रीतिपदार्थस्य प्रकाशपदार्थेऽन्वयः, एवं सति प्रीत्यात्मको भवति प्रकाशः तदेव तत्स्वरूपम्। एषां प्रीतिः सच्छास्त्रेषु सच्छीलेषु, एवं रीत्या प्रकाशविधानं सत्त्वगुणस्य प्रयोजनम्। गुणेषु

सत्त्वगुणस्याऽविर्भावमन्तरेण न प्रकाशितो भवितुं शक्नोति न वा परान् प्रकाशयितुं शक्नोति, अतः निश्चप्रचमेव एतेषु सत्त्वगुणस्याऽधिक्यम्,येषां चेतसि सत्त्वगुणस्याऽधिक्यं ते कोपं न गच्छन्ति,न वा कोपप्रभवानां क्रुधद्रुहेर्ष्याऽसूयानामाविर्भावः कारणाऽभावात्। क्रुधद्रुहेर्ष्याऽसूयानामाविर्भावे कारणं विषयवासनाजन्यमालिन्यदोषः, स च सत्त्वगुणाविर्भावस्य प्रतिवन्धकः, सत्त्वगुणाविर्भावस्याऽभावः शास्त्राराधनक्रियायाः प्रतिबन्धकः, शास्त्राराधनक्रियायाः अभावः चेतसि ज्ञानाऽविर्भावस्य प्रतिबन्धकः। अनया रीत्या सत्त्वगुणस्याऽधिक्येन कोपनिवृत्तिः, कोपनिवृत्तौ च तज्जन्यक्रुधद्रुहेर्ष्याऽसूयानां निवृत्तिः,तन्निवृत्तौ च शास्त्राराधनक्रियायां प्रवृत्तिः, शास्त्राराधनक्रियायां प्रवृत्त्या च चेतसि ज्ञानोदयः। तस्मिन् सति ज्ञानरूपभानुना भासितं चेतः स्वाऽवधौ प्राप्तान् विषयान् प्रकाशयति। एवं रीत्या वक्तुं शक्यते यत् यथा गङ्गाजलनिष्ठं शक्तिद्वयम्, पवित्रत्वं तत्करत्वञ्च। तत्र गङ्गाजलनिष्ठपवित्रत्वस्य हेतुः तन्निष्ठपवित्रत्वमेव। अन्वयव्यतिरेकात्। एवं रीत्या यत्र भानुत्वं तत्र प्रकाशकत्वमपि, लोकेऽपि दृश्यते यत् यस्मिन् द्रव्ये गुडत्वं तिष्ठति तत्र मधुरत्वमपि तिष्ठत्येव, तत्र गुडत्वं द्रव्यविशेषस्य तन्नाम्ना मात्र व्यवहारसम्पादकम्, मधुरत्वं तु तद्भक्षणे प्रवृत्तिकारणम्, नहि तिक्तरसं विज्ञाय तद्भक्षणे कश्चिद् जनः प्रवर्तते,तादृश्येव स्थितिः भानुत्वप्रकाशकत्वयोः, भानुत्वं केवलं तस्य व्यवहारसाधकं प्रकाशकत्वं तु लोकक्रियासम्पादकम्। प्रकाशकत्वमूलं प्रकाशत्वमेव। किन्तु प्रकाशप्रकाशकयोर्मध्ये बिम्बप्रतिबिम्बयोरिवाऽभेदः एव स्वीकरणीयः। एवं रीत्या प्रकाशस्वरूपाणां शात्राणां प्रकाशकरत्वमेतेषां सिद्ध्यति। अथवा एवमपि वक्तुं शक्नोमि यत् प्रदीपप्रभयोरिव प्रकाशकस्याऽधिष्ठानं प्रकाशः। यतः अधिष्ठेयस्य सत्ता अधिष्ठानसत्ताऽतिरिक्तसत्ता न भवति अतः उभयोरैक्यमेव। यद्यपि लोके, अधिष्ठानभूतायाः रज्वाः एकत्वेऽपि,अधिष्ठेयभूतः सर्पः, दण्डः, जलधारा, भूछिद्रः, इति परस्परविरोधिनः विषयाः भासन्ते, तथाऽत्र विद्याभेदत्वेन शास्त्राणि भासन्ते, न त्वधिष्ठाने भेदः। लोके द्विविधः प्रकाशः, एकस्तावत्दीपकप्रकाशः। अपरस्तावदादित्यप्रकाशः। दीपकप्रकाशापेक्षया यद्यपि, आदित्यप्रकाशः विलक्षणः प्रभावकरश्च, तथाप्युभयोः प्रकाशकयोरयमेव स्वभावो यत्स्वसीम्नि स्थितानि वाह्यवस्तून्येव कसन्ति। परञ्चाऽयं भानुप्रकाशः शब्दवन्मन्त्रवच्च विलक्षणः। तच्चेत्थम्। शब्दः तावत् वाह्यार्थेन समं, स्वाऽधिष्ठानमपि क्नस्यति। यतोहि यदा शब्दस्य प्रतिबिम्बः आन्तरे संसृष्टं भवति तदा आन्तरप्रकाशः। अत एवोक्तं यत् ''यः स्मरेत् पुण्डरीकाक्षं सः वाह्याभ्यन्तरो शुचिः''। पुण्डरीकमिवाक्षि यस्य सः पुण्डरीकाक्षः। पुण्डरीकं हृदयम्, अक्षि-ज्योतिप्रकाशः। हृदयज्योतिः शब्द एव। एवञ्च स्फोटाख्यं पुण्डरीकाक्षं यः चिन्तयति सः बाह्यार्थज्ञानेन सह आन्तरज्ञानवान्भवति। तादृशं सामर्थ्यं शब्दे एव।अतः इमे शब्दवत्प्रकाशकाः इति चिन्तयामि।

***

# न्यायमूर्तिः भानुमूर्तिः

**डॉ. आर. एल. नारायण सिम्हा**
सहाचार्यः, शिक्षाशास्त्रविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, भोपाल परिसरः

विश्वे बहुन्यूनसम्प्रत्ययः तादृशः भवति यत्र पाण्डित्यं प्रशासनञ्च। परं वेदव्याकरणन्याय-मीमांसादि- प्राचीनसाहित्य- शिक्षाशास्त्र- मनोविज्ञान- आङ्ग्लाद्यर्वाचीनशास्त्राधिकारिणः पठनपाठनव्यसनिनः प्रशासनकुशलिनः केन्द्रीयसंस्कृतविश्वविद्यालयस्य भोपालपरिसरस्य निदेशकानां शिक्षाशास्त्रविभागाध्यक्षाणाम् आचार्याणां जम्मलमडकभानुमूर्तिमहोदयानां हस्ते एते सर्वेऽपि एकैकस्याम् अङ्गुल्याम् अङ्गुलीयकमिव भान्ति।

यथा भानुः अस्य प्रपञ्चस्य अन्धकारं दूरीकृत्य प्रकाशं ददाति तथैव अस्माकं विभागाध्यक्षाः निदेशकश्च तेषामपरानुभवेन विभागस्य तथा सम्पूर्णपरिसरस्य छात्र-अध्यापक-कर्मचारिणां तत्रत्कालानुगुणं अज्ञानान्धकारं दूरीकृत्य ज्ञानप्रकाशं सम्प्रेम्णां विदधति। बहुधा श्रुतमेतेषां विषये ममाध्ययनकाले। किन्तु भोपालपरिसरे सहाचार्यरूपेण यथा प्रविष्टवान् तदारभ्य बहवधीतमेतेषामधीने। 'सन्तः परीक्ष्यान्तरं भजन्ते मूढः परप्रत्ययनेयबुद्धिः' इति कालिदासोक्तरीत्या एते सर्वेषामभिमतं संश्रुत्य सर्वोच्चनिर्णयं स्वीकुर्वन्ति। केवलं विभागस्य तथा परिसरस्य प्रोन्नतौ एव पक्षपातिनः भवन्ति। वैयक्तिकपक्षपातं न प्रदर्शयन्त्येव।

एतेषां व्यक्तित्वं सर्वदा मां प्रोत्साहयति। तदर्थमेव शीर्षकं स्थापितं 'न्यायमूर्तिः भानुमूर्तिः' इति। यथा भानुः स्वकिरणान् पक्षपातं विना सर्वेषामुपरि प्रसारयति तथैव विना पक्षपातं सर्वान् समदृष्ट्या पश्यन्ति। परमेते परिसरस्य तथा विश्वविद्यालयपक्षपाती एव। 'याद्रोरत्नैरिवार्णवः' इति कालिदासोक्तरीत्या यावत् सौम्यमूर्तिः कर्मठानां विषये तावत् कठिनमूर्तिः आलस्ये। सव्यं दृशबाहुनात्पूर्वमे परिसरमागत्य सम्पूर्णपरिसरं भ्रमन् समये आगन्तुं प्रेरकाः भवन्ति। 'क्षमया धरित्रीसमा' इति रीत्या छात्राणां विषये धरित्री इव प्रेमानुरागं प्रदर्श्यन्तः छात्रहितमेव सर्वदा चिन्तयन्ति।

अन्तेहं करुणावरुणालयं भगवन्तं विशेषं सम्प्रार्थये यत् सेवानिवृत्यनन्तरमपि एतेषां महानुभावानामहैतुकी समदृष्टिः अस्मत्सहज्ञाणां जिज्ञासूनां कृते सर्वदा समरूपा भवेदिति।

***

# आचार्यभानुमूर्तये अभिवानदप्रशस्तिः

**कृपाशङ्करशर्मणः**
साहित्यविभागः, श्रीरघुनाथकीर्तिपरिसरः, देवप्रयागः

**उदये सविता रक्तः रक्तश्चास्तमये गतः।**
**सम्पत्तौ च विपत्तौ च महतामेकरूपता।।**
**निर्मलो निरहङ्कारो भानुमूर्तिमहोदयः।**
**प्रकृत्या सहजसौम्यस्तस्मै श्रीगुरवे नमः।।**

महतः प्रमोदस्य अवसरो वर्तते यत् भोपालपरिसरस्य यशस्विनिदेशकानाम् आचार्याणां जे. भानुमूर्तिमहाभागानाम् अभिनन्दनविशेषाङ्कं भोपालपरिसरः प्रकाशयति। अतएव एतेषां आचार्याणां विषये किंचित् स्वानुभवविचाराश्च मया लिख्यते। इमे गुरुकल्पाः भानुमूर्तिमहाभागाः शिक्षा-साहित्य-दर्शनादिशास्त्रेषु निपुणाः सन्ति। एतेषाम् अध्यापनकौशलम् अनुसन्धानदृष्टिञ्च दृष्ट्वा प्राशासनिकक्षेत्रेऽपि प्रभुत्वं दृश्यमनोऽभिनन्दनीयो वर्तते। आचार्याणां सहज-सौम्य-अनुशासनात्मकस्वभावः सर्वजनसुखाय सर्वजनकल्याणाय च वर्तते। एतेषां सन्मार्गदर्शने बहवः छात्राः स्वलक्ष्यमवाप्यस्वजीवनं सुखमयं प्राप्तवन्तः। एते विद्वत्तल्लजाः सहृदयसंवेदनशीलाः रस-छन्दः-अलङ्कारप्रतिपादने समर्थाः विविधविद्याविचक्षणाः सन्ति। एतैः सह मम सम्पर्कः तथा नास्ति यथा अन्येषां कार्यरतानां प्राध्यापकानां नैकट्यं भवति, तथापि यदा कदा दर्शनेन मेलनेन च मम जीवने तेषां विदुषां स्नेहवात्सल्यं सर्वदा विद्यते। एतेषां शासकीयसेवायां 65 वर्षोपरान्त विश्वविद्यालयात् सेवनिवृत्तिरविस्मरणीया भवेत् तादृशः कश्चिद् प्रकल्पः परिसरेण संकल्पितः। अनेन शिवसंकल्पेन आचार्याणां भानुमूर्तिमहोदयानां यशकीर्तिविद्यावंशज्ञानम् अवश्यमेव विस्तारः प्रभवेत् नात्र संशयः। आचार्याणां पारिवारिकजीवनं उत्तरार्द्धकालश्च निरामयं सुखमयं च भवेदिति महामृत्युञ्जयं प्रार्थयामि। आशासे यत् एतेषां कृपादृष्टिः मादृशानां अकिञ्चन् पुरुषाणामुपरि सर्वदा भविष्यतीति दिक्। अस्तु भवेत् तावद् मङ्गलम्।

***

# यस्य हस्तौ च पादौ च वाङ्मनस्तु सुसंयते। विद्या तपश्च कीर्तिश्च स तीर्थफलमनुश्नुते।।

**श्रीप्रतापः**
सहायकाचार्यः, जैनदर्शनविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, भोपाल परिसरः

पूज्याः भानुप्रकाशस्वरूपाः आदर्शभूताः छात्रवत्सलाः संस्कृताराधकाः भारतीयसंस्कृतिसम्पोषकाः सरलहृदयाः सत्प्रेरकाः जीवदयोत्प्रोताः शिष्यहितोद्यताः कर्त्तव्यपरायणाः विनम्रहृदयाः शास्त्रसम्पूजकाः मुनिकल्पाः विविधशास्त्रनिष्णाताः शिक्षाशास्त्रमर्मज्ञाः यशस्विनः भोपालपरिसरनिदेशकाः गुरुकल्पाः परमादरणीयाः श्रद्धेयाः आचार्याः जे. भानुमूर्तिवर्याः मया अर्चकेन छात्रेण वन्द्यन्ते प्रणम्यन्ते सादरम्। अत्यन्तहर्षस्य विषयः यत् पूज्यगुरुवर्याणाम् अभिनन्दनग्रन्थस्य प्रकाशनं भवति। सकलगुणयुतं व्यक्तित्वं कीदृशं भवति तस्य निदर्शनत्वेन श्रद्धेयगुरुवर्याणां व्यक्तित्वं विलसति। छात्राणाम् उत वा अध्यापकानां याः अपि समस्याः भवताम् अधिकारक्षेत्रे आगताः ताः सर्वा अपि दूरीकृताः भवद्भिः सुयत्नैः, एतद् मया अनुभूतम्।

भवताम् आदरणीयानां जीवनं संयमितं विलसति, यथोक्तं शास्त्रेषु-

**यस्य हस्तौ च पादौ च वाङ्मनस्तु सुसंयते।**
**विद्या तपश्च कीर्तिश्च स तीर्थफलमनुश्नुते।। (भविष्यपुराण, उत्तरखण्डः-122/7)**

अर्थात् यस्य हस्तौ पादौ मनः वाणी च सुसंयताः वर्तन्ते एवञ्च यस्य विद्या तपः कीर्तिश्च सम्पूर्णतां याताः स एव तीर्थस्य फलम् अश्नुते। तथाभूताः तीर्थफलप्राप्ताः श्रद्धेयाः गुरुवर्याः विलसन्ति। गुरुश्रेष्ठानां सुसंयमितं जीवनं आदर्शभूतं अस्माकं सर्वेषां कृते। 'भवन्ति नम्रास्तरवः फलोद्गमैः' सूक्तिरियं सुप्रसिद्धा वर्तते। यथा तरवः फलोद्गमैः नम्राः भवन्ति तथैव अस्माकं गुरुवर्याः अपि सर्वविधसमृद्धिं प्राप्य अपि विनम्राः विलसन्ति ज्ञानसमृद्धिः तत्र विशिष्टत्वेन राजते। विनयस्तु अस्त्येव सद्गुणेषु अनुपमः सद्गुणः। भवताम् आदरणीयानाम् आशीर्वादाः अस्मासु सर्वदा भवन्तु इति महती इच्छा विद्यते। भवन्तः सर्वदा स्वस्थ्याः सन्तु इति मङ्गलकामनार्थं भगवन्तं महवीरं भगवन्तं महाकालञ्च नत्वा प्रार्थये।

।।श्री गुरवे नमः।।

# वन्दे शिक्षापरम्पराम्

**डॉ. डम्बरुधरपतिः**
सहायक-आचार्यः (शिक्षाविभागः)
केन्द्रीयसंस्कृतविश्वविद्यालयः
भोपालपरिसरः, भोपालम्

**पुत्रादनन्तरं शिष्य इति धर्मविदो विदुः।** (महा. विराट 50/21)

इति सूक्त्यनुसारं पुत्रवत् पश्यन्तः नः गुरवः माननीयाः प्रो जे. भानुमूर्तिमहाभागाः समेषाम् आदर्शनुभूता एव भवन्ति। गुरुणां समक्षे अहम् अधीतवान्। श्रीसदाशिवपुरीपरिसरे यदा 2002 मध्ये गुरवः आगतवन्तः आसन् तस्मिन् समये अहं शास्त्रिमध्ये आसम्। अस्माकं ज्येष्ठाः शिक्षाशास्त्रिकक्षायां प्रविष्टवन्तः। सामान्यतया उच्चस्तरे कक्षा सामान्यरूपेण चलति स्म। छात्रावासतः परिसरं प्रति अस्माकम् आगमनं प्रतिदिनं यथा चलति स्म तथा संचलितम्। एकस्मिन् दिवसे श्रीभूवनेष-जगमोहन-नृसिंहनाथगुरुमहोदयाः शीघ्रं शीघ्रं चलतु इति परिसरे उच्चैः उच्चैः उक्त्वा सचिन्तया व्यथिताः आसन्। समेषां कपाले श्वेदः अदृश्यत। समे दुश्चिन्तया व्यथिताः आसन्। 10 वादनं जातमासीत्। निमेषद्वेयं विलम्बः जातः। ते कक्षायाः मुख्यद्वारे बहिः अभवन्। अहं, पुनः मम कानिचन मित्राणि यथा- पंचानन-जयकृष्ण-सुशान्तप्रमुखाः तत्र आस्म। वयं दृष्टवन्तः यत्- बर्हि स्थित्वा उत्तरपुस्तिकाम् उन्मोचनं कृत्वा ते किमपि किमपि लिखितवन्तः। अस्माकं जिज्ञासाः समुत्पन्नाः आसन्। अरे! किं जातम्? किमर्थम् अनेन प्रकारेण कृतम्? उच्चस्तरे तथा न भवति खलु इति उक्त्वा वयं सानन्देन अस्माकं कक्षां प्रति गतवन्तः। कक्षानन्तरं सायं काले छात्रावासे उपविष्य अहं जगमोहनमहोदयं पृष्टवान्- महोदय अद्य प्रथमकालांशे किं जातमासीत्? किमर्थं समे भीता आसन्? सम्पूर्णकालांशे किमर्थं बहि आसन् ? इति। ते उक्तवन्तः अरे! वयं भीताः न आस्म। अस्माकं समेषां तान् प्रति सम्मानो विद्यते। ते अस्माकं परिसरेषु सर्वेषु अध्यापकेषु भिन्नाः सन्ति। अहं पृष्ठवान् के? जगमोहनमहोदयः निरन्तररूपेण सम्मानेन गौरवेण च उक्तवान्- ते कुशलप्रशासकः अस्माकं गुरुवर्याः प्रो. जे भानुमूर्तिमहोदयाः सन्ति। समयात् प्राक् प्रतिदिनं कक्षाम् आगच्छन्ति। कक्षायां पाठयन्ति, बोधयन्ति बोधपरीक्षणं च कुर्वन्ति। प्रतिदिनं शब्दरूपाणि धातुरूपाणि पठितुं रटितुं च दास्यन्ति। पुनः अग्रिमदिवसे अनुक्रमांकानुसारं यादृच्छिक्या प्रणाल्या वा पृच्छन्ति। कक्षायां प्रत्येकं छात्रस्य उपरि तेषां ध्यानं भवति। प्रतिदिनं समेषां छात्राणाम् उपस्थितिं कक्षायाम् इच्छन्ति। प्रातः 10 वादनतः सायं 05 वादनपर्यन्तं कक्षायाम् उपस्थिति अनिवार्या अस्ति। अनेन प्रकारेण

शैक्षिकव्यवस्थायां प्रशासनिकव्यवस्थायां च तेषां रुचिः अस्तीति चर्चा जाता। चर्चां श्रुत्वा ते के? इति द्रष्टुं समे समुत्सकाः आसन्।

तदनु अनुभवानुक्रमे 2004 मध्ये अहं प्रविष्टवान्। मनसि भीतिः जिज्ञासा च विद्यते स्म। संस्थानं प्रति गमनपरम्परा उच्चशिक्षापद्धत्यनुकूला आसीत्। स्वेच्छया गमनागमनमासीत्। सहपाठिरूपेण एका भगिनी अस्माकं कक्षायाम् आसीत्। वयसि बहुज्येष्ठा आसीत्। प्रारम्भिककक्षायाम् एकस्मिन् दिवसे सा विलम्बेन आगतवती। सा तु वयसि ज्येष्ठा आसीत्। वयं तु चिन्तितवन्तः अस्माकं कृते यः नियमो विद्यते तस्याः कृते तु न भविष्यति। गुरुचरणाः ताः कक्षां प्रति आगन्तुम् अनुमतिं दास्यन्ति इति किन्तु तत्रापि ससम्मानेन समयानुवर्तितायाः आदर्शरूपं प्रदर्शितवन्तः। प्रथमतः अस्मान् पृष्ठवन्तः, किं करणीमिति? अस्माकं समेषाम् उत्तरमासीत् यत्- सर्वेषु ज्येष्ठा अस्ति अतः ताभ्यः अनुमतिं प्रयच्छन्तु इति किन्तु गुरवः कक्षातः एकाम् आसन्दिकां स्वीकृत्य ससम्मानेन ताः बहिः उपवेष्टुम् उक्तवन्तः।

शैक्षिकपरिवेशे एकस्य आदर्शस्य गुरोः किं दायित्वमिति अनेन प्रतिभाति। समयस्यानुपालनम् अधीतस्य क्रियान्वयनं च तेषां लक्ष्यमासीत्। शिक्षणकौशलानां विकाससन्दर्भे प्रत्येकं प्रशिक्षणार्थिने ध्यानं दत्तवन्तः। कथम् एकः प्रशिक्षणार्थी आदर्शः अध्यापकः भविष्यति तदर्थं तेषां प्रत्येकं पक्षस्योपरि बलमासीत्। तस्मिन् समये तेषां शब्दरूपाणां धातुरूपाणां रटनार्थं यः निर्देशः आसीत् सः अद्य मम कृते लाभदायकः अस्ति। अहमपि अनुकरोमि। मया यत् अनुभूतं तत् प्रतिपादितम्। समादरणीयान् पूज्यान् प्रो. जे. भानुमूर्तिगुरुचरणान् अहं सततं वन्दे। गुरुचरणानाम् आशीर्वादः सदा भवतु इति भगवन्तं प्रार्थयामि।

***

# मम शिक्षाशास्त्रिगुरवः महान्तः प्रो.जे भानुमूर्तिमहोदयाः

**डॉ. मनोजकुमारसाहुः**
सहायकाचार्यः,धर्मशास्त्रविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः
जयपुरपरिसरः, राजस्थानम् ।

प्रो. जे भानुमूर्तिमहोदयाः, एतैः महानुभवैः सह मम प्रथमः साक्षातः जुलाईमासि 2003 तमे वर्षे अभवत्। तदा मम शिक्षाशास्त्रिकक्षायां श्री सदाशिवपरिसरे पुर्य्यां प्रवेशः अभवत्। एते महोदयाः विभागमुख्याः सन् अस्मान् शिक्षामनोविज्ञानं पाठयन्ति स्म। एतेषां समयानुवर्त्तिता, छात्रवत्सलता, अध्यापनाशैली, सहृदयभावादिगुणाः सर्वोपरि आसन्। अस्माकं शिक्षाशास्त्रिकक्षायां Scout & Guide Training मध्ये भवतु,शिक्षणाभ्यासे,शैक्षणिकयात्रायां वा भवतु सर्वत्र एतेषां महानुभवानां महद्योगदानमासीत्। कदाचिदध्यापनासमये अस्मासु व्यतिक्रमं दृष्ट्वा दुर्वासारूपं धारयन्ति स्म तथापि स्नेहपूर्णवाक्येन छात्रान् प्रवोधयन्ति स्म। एका घटना मम जीवनेऽपि संघटिता आसीत्। 2003-04 तमे वर्षे श्रीसदाशिवपरिसरे नूतनगृहनिर्माणकारणवशात् अस्थायिरुपेण परिसरस्य सर्वाः कक्षाः पुर्य्यां वलगण्डिस्थमहावीरधर्मशालायां प्रचलन्ति स्म। अस्माकं शिक्षाशास्त्रिकक्षायां प्रत्येकविषयपाठनादनन्तरं पञ्च-दशनिमेषाः विनोदननिमित्तं दीयन्ते। एकस्मिन् दिवसे अहं वहिः अगच्छम्। यदा अपश्यं प्रो.जे भानुमूर्तिमहोदयाः अध्यापयितुं अगच्छन् तदा अहमपि तेभ्यः प्रणम्य पृष्ठधावनमकरवम्। छात्राः तान् दृष्ट्वा झटित्येव कक्षायां प्रविशन्ति स्म। परन्तु दौर्भाग्यादहं तेभ्यः अनुधावनं कृत्वाऽपि कक्षाद्वारदेशे एव दण्डायमानः आसम्। तदा भानुमूर्तिमहोदयानामादेशेन कश्चित् सहपाठी द्वारदेशे एव पठितुं मह्यं काष्ठासनं ददाति स्म। मां विहाय सर्वे छात्राः कक्षायामपठन्। इत्यस्यामवस्थायां मनसि लज्जा-दुःखादीनि आगच्छन् । तदा अध्यापनाकाले ते छात्रेभ्यः पाठयन्ति स्म यत् शिक्षकनिमित्तं भवतु, छात्राणां कृते वा भवतु कथं सर्वेषां कृते समयानुवर्त्तितायाः महती आवश्यकता विद्यते ? अग्रे गत्वा सर्वे शिक्षाशास्त्रिणः शिक्षकाः भविष्यन्ति। स्वस्य यदि समयानुवर्त्तिताज्ञानं न स्यात् तर्हि छात्राणां कथं स्यादिति तेषामभिप्रायो आसीत्। उच्चारणेन सह आचरणस्य समन्वयः कथं शिक्षकस्य भवेदिति ते वदन्ति स्म। तदा मम मनसि एषा भावना आगच्छत् यत् जीवने सर्वदा ( मुख्यरूपेण अध्ययनाध्यापनाकालयोः )

समयानुवर्त्तितोपरि गुरुत्वं दास्यामि। शिक्षाशास्त्रिकक्षानन्तरं तेषां महानुभवानां साक्षाद्दर्शनं मया न प्राप्तं परन्तु सा घटना अधुनाऽपि मनसि विद्यते।

मानवजीवने ज्ञातसारेण अज्ञातसारेण वा कदाचित् त्रुटयः भवन्ति परन्तु ताभिः त्रुटिभिः जीवने संशोधनस्य शिक्षाः प्राप्यन्ते। यास्तु मया भानुमूर्तिमहोदयेभ्यः प्राप्ताः आसन्। अन्ते तेषां महानुभवानां भाविजीवनं सुस्थं , निरामयं , कुसुमितं च भवत्विति नीलाद्रिकन्दरस्य श्रीजगन्नाथस्य चरणकमलयोः प्रार्थयामि।

***

# प्रो.जे.भानुमूर्तिमहोदयानां संक्षिप्तजीवनपरिचयः

**हेमराजः**
शोधछात्रः साहित्यविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः वेदव्यासपरिसरः बलाहरः प्रागपुरम्
जिला कांगडा हिमाचलप्रदेशः।

**नमस्ते शारदे देवी काश्मीरपुरवासिनि।**
**त्वामहं प्रार्थये नित्यं विद्यां बुद्धिञ्च देहि मे।।**

भारतदेशस्य मुकुटमणीव सुशोभितं जम्मूकाश्मीरप्रान्तं सम्पूर्णविश्वं जानाति।शारदापीठे स्थिता शारदादेवी कटड़ापर्वते विराजमाना मातावैष्णोदेवी अमरनाथगुहायां स्थितःतुषारलिङ्गमहेश्वरःजम्मूकाश्मीरधरां पवित्रं कुर्वन्ति।अस्मिन् सुरम्ये जम्मूकाश्मीरप्रान्ते जम्मू मुख्यालयात् प्रायः 20 किलोमीटर परिमितं दूरं विराजमाने कोटभलवालाख्ये स्थाने केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरणवीरपरिसरः वर्तते। पुरा परिसरस्य भवनं जम्मूक्षेत्रस्य शास्त्रीनगरमित्याख्ये स्थाने आसीत्। खीष्टाब्दे 2006-2007ई.तमे वर्षे एतस्मिन् परिसरे शिक्षाशास्त्रविभागे प्रो.जे.भानुमूर्तिमहोदयाः विभागाध्यक्षपदे सेवारताः आसन्। तदा अहं तत्र शिक्षाशास्त्रविभागे शिक्षाशास्त्रीकक्षायां छात्ररुपेण पञ्जीकृत आसम्। वर्तमानसमये गुरुपादचराणाःप्रो.जे.भानुमूर्तिवर्याःकेन्द्रीयसंस्कृतविश्वविद्यालयस्य भोपालपरिसरे निदेशकपदे कार्यरताः सन्ति। परिसरात् प्राप्तसूचनानुसारं 2022तमे वर्षे प्रो.जे.भानुमूर्तिमहोदयाः सेवानिवृत्ता भविष्यन्ति। मूर्तिमहोदयानां जीवनविषये किञ्चित् लिखामि इति मया निश्चितम्। इमे महोदयाः आन्ध्रप्रदेशे 15.03.1957 तमे दिनाङ्के श्रीमतीनागलक्ष्मम्मा-श्रीलक्ष्मी-नारायाणजम्मलमङ्कयोः गृहं स्वजन्मना अलङ्कृतवन्तः। महोदयस्य व्यक्तित्वं दृष्ट्वैव ज्ञायते यत् ते सुसंस्कृत-संस्कारितकुटुम्बात् संस्कारान् अलभन्त। यदा तेषामुपनयनसंस्कारः अभवत् तदा ते ब्रह्मचर्याश्रमस्य नियमान् पालयन्तः सुप्रतिष्ठितेभ्यो विद्वभ्यः गुरुभ्यः पारम्परिकरीत्या व्याकरण- न्याय- साहित्यमीमांसा-वेदान्तशिक्षाशास्त्राख्यानां विषयाणां शिक्षां दीक्षाञ्च प्राप्य विद्वत्तां सम्पादितवन्तः। सुविख्याताः साम्बमूर्तिशास्त्रि- मल्लुसोमयाजुलु- वीरेश्वरशास्त्रि- श्रीधरवाशिष्ठ- आरलिकट्टि-चन्द्रशेखरपाण्डेय- विनयकुमाररायप्रभृतयः आचार्यमूर्तिमहोदयानां गुरवः आसन्। एतेषु आचार्येषु केषाञ्चन आचार्याणां साक्षाद्दर्शनम् अहमपि कृतवान्। अध्ययनं तु आजीवनं प्रचलति। पुनरपि ब्रह्मचर्याश्रमकालं परिसमाप्य महोदयाः गृहस्थजीवनं प्रविष्टाः। प्रो.जे.भानुमूर्तिमहोदयाः श्रीमत्या

जे.जयलक्ष्मीत्यभिधया गृहलक्ष्म्या सह परिणयसूत्रे बद्ध्वा गृहस्थजीवनस्य सुभारम्भम् अकुर्वन्। तेषां गृहस्थवाटिकायां वरुण-प्रत्याशाख्यौ सुमनोहरौ सुयोग्यौ पुत्रौ समुत्पनौ। प्रो.भानुमूर्तिमहोदयेन शिवसूत्रं, चारुचर्या, चित्रबन्धरामायणम् इति त्रयो ग्रन्थाः सम्पादिताः। मूर्तिमहोदयैः अधिगममनोविज्ञानं, संस्कृतशिक्षणे मातृभाषाप्रभावश्चेति द्वौ मौलिकग्रन्थौ विरचितौ। तेषां संस्कृत-तेलुगु- हिन्दी- आङ्ग्लादिभाषासु समानाधिकार: आसीत्। महोदयाः विविधासु राष्ट्रियान्ताराष्ट्रियसङ्गोष्ठीषु शोधपत्राणि प्रस्तूय अनेकेषु शैक्षिककार्यक्रमेषु संसाधकमुख्यातिथित्वेन अलङ्कृत्य सभानां गौरवम् अवर्धयन्। अधुना अहं प्रो. जे. भानुमूर्तिमहोदयानां व्यक्तित्वविषये किञ्चित् वच्मि।यत् अहं स्मरामि तदैव अत्र प्रस्तौमि। खीष्टाब्दे 2006 तमे वर्षे अहं शिक्षाशास्त्रिकक्षायां प्रवेशं स्वीकृतवान्। तस्मिन् वर्षे एव प्रो.जे. भानुमूर्तिमहोदयाः श्रीरणवीरपरिसरे शिक्षाशास्त्रविभागे विभागाध्यक्षत्वेन दायित्वग्रहणमकरोत्। महोदयस्य सौम्यस्वभावात् अहं प्रभावितः आसम्। महोदयाः धौतवस्त्रं करांशुकम्, प्रावारकम् युतकम्, ऊरुकञ्च धरति स्म। महोदयः शिक्षामनोविज्ञानविषयं पाठने निपुणाः आसन्। ते अत्यन्तसारल्येन सर्वान् विषयान् बोधयन्ति स्म। ते मनोवैज्ञानिकाः आसन् तस्मात् सर्वेषां मनोभावान् सम्यक्तया जानन्ति सम। न तु मनोविज्ञानमेव अपितु अन्यान्विषयानपि बहुसरलतया बोधयन्ति स्म। यथा मया पूर्वं लिखितं यत् ते विविधभाषाणां ज्ञातार: सन्ति। तेषां मुखात् अस्माभिः संस्कृतं धाराप्रवाहरूपेण श्रुतम्। आङ्गलभाषायाः भाषणे अपि महोदयाः पारङ्गताः आसन्। महोदयस्य प्रेरणया वयमपि संस्कृते सम्भाषणं प्रारब्धवन्तः। शिक्षाशास्त्रिकक्षायाः छात्राणां कृते सम्भाषणशिबिरं चालयितुम् असम्भ्यम् आज्ञां दत्तवन्तः। मया आचार्य-ओंकारचन्दमहोदयेन सार्धं मिलित्वा शिबिरस्य सञ्चालनम् कृतम्। महोदयाः अस्माकं सम्यक् मार्गदर्शनं कृतवन्तः। कक्षायां महोदयाः संस्कृतभाषायामेव पाठयन्ति स्म। एतत् मह्यं बहु रोचते स्म। अस्माकं पाठ्यविषयस्य सम्यक् बोधनं भवति स्म। महोदयस्य मधुरकण्ठात् दक्षिणात्यशैल्यां श्लोक: प्रत्यक्षरूपेण मया प्रथमवारं तत्रैव श्रुत:। महोदयस्य व्यक्तित्वस्य एका विशिष्टा वार्ता वर्तते। अनुशासनस्य नियमानां पालने महोदयाः कठोराः सन्ति। नियमपालने महोदयस्य व्यवहारः समानस्तरीयः वर्तते। कार्यस्थले अथवा गृहे नियमानां पालनं समानरूपेण कुर्वन्ति। यथा मया अनुभूतम्। महोदयस्य चिन्तनं वर्तते यावत् कठोरनियमान् वयं परिपालयाम: तावदेव अस्माकं व्यक्तित्वमुत्कृष्टं भवति। कक्षायाम् एका भगिनी नवप्रसविनी आसीत्। तस्याः कृतेऽपि पाठनाभ्यासः स्कॉउट व गाईडप्रशिक्षणं प्राथमिकचिकित्साप्रशिक्षणम् अनिवार्यम् आसीत्। एकस्य मित्रस्य भुजाभग्ना जाता तस्य कृतेऽपि

सर्वम् करणीयमभवत्। अन्याः अपि एतादृशाः आसन् तेषां कृतेऽपि तथैव क्लिष्टनियमाः आसन् ये नियमाः सामान्यछात्राणां कृते आसन्। कुत्रापि भेदः न आसीत्। कक्षायां कः विषयः कथं पाठनीयः भवति इत्यपि महोदयाः सम्यग्रूपेण बोधयन्ति सम। विभागीयकार्यालये महोदयस्य कुशलं प्रसाशनमासीत्। सर्वविधव्यवस्था समयेन भवति स्म। स्वशिक्षाशास्त्रिकक्षायाः अध्ययनात् वयं जीवनस्य बहुविधविषयान् अवगतवन्तः। तत्र केवलं शैक्षणिकं ज्ञानमेव न अपितु सामाजिकव्यवहारस्यापि प्रशिक्षणं महोदयात् प्राप्तम्। अधुना यदा अहं स्वयं शिक्षाक्षेत्रम् आगतः तदा महोदयेन यत् पाठितमासीत् तस्य स्मरणं नित्यमेव आयाति। आगामिनि ख्रीष्टाब्दे 2022तमे वर्षे महोदयस्य सर्वकारीयसेवातः सेवानिवृत्तिः भविष्यति। ते निरन्तरं लेखनकार्ये रताः भवन्ति इति अहं जानामि। तेषां संस्कृतक्षेत्राय समाजाय च सर्वदा योगदानं भवति अग्रे अपि भविष्यति। अहं महोदयस्य सेवानिवृत्तिकालात् परम् आगामिजीवनस्य मङ्गलकामनां करोमि। ते सर्वदा स्वस्था भूत्वा प्रसन्नमनसा जीवनं यापयेयुः इति अहम् ईश्वरं प्रार्थये ।

Hem Raj

हेमराजः, प्रवक्ता, संस्कृतम्
राजकीयवरिष्ठमाध्यमिकविद्यालयः, पंजगाई
तहसील-सदर, जिला-बिलासपुरम्, हिमाचलप्रदेशः।
hemraj.shastri@gmail.com

ISSN-2321-6948

# शब्दब्रह्मवादः

**सुबोधशर्मा**
व्याकरणविभागाध्यक्षः
केन्द्रीयसंस्कृतविश्वविद्यालयः, भोपालपरिसरः

त्रिविधतापसन्तप्ताः प्राणिनः तेभ्य आत्मनो मुक्त्यर्थं निरतिशय- सुखप्राप्त्यर्थं च सततं चेष्टन्ते। तत्र ये केचन तापत्रयनिवारणाय लौकिका उपाया सन्ति, तेनाऽऽत्यन्तिकतया दुःखानि उन्मूलयितुं शक्ताः। पश्चादपि पौनःपुन्येन तेषां पुनरुत्पाददर्शनात्। यश्चापि वैदिक उपायः ज्येतिष्टोमादिः सोऽपि अविशुद्धिक्षयातिशययुक्तत्वान्नैकान्तिकम् आत्यन्तिकञ्च दुःखनाशं कर्तुं शक्नोति- 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः इत्यादिश्रुतेः[1] 'क्षीणेपुण्येमर्त्यलोकं विशन्ति'[2] इत्यादिस्मृतेश्च।

अतश्च लौकिक-वैदिकोपायव्यतिरिक्तः दर्शनशास्त्रप्रतिपाद्य उपायः एव त्रिविधदुःखं समूलमुन्मूलयितुं समर्थः— तमेव विदित्वा अतिमृत्युमेतिनान्यः पन्थाः विद्यतेऽयनाय।[3] आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्योनिदिध्यासितव्यः[4] इत्यादिश्रुतेः।

तत्र 'सांख्यदर्शनं न्यायदर्शनं वेदान्तदर्शनं वा— ऋते ज्ञानान्नमुक्तिः इति सिद्धान्तमनुसृत्य आत्मज्ञानादेव[5] मोक्षं प्रतिपादयति।

तत्र प्रक्रियानिर्वचनमण्डितं व्याकरणशास्त्रमपि परावाग्रूपं परब्रह्मप्रतिपादकं सन्मोक्षोपायमातन्वत् स्वात्मनिनूनं दर्शनोत्तमतां विभर्ति ।

अयमभिप्रायः- सर्वोपकारकमिदं व्याकरणशास्त्रं विद्यते। केषाञ्चित्शास्त्राणां लौकिक एव प्रयोजनं भवति, केषाञ्चित्शास्त्राणाञ्चालौकिक एव प्रयोजनं भवति। किन्तु व्याकरणशास्त्रस्य लौकिकं पारलौकिकञ्चोभयविधं प्रयोजनं विद्यते। एतद्धि शब्दसाधुत्वज्ञापकं सदपि शब्दब्रह्मणः

---

[1]छान्दो. 8.1.6
[2]श्रीमद्भगवद्गीता 9.21
[3]वेदाहमेतंपुरुषंमहान्तमादित्यवर्णंतमसःपरस्तात्।
तमेवविदित्वातिमृत्युमेतिनान्यःपन्थाविद्यतेऽयनाय॥श्वे.3.8
एकोहंसःभुवनस्यास्यमध्येसएवाग्निःसलिलेसंनिविष्टः।
तमेवविदित्वाअतिमृत्युमेतिनान्यःपन्थाविद्यतेऽयनाय॥ श्वे.6.15
[4](बृ.उ.2.4.5)
[5]पञ्चविशतितत्वज्ञः-----मुच्यते नात्र संशयः, तत्वज्ञानान्निःश्रेयसाधिगमः।

परमोपासकं भवति। अत एवैतच्छास्त्रम् आध्यत्मिकं लौकिकञ्चेत्युभयविधफलप्रसाधकं भवति।[1] वेदान्तादिदर्शानां पारलौकिकमेव फलसाधकत्वमस्ति, लौकिकं फलं नास्त्येव। अस्य पुनः व्याकरणदर्शनस्य ईहामुष्मिकोभयफलप्रसाधकत्वं भवति। अतश्चेदं शास्त्रं दार्शनिकपक्षं प्रक्रियापचञ्चेत्युभयथाप्युपकारकं भवति- जिज्ञासूनां मन्दमतीनां बालानां कृते, अथ च प्रखरमतीनां पण्डितानां कृते। अत्र प्रक्रियापक्षस्य बृंहणं काशिकासिद्धान्तकौमुद्यादिषु कृतं भवति। दार्शनिकपक्षस्य समुन्नतिश्च वाक्यपदीय-वैयाकरणभूषणसार-वैयाकरणसिद्धान्तमञ्जूषादिग्रन्थेषु कृता विद्यते। महाभाष्यशब्दकौस्तुभादयस्तु व्याकरणशास्त्रस्य आकरग्रन्थाः भवन्ति। यत्र सर्वेऽपि पक्षा विराजन्ते। तदुक्तम्- 'सर्ववेदपारिषदं हीदं शास्त्रं तत्र नैकः पन्थाः शक्य आस्थातुम्।[2] एवञ्चैतद्व्याकरणं लौकिकपदपदार्थज्ञानसम्पादकं तु भवत्येव अपवर्गस्य द्वारं मोक्षसाधनञ्चापि भवति। तदुक्तम्-

*तद्वरमपवर्गस्य वाङ्मलानां चिकित्सितम्।*
*पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते।।*[3]
*इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।*
*इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः।।*[4]

एवञ्चोभयविधफलप्रसाधकमेतद्व्याकरणदर्शनम्। लोके यथा केवलश्रोत्रग्राह्योगुणः शब्दपदव्यपदेश्यो भवति, न तथा व्याकरणदर्शने। अत्र तु अन्ततः शब्दो ब्रह्मरुपतया स्थितो भवति। एतस्मादेव शब्दब्रह्मणः सकलस्य चराचरस्य जगत उत्पत्तिविनाशादिकं भवति। तदुक्तम्-

*अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।*
*विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।*[5]

अत्र वाग्विषये महान् विचारो विद्यते। सर्वजनग्राह्या श्रोत्रग्राह्या वा वाग्भिन्ना भवति, अनपायिनी, अनादिनिधनस्वभावा ब्रह्मरुपा च वाग्भिन्ना भवति। अत्रेदं बोध्यं- वाग्विषये वैय्याकरणेष्वपि द्विवधं मतं प्रथितं विद्यते। केचन्वाचः त्रैविध्यं प्राहुः, केचन वाचः चतुर्विधत्वं स्वीकुर्वन्ति। तथाहि-

*वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।*
*अनेकतीर्थभेदायाः त्रैय्या वाचः परं पदम्।।*[6]इति

---

[1]धर्मे च प्रत्यये चाङ्गं------। वा.प.1.25

[2]म.भा. 2.1.58

[3]वा.प.1.14

[4]वा.प.1.16

[5]वा.प.1.1

[6]वा.प.1.143

भर्तृहरिकारिकामनुसृत्य केचन पश्यन्तीमध्यमावैखरीभेदभिन्नायाः वाचः त्रैविध्यमिति स्वीकुर्वन्ति। अपरे पुनः-

*परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।*
*हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा।।*[1]इति।

परमलघुमञ्जूषास्थश्लोकमाधारीकृत्य- परा- पश्यन्ती- मध्यमा- वैखरीभेदेन वाचः चातुर्विध्यममङ्गीकुर्वन्ति। तत्र वाचः त्रित्वादिनामभिप्रायो यत्महावैयकरणः श्रीभर्तृहरिः वाचः त्रित्वमेवोक्तवान्, अत एव वैखरीमध्यमयोर्मध्ये तिष्ठतीति मध्यमेत्युच्यते। पश्यन्ती वागेव अविभागा सूक्ष्मा अनपायिनी भवति। तदुक्तम्-

*अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा।*
*स्वरूपज्यातिरेवान्तः सूक्ष्मा वागनपायिनी।।*[2]इति।

'वाचः चत्वारो भेदा' इति स्वीकुर्वतां त्वयमभिप्रायः- वाचः चतुर्विधत्वमन्यत्र प्राप्यत इति महाभाष्यकारेणेङ्गितम्। तथाहि-

*चत्वारि वाक्परिमिताः पदानि, तानि विदुर्ब्राह्मणा ये मनीषिणः।*
*गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति।।*[3]इति

ऋग्वेदीयमन्त्रस्य महाभाष्यमूलव्याख्याने भाष्यकारो यद्यपि 'चत्वारि' इत्यनेन 'नामाख्यातोपसर्गनिपातश्च' इत्येवमर्थं करोति, तथापि तत्र द्वन्द्वान्ते चकार उपात्तो विद्यते, अतः श्रुत्यादिप्रसिद्धायाः परापश्यन्तीमध्यमावैखरीरूपायाः वाचोऽपि ग्रहणमवश्यमभिप्रेतं महाभाष्यकारस्य तत्र भगवतः पतञ्जलेः। अत एव चत्वारि = परापश्यन्तिमध्यमावैखरीलक्षणानि इत्यर्थः सम्मान्निताचार्यैः माधवाचार्यनागेशप्रभृतिभिः स्वीकृतः। तानि परापश्यन्तिमध्यमावैखरी-लक्षणानि वचांसि ब्रह्मणा ये मनीषिणः व्याकरणतत्त्वज्ञास्ते विदन्ति। सामान्यमनुष्यास्तु वाचस्तुरीयं भागं वैखरीरूपमेव वदन्ति। मध्यमापश्यन्तीपाराख्यं यद्वाचः स्वरूपं तत्तु हृदयगुहायां बुद्धौ वा निहितं भवति। तदेवं भाष्यकारस्यापि वाचः चतुष्ट्वमेवाभिप्रेतमित्यायाति।

किञ्च 'वैखर्यामध्यमायाश्च' इत्यादिभर्तृहरिकारिकाया- अनेकतीर्थभेदायाः वैखर्यामध्यमायाः पश्यन्त्याश्च त्रय्यावाचः एतद्व्याकरणं परमुत्कृष्टमद्भुतं पदं स्थानं भवति। वाचः त्रयोऽवयवा एव व्याकरणशास्त्रस्य कथञ्चिद्विषयभूता भवन्ति। अत्र प्रकृतिप्रत्ययविभागद्वारा तत्तदर्थविभागद्वारा वा व्याकरणशास्त्रमत्युपयोगीति भावः। परायां वाचि तथा पदसंस्कारादिकं नैव भवति। अथवा- अनेकतीर्थभेदायाः वैखर्यामध्यमायाः पश्यन्त्याश्च त्रय्यावाचः, परं = श्रेष्ठं पदम्=

[1]परमलघुमञ्जूषा स्फो.

[2]वा.प.स्वो.1.143

[3]ऋग्वेदः उ. म.भा.आ.1

मूलाधारस्थं पराख्यं वाचः तदेतदद्भुतं = विलक्षणं भवति। योगिनामप्यगम्यम्। कदाचित्समाधौ निर्विकल्पकज्ञानगम्यं ब्रह्मरूपं भवतीति भावः।

किञ्चवाचः त्रित्वेऽपि पश्यन्तीवागेव द्विधा विभज्यते- अपरा पश्यन्ती परा पश्यन्ती, स्थूलापश्यन्ती सूक्ष्मापश्यन्ती वा। तत्र या स्थूलापश्यन्ती अपरापश्यन्ती वा सा प्रतिसंहृतक्रमा बुद्धिमात्रग्राह्या सामान्यजनासंवेद्या भवति। या च परा पश्यन्ती सूक्ष्मा पश्यन्ती वा सैव परावाणीरूपेणोच्यते। तथा च भर्तृहरिमतेऽपि वाचः चत्वारो भेदाः सम्भवन्ति। तदेवमाचार्यस्य 'त्रय्या वाचः परं पदम्' इति कथनेनापि वाचः चतुर्विधत्वमायातीति वक्तुं शक्यते।

तत्र सर्वजनग्राह्या श्रोत्रग्राह्या वा वाग्वैखरी वागुच्यते। इयं वाणी कण्ठताल्वाद्यभिघातजन्या भवति। इयञ्च भ्रष्टसंस्कारा प्राप्तसाधुत्वभावा च भवति। तथाहि-

*स्थानेषु विवृते वायौ कृतवर्णपरिग्रहाः।*
*वैखरीवाक्प्रयोक्तॄणां प्राणवृत्तिर्निबन्धना।।*[1]

वैखरीशब्दविषये त्रीणि मतानि। वायोः शब्दत्वापत्तिः = शब्दपरिणामः इति कश्चित्। अणूनां शब्दत्वापत्तिरित्यपरे, अन्ये च ज्ञानस्यैव शब्दपरिणाम इति। तथाहि-

*वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।*[2]
*कैश्चिद्दर्शनभेदो हि प्रवादेष्वनवस्थितः।।*इति।

मध्यमा हृदयस्था भवति। अनया वाचा लोकव्यवहारो न भवति। मनोभूमावस्थानरूपा मानसिकी वाग्बुद्धिमात्रोपादानाक्रमरूपानुपातिनी पश्यन्त्यावैखर्याश्च मध्ये भवतीति मध्यमा वाक्। केवलं बुद्ध्यैव गृह्यते, न तु श्रोत्रेण। तदुक्तम्-

*केवलबुद्ध्युपादाना क्रमरूपानुपातिनी।*
*प्राणवृत्तिमतिक्रम्य मध्यमा वाक्प्रवर्तते।।*[3]

पश्यन्ती वाक् तु लोकव्यवहारातीता भवति। एषा वाग् अविभागा = वाच्यवाचकविभागशून्या प्रतिसंहृतक्रमा सामान्यजनासंवेद्या भवति। योगिनां कृते तु पश्यन्त्यामपि वाच्यवाचकविभागादिप्रकृतिप्रत्ययविभागादिकं वा भवति। योगिनः स्वसमाधौ पश्यन्त्यामपि प्रकृतिप्रत्ययविभागादिकं वाच्यवाचकविभागदिकं वाऽनुभूयानन्दानुभूतिम् अनुभवन्ति। वैखर्यामध्यमया च वाचा सर्वे जनाः अर्थाऽनुभवं कुर्वन्ति। प्रकृतिप्रत्ययविभागं ज्ञातुं प्रभवन्ति। किन्तु पश्यन्त्यां वाचि केवलं योगिन एवार्थाऽनुभवं कुर्वन्ति। इयं च वाग्नाभिसंस्था भवति। मानसिकवृत्तितोऽपि पूर्वावस्थानमस्याबोध्यम्। तदुक्तम्-

---

[1]वा.प.स्वो.1.143

[2]वा1.108.प.

[3]वा1.142.स्वो.प.

*अविभागातुपश्यन्ती सर्वतः संहृतक्रमा।*[1]

परावाक्तु ब्रह्मरुपा, निरवयवा, अगुणा, अतिसूक्ष्मा, स्वप्रकाशस्वभा, प्रकाशस्यापि प्रकाशिका शब्दतन्मात्राणां कारणीभूता आत्मा एव वा भवति। इयं वागनपायिनी, अनादिनिधनस्वभा, सैव च प्रत्यवमर्शिनी भवति। तदुक्तम्-

*स्वरुपज्यातिरेवान्तः सूक्ष्मावागनपायिनी।।*[2]
*न प्रकाशः प्रकाशेत सा हि प्रत्यवतर्शिनी।।*[3]

तदेवं चतसृषु वाक्षु परावागाख्यं शब्दब्रह्म एव सत्यम्। उपाधिभूतोव्यञ्जकः ध्वनिरुपः शब्दोऽनित्ययोऽसत्यः। पश्यन्त्यादिकमपि सर्वं जगदसत्यमेव। परावागेव उपदानभूतं ब्रह्मरुपं सत्यं भवति। कल्पितौ प्रकृतिप्रत्ययौ असत्यौ। तदपेक्षया पदं सत्यम्, ततोऽपि वाक्यं सत्यम्, ततोऽपि च महावाक्यं सर्वापेक्षया च पराख्यं वाग्ब्रह्म एव सत्यं भवति। एवं व्याकरणशास्त्रस्यापि दर्शनत्वम् भवति।

भारतीयदर्शनानामिदं कर्तव्यमिवाभाति यत्सर्वेषां मानवानां कृते कल्याणमार्गं दर्शयेत्, जीवाः साधनधाममोक्षद्धारं मानुषीं तनुमवाप्य मोक्षाऽनुगुणान् धर्मार्थकामपुरुषार्थान् सेवमानाः अन्ते च स्व-स्वरुपभूतं मोक्षपदमवाप्य स्वजन्मसाफल्यं कुर्युरिति। अस्यैव मोक्षस्य नानाविधाः प्राप्त्युपायाः तदनुष्ठानप्रकाराश्च दर्शनेषु प्रतिपादिताः सन्ति। तत्र श्रुतयस्तावत् साक्षादेवदर्शनपदप्रतिष्ठिता भवन्ति। कानिचिन्निदर्शनानि प्रस्तूयन्ते—'तमेव विदित्वा अति मृत्युमेति नान्यः पन्थाः विद्यतेऽयनाय।[4] आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।[5] अयमात्मा ब्रह्म,[6] वाग्वै ब्रह्म[7]' "सच्चिदानन्दं ब्रह्म" इत्यादीनि।

यथा च श्रुत्यनुगुणानां सत्यासत्य-प्रतिष्ठापकानां ब्रह्मसूत्रादीनां दर्शनत्वं भवति, तथा सत्याऽसत्यविवेचनप्रवणस्य व्याकरणशास्त्रस्यापि दर्शनत्वं न केवलमाधुनिकोत्प्रेक्षितम्, अपितु श्रुत्यनुमोदितं तत्प्रशंसितं चापि भवति। यथोक्तम्-

*दृष्ट्वारुपे व्याकरोत् सत्यानृते प्रजापतिः।*

---

[1]वा1.142.स्वो.प.
[2]वा1.142.स्वो.प.
[3]वा1.124.प.
[4]श्वे.3.8
[5](बृ.उ.2.4.5)
[6](बृ.उ.2.5.19)
[7](बृ.उ.4.1.2)

*अश्रद्धामनृतेदद्याच्छ्रद्धां सत्ये प्रजापतिः ।।*[1] इति।

अस्यार्थः- प्रजापतिः वैयाकरणः शब्दोपादानकसृष्टिविधाता संश्लिष्टे सत्यानृते पृथक्कृत्य सत्ये = परमार्थभूते वस्तुनि श्रद्धाम्, असत्ये = अनात्मनि अश्रद्धां कुर्यात्' इति।

परेषामपि दर्शनानामयमेवोद्घोष— इदं सत्यमिदमसत्यम्- "ब्रह्मसत्यं जगन्मिथ्या नेह नानास्ति किञ्चन इत्यादि। एवमिहापि शास्त्रे पराख्यं शब्दब्रह्म सत्यम् अन्यत्सर्वमनित्यमिति। प्रक्रियाप्रदर्शनं तु सत्यप्राप्त्यर्थम्, न तत् परमार्थभूतम्।

*उपायाः शिक्षमाणानां बालानामुपलालना।*
*असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।*[2] इति हर्युक्तेः।

‘नामरूपे व्याकरवाणि’[3] ‘वाधि ब्रह्म[4] "वाग्वैसम्राट्परमं ब्रह्म"[5] ते मुत्युमतिवर्तन्ते यो वै वाचमुपासते"[6] इत्यादयः श्रुतयोऽपि व्याकरणस्य दर्शनत्वे प्रमाणम्। अत एवं वाक्यपदीये अनेकशो निगदितम् -

*अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।*
*विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।*[7]

यत् अनादिनिधनं- उत्पत्तिविनाशरहितम्, अक्षरम्- व्यापकं ब्रह्म- बृंहणशीलः पालनकर्ता, यतः- यस्मादुपादानकारणात्ब्रह्मणः, जगतः-चराचरकार्यमात्रस्य, अर्थभावेन- घटपटादिरूपेण प्रक्रिया-प्रथमोत्पत्तिविवर्तते- अतात्विकरूपेण भवति तत् शब्दतत्त्वमेव भवति ।”

*यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः ।।*[8]
*पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ।।*[9]
*इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः।।*[10]

[1]यजुर्वे. 19,77
[2]वा.प.2.238
[3]छां उ.6.3.2
[4]ऐब्र.2.15
[5]श.ब्रा.146.10.6
[6]वाक्यपदीय 1.138
[7]वा.प.1.1
[8]वा.प.1.12
[9]वा.प.1.13
[10]वा.प.1.16

*"तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते ।।*[1] इति च।

**अयमभिप्रायः- पुरा महर्षिणा व्याडिना प्रणीतः लक्षश्लोकात्मकः संग्रहनामकः ग्रन्थ आसीत्, यत्र च व्याकरणशास्त्रीयाः समेऽपि विषयाः वर्णिता आसन्, अत्र चतुर्दशसहस्राणि वस्तूनि परीक्षतानि आसन्। अत्र व्याडिपूर्वभाविदार्शनिकदृष्टाः पदार्थाः विवेचिता आसन्।**

तत्र भवान् भर्तृहरिस्तु व्याकरणस्य न केवलं दर्शनत्वमपि तु शैवागमादिवत् स्वातन्त्र्येण स्फुटतयाऽऽगमत्वमपि कथितम्।

*यःपतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः।*
*काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः।।*[2]
*पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः।*
*स नीतो बहुमार्गत्वं चन्द्राचार्यादिभिः पुनः।।*[3]
*न्यायप्रस्थानमार्गास्तानभ्यस्य स्वं च दर्शनम् ।*
*प्रणीतो गुरुणाऽस्माकम् अयमागमसंग्रहः।।*[4] इति। च।

इदानीं शब्दशास्त्रीयं ब्रह्मस्वरुपविषये मनागुच्यते- तैत्तिरीयोपनिषदि ब्रह्मणो लक्षणमित्थं भवति- यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति।[5] एतदनुसारेण नामरुपात्मकस्य समस्तस्य प्रपंचस्य सर्ग- स्थिति-ध्वंसकारणं यत्तद्ब्रह्मेति पर्यवसीयते । एतच्च लक्षणं पराख्ये शब्देऽपि संघटते, अत एव तत्रैवोपनिषदि आचार्यो वरुणः स्वसुताय जिज्ञासवे वारुणाय वाचः ब्रह्मत्वं प्रोवाच- " भृगुर्वैवारुणिः वरुणं पितरमुपससार, अधीहि भगवो ब्रह्मेति तस्मा एतत्प्रोवाच- अन्नं, प्राणाः, चक्षुः, श्रोत्रं, मनः, वाचमिति "।[6] वाचोऽपि चराचरभूतानि जायन्ते, उत्पन्नानि च जीवन्ति, अन्ते चास्यामेवाभिसंविशन्ति।

अत एव वाचः सर्वोपादान्त्वं सर्वभोक्तृत्वं सर्वकर्तृत्वं सर्वद्रष्टृत्वं चोपवर्णितमस्ति श्रुतौ। तथाहि-

*वागेव विश्वा भुवनानि जज्ञे, वाच इत्सर्वममृतं यच्च मर्त्यम्।*

---

[1]वा.प.1.22
[2]वा.प.2.480
[3]वा.प.2.481
[4]वा.प.2.482
[5]तै.उ.3.1
[6]तै.उ.3.1

*अथेदद्वाग्बुभुजे वागुवाच, पुरुत्रा वाचो न पदं यच्च नाह।।* [1]इति,

*वागेवार्थं पश्यति वाग्ब्रवीति, वागेवार्थं निहितं संतनोति।*

*वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुक्ते ।।*[2] इति च।

**ब्रह्मसूत्रेऽपि-**" *शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्* "[3] इति सूत्रेण वेदशब्देभ्यो सृष्टेरङ्गीकारात् शब्दस्य ब्रह्मात्मकत्वमुच्यते।

मनुस्मृतौ वेदशब्देभ्य एव नाम कर्मसम्भवो दर्शितः-

*सर्वेषां चैव नामानि कर्माणि च पृथक्पृथक्।*

*वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ।।*[4] इति।

महाभारतेऽपि- वेदशब्देभ्य एव सर्वाः प्रवृत्तयः सूच्यन्ते-

*अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।*

*आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः।।*[5]

*वेदशब्देभ्य एवादौ निर्मिमीते स ईश्वरः।*इति,

*नामधेयानि चर्षीणां याश्च वेदेषु सृष्टयः।*[6] इति।

वाक्यपदीये तु सम्पूर्णेऽपि ब्रह्मकाण्डे शब्दब्रह्मण एवोपासना कृतास्ति तथाहि-

*अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।*

*विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।।*[7] इति,

*शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।*

*छन्दोभ्य एव प्रथमेतद्विश्वं व्यवर्तत ।।*[8]

*अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।*

*प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते।।*[9]

---

[1]वा1.12.स्वो.प.0
[2]वा1.1.स्वो.प.18
[3]ब्र.सू.1.3.30
[4]म.स्मृ.1.21
[5]महा.शान्ति.232.24
[6]महा.शान्ति.232.26
[7]वा.प.1.1
[8]वा1.12.प.0
[9]वा1.1.प.30

तदेतेन श्रुतिस्मृत्युदितेन शब्देऽपि ब्रह्मलक्षणं संगच्छत एव।

काश्चित्श्रुतयः साक्षादेव वाचं ब्रह्मत्वेनोद्घोषयन्ति। तथाहि- " शैलिनिरब्रवीत्वाग्वै ब्रह्म"[1] "वाग्घिब्रह्म"[2] वाग्वैसम्राट् परमं ब्रह्म"[3] वाग्वै ब्रह्म तस्यैव वाचः सत्यमेव ब्रह्म,[4] वाग्ब्रह्म,[5] यत्र वाक् तद्ब्रह्म [6] इत्येतदुक्तं भवति ।

एतच्च ब्रह्मात्मकः शब्दः पर्यन्ततः एको नित्यः आन्तरस्फोटाख्यः परावाक् स्वीक्रियते वैयाकरणनिकाये। कार्यशब्दः ध्वनिरुपः वैखरीपदवाच्यस्तु नानेति शाब्दिकसिद्धान्तः। तदुक्तम्- " इह द्वौ शब्दात्मानौ नित्यः कार्यश्च। तत्र कार्यो व्यावहारिकः पुरुषस्य वागात्मनः प्रतिबिम्बोपग्राही। नित्यस्तु सर्वव्यवहारयोनिः संहृतक्रमः सर्वेषामन्तःसंनिवेशी प्रभवो विकाराणाम्, आश्रयः कर्मणामधिष्ठानं सुख-दुःखयोः, सर्वत्राप्रतिहतकार्यशक्तिर्घटादिविरुद्ध इव प्रकाशः परिगृहीतभोगक्षेत्रावधिः सर्वमूर्तीनामपरिणामाप्रकृतिः सर्वप्रबोधरूपतया सर्वप्रभेदरुपतया च नित्यप्रवृत्तप्रत्यवभासस्वप्नप्रबोधाऽनुकारीप्रवृत्तिनिवृत्तिपदाभ्यां पर्जन्यवद्वावाग्निवच्चप्रसवोच्छेदशक्तियुक्तः सर्वेश्वरः सर्वशक्तिमान्शब्दवृषभः, तस्मिन्खलु वाग्योगविदो विच्छिद्याहंकार- ग्रन्थीनत्यन्तविभागेन संसृज्यन्ते"[7] इति।

अस्मादेवानादिनिधनाच्छब्दब्रह्मणः जगतः प्रक्रिया अर्थभावेन विवर्तते। यथा च एकस्य भास्करस्य नानाविधेष्वपि स्थानेषु प्रतिबिम्बनं न नानात्वहेतुः तथा नित्यस्य शब्दब्रह्मणो नानाबुद्ध्युपारुढत्वेन हेतुना प्रतिबिम्बरुपेण विवर्तनमपि नानाकारेण न नानात्वप्रयोजकम्।

यद्यपि-

*द्वे ब्रह्मणी वेदतिव्ये शब्दब्रह्म परं च यत्।*
*शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति* ।।[8]

इत्यत्र शब्दब्रह्मतः परब्रह्मणोऽतिरिक्तत्वमुक्तम्, तथापि- शाब्दिकसिद्धान्ते शब्दब्रह्मैव परं ब्रह्मशब्देनोच्यते।

---

[1]बृ उ.4.1.2
[2]ऐब्र.2.15
[3]श.ब्रा.146.10.6
[4]श.ब्रा.2.1.4.10
[5]गो.ब्रा.2.10
[6]1.5.2
[7]वा.प.1.30स्वो.वृ.
[8]म. भा. शा.12.276/ना.पु.अ.46.8

तत्र वाचः त्रित्वपक्षे पश्यन्ती वागेव ब्रह्म, पश्यन्त्या एव पराऽपरभेदेन भागद्वयम्। चतुष्ट्वपक्षे तु- परावाङ्मूलचक्रस्था ब्रह्मेति विवेकः।

शब्दब्रह्मप्राप्तिसाधनतयैव अत्र शास्त्रे धात्वर्थ-नामार्थ-जातिव्यक्ति-निपातार्थसाधुत्वादयः दार्शनिकपदार्थाः विवेचिताः सन्ति। साधुशब्दप्रयोगेण शुद्धचित्तः पुमान्पराख्ये शब्दब्रह्मणि संयुज्यते। एवमेव लाघवेन सुशब्दज्ञानाय प्रकृति-प्रत्ययादिविभागः समाश्रितो व्याकरणे। सर्वमेतत्सत्यप्राप्त्युपायभूतम्। तदुक्तम्

*उपायाः शिक्षमाणानां बालानामुपलालनाः।*
*असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ।।*[1] इति,
*तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।*
*तस्य प्रवृत्तितत्त्वज्ञः स ब्रह्मामृतमश्नुते ।।*[2] इति च।

शब्दब्रह्मप्राप्तिविषये मनागुच्यते- निखिलमेव दर्शनं त्रिविधदुःखानामैकान्तिकात्यन्तिकनिवृत्तिरुपं मेक्षं तत्पुरःसरं निरतिशयानन्दावाप्तिस्वरूपं वा मोक्षाख्यं परमपुरुषार्थमुद्दिश्यप्रवर्तमानं भवति। तत्राऽनादिरपौरुषेयः आप्तवाक्श्रुतिर्वेदः तन्मूलकानि सकलानि दर्शनानि चाधिकारिभेदेन स्व-स्वसिद्धान्तानुसारं मोक्षं तदुपायं तदनुष्ठानप्रकारं च प्रदर्श्य परपक्ष खण्डन पुरःसरं स्व-सिद्धान्त-मण्डनं कुर्वन्ति। तदुक्तम्

*प्राप्त्युपायोऽनुकारश्चतस्यवेदोमहर्षिभिः।*[3] इति।

अयमाशयः-" ऋतेज्ञानान्नमुक्तिः" इत्यत्र नकस्यापि दार्शनिकधौरेयस्य विमतिरस्ति। किन्तु " आत्मा वा अरे द्रष्टव्यः" इत्यादिश्रुत्या आत्मदर्शनस्यैव मोक्षहेतुता प्रतिपाद्यते। तत्र द्वैताद्वैतवादप्रभेदशालिनो दर्शनिका इत्यंशे विवदमाना अवलोक्यन्ते, कोऽयमात्मा कुत आयातः क्वच गन्ता कथमस्य बन्धः कथमिवचास्यमोक्ष इति।

तत्र “प्राप्त्युपायोऽनुकारश्च" इति कारिकामवलम्बमानः तत्र भवान् हरिवृषभः स्वोपज्ञवृत्तौ ब्रह्मप्राप्तेरुपायेषु दशविकल्पानुपस्थापितवन्तः।[4]

---

[1]वा.प.2.238
[2]वा.प.1.131
[3] वा.प.1.05
[4] वा.प.1.05 स्वोपज्ञवृत्तिः

तथापि "शब्दप्रमाणकावयम्' इति भाष्योक्त्या भगवतीश्रुतिरेव शाब्दिकानां मोक्षविषये प्रमाणरूपेणशरणम्। महाभाष्ये- " चत्वारि शृंगाः त्रयो अस्य पादाः इत्यादय: श्रुतयः चर्चिताः सन्ति। तदनुसारं मोक्षस्वरूपं निर्धारयता वाक्यपदीयकृता कारिकाद्वयी अवतारिता-

*अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।*
*प्राहुर्महान्तमृषभं येन सायुज्य मिष्यते।।* इति,
*तस्माद्यः शब्दसंस्कारः सासिद्धिः परमात्मनः।*
*तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते।।*[1] इति च।

अयं भावः- प्रयोक्तुः शरीराऽभ्यन्तरे स्थितं महान्तं शब्दात्मानमेव परब्रह्मस्वरूपं- "चत्वारिशृंगा" इत्यादयः श्रुतयः प्रतिपाद्यते।

तदेव मुमक्षुभिरभिलष्यते, तस्य च प्रकाशमानानन्दरूपतया परमपुरुषार्थत्वात्।" चत्वारीति' ' मन्त्रः प्रतिपादयति यत्शब्दब्रह्मणोऽलौकिकस्य वृषभस्य चत्वारि शृंगाणि सन्ति नामाख्यातोपसर्गनिपातानि, परा-पश्यन्ती-मध्यमा-वैखरीरूपाणि वा। भूतभविष्यवर्तमान-कालरूपा अस्य त्रयः पादा भवन्ति। नित्यः कार्यश्चेति शब्दद्वयमस्य द्वे शीर्षे स्तः। प्रथमायाः सप्तम्यन्ताः सप्तविभक्तयोऽस्य सप्त हस्ताः सन्ति। सोऽयं त्रिधा बद्धः चकास्ति-उरसि, कण्ठे, शिरसि च। अथवा शब्दब्रह्मणः देवस्य द्वे शीर्षे भवतः आन्तरबाह्यस्फोटरूपेण। चत्वारि शृंगाणि भवन्ति। दिक्साधन-क्रिया-कालाख्यानि। त्रयः पादा इष्यन्ते-जाति- व्यक्तिसम्बन्धाख्याः। सप्तहस्ता भवन्ति-द्रव्य-गुण-पुरुष-संख्योपग्रहलिंग-वृत्ताख्याः। एवं च उपर्युक्तैः षोडशसंख्याकैः अङ्गैर्विशिष्टः पुरुषः त्रिषु स्थानेषु नाभावुरसि कण्ठे च बद्धः सन्तिष्ठते इत्यर्थो विज्ञेयः।

स चायं शब्दः प्रयोक्तुः ज्ञातुश्चकामान्वर्षतीति वृषभ इत्युच्यते, योऽयं रोरवीति- भृशं शब्दं करोति। स चायं स्वप्रकाशचिद्रूपतया महान् देवः शब्दवृषभः मनुष्यान् आविश्य सन्निष्ठते। व्याकरणज्ञानजन्येन महादेवशब्दवृषभज्ञानेन, माहदेवेन सह ऐक्यं भवतीति व्याकरणाध्ययन-प्रयोजनकथनावसरे मन्त्रोऽयमाकलितो भाष्यकृता। एवं चव्याकरणहेतुको यः किल शब्दसंस्कारः अर्थात्साधुशब्दानामसाधुशब्दतः विविच्य ज्ञानं सैव परमात्मसिद्धेरुपायो विद्यते। तस्य शब्दब्रह्मणः ये षड्भावविकारास्तेषां या परब्रह्मरुपा सत्ता तज्ज्ञः सन्वैयाकरणः श्रुत्यादिप्रसिद्धस्वानुभूतिवेद्यं जरामरणवर्जितं ब्रह्म- अभेदेनसाक्षात्कुरुते। फलतश्च कृतकृत्योभवति।

---

[1] वा.प.1.130,31

तथाचास्यैव चत्वारीत्यादिममंत्रस्य ब्रह्मस्वरुपज्ञापकत्वम्। बद्धो हि पुरुषः स्वस्वरुपं परिज्ञाय बन्धं छेत्तुमर्हति। यतोहि जड़-चैतन्ययोरपृथग्भावेन यद्धार्तज्ञानं तदेवबन्धः श्रुत्युक्तपद्धत्या वैखरी-मध्यमा-पश्यन्तीरुपान्त्रीन्बन्धान्भित्वा पराख्यां चिच्छक्तिं प्रकटीकृत्य कृत्कृत्योभवति।

एवंचोपर्युक्त—शब्दब्रह्मणः स्वरूपं विज्ञाय पुरुषोऽयं बन्धात्प्रमुच्यते।

तथाचायं निष्कर्षः- पराख्याचिच्छक्तिः परब्रह्मरुपा नित्या स्वस्वरुपभूता तदैव सम्प्रकाशते यदा त्रिविधस्य बन्धस्य भेदनं भवति। यदा किल त्रयाणां ग्रन्थीनां साक्षात्कारो भवति। तदा त्रिविधायाः वैखरीप्रभृतेः वाचःप्रलये सति ब्रह्मरुपा परावागेवावशिष्यते यश्च मोक्ष इत्युच्यते । अर्थात्बन्धभेदनमात्रं स्वस्वरुपप्रकाशनं मोक्षः।

एवं च अखण्डानन्दैकरुपस्य परावागात्मनः स्वात्मनः अभिव्यक्तिरेव वैयाकरणनिकाये मोक्षपदार्थः। ससायुज्यलक्षणः । एवं च परं वैदिकानां शाब्दिकानां मते मुक्तस्य पुरुषस्य परमात्मनि चिति वा विलयेन सायुज्यं नेष्यते किन्तु त्रिधाबन्धराहित्येन यत्साम्येनावस्थानं स एव सायुज्यलक्षणो मोक्षः। नचात्र परात्मिकायां शक्तौ अन्तर्गडुशक्त्याश्रयणं किन्तु एषा पराशक्तिरेव अनन्ताः शक्तीः प्रसूते। या मोक्षावस्थायामपि विलीनाः न भवन्ति, किन्तुतासां शक्तीनां यथावज्ज्ञानावस्था मोक्षः। इति शम्।।

***

# प्रातिपदिकार्थविमर्शः

**प्रो. सनन्दनकुमारत्रिपाठी**
साहित्यविभागाध्यक्षः, केन्द्रीयसंस्कृतविश्वविद्यालयः
भोपालपरिसरः, भोपालम्

लघ्वर्थं चाऽध्येयं व्याकरणमिति भाष्यरीत्या व्याकरणाध्ययनस्य मुख्यं प्रयोजनं शब्दानुशासनमेव ज्ञायते। तत्र शब्दानामनुशासनं प्रकृतिप्रत्ययविवेकद्वारैव भवति। प्रकृतिः खलु सामान्येन द्विधा कल्प्यते प्रातिपदिकरुपा धातुरूपा च। यद्यपि प्रातिपदिकमपि कथञ्चित् धातुत एव निर्मीयते तथापि प्रकृतिकोटौ प्रातिपदिकस्य महन्महत्त्वमिति नाऽविदितं विदुषाम्। प्रातिपदिकं नाम वेत्यनर्थान्तरम्। तत्राऽस्मिन् निबन्धे प्रातिपदिकार्थः कः इति विचार्यते।

शास्त्रे षोढा प्रातिपदिकार्थो वर्णितः। तथाहि –

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः।।[1]

इति भूषण वचनेन पञ्च प्रातिपदिकार्थः।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।[2]

इति भर्तृहरिवचनेन च शब्दोऽपि प्रातिपदिकार्थः। इत्येवं षोढा प्रतिपदिकार्थः कल्प्यते। तत्र एकम् = जातिः, द्विकम् = जातिः व्यक्तिश्च, त्रिकम् = जातिः, व्यक्तिः, लिङ्गञ्च, चतुष्कम् = जातिः, व्यक्तिः, लिङ्गम्, संख्या च, पञ्चकम् = जातिः, व्यक्तिः, लिङ्गम्, सङ्ख्या, कारकमिति। शब्दसहितं पञ्चकमिति प्रातिपदिकार्थस्य षोढात्वम्।

तत्र मीमांसकाः एकं प्रातिपदिकार्थः इति स्वीकुर्वन्ति। एतेषां नये जातावेव शक्तिः न तु व्यक्तौ। व्यक्तौ शक्तिस्वीकारे व्यक्तीनामानन्त्यात् गौरवमापद्येत। यद्युच्यते शक्तिग्राहकशिरोमणि वृद्धव्यावहारेण व्यक्तावेव प्रथमं शक्तिग्रह उदेति कथं न व्यक्तौ शक्तिरिति तत्रोत्तरं नाऽगृहीतविशेषणबुद्धिर्विशेष्य उपजायते इति न्यायेन विशेषणे एव शक्तिः कथञ्च विशेष्ये तु लक्षणा

---

[1] वैयाकरणभूषणसारः नामार्थनिरूपण, कारिका - 25

[2] वाक्यपदीयम्, ब्रह्मकाण्डम् – कारिका- 123

भवतीति। अयमभिप्रायः वृद्धव्यवहारेण हि व्यक्तौ शक्तिज्ञानं जायते अथाऽपि व्यक्तीनामनन्त्यात् तासु तासु सर्वासु व्यक्तिषु शक्तिग्रहाऽसम्भवात् जात्याश्रयभेदभिन्न- नानाशक्तिकल्पनेऽति गौरवं स्यात् ।अतः पश्चात् जातौ एव शक्तिः स्वीक्रियते इति।

किञ्च यदि व्यक्तौ शक्तिः स्वीक्रियते तदा कस्याञ्चित् एकस्यां व्यक्तौ शक्त्युपदेशे सति व्यक्त्यन्तरे उपदेशाऽभावेन व्यक्त्यन्तर बोधो न स्यात्। एवं व्यक्तयोऽनन्ताः इति सर्वत्र पृथक्-पृथक् शक्त्युपदेशस्वीकारे आनन्त्यदोषो जायेत। किञ्च व्यक्तौ शक्तिः स्वीकार्या जातौ एव लक्षणेति केचिद् वदन्ति इति तदपि नोचितम्, यतः जातिशक्तिवादे व्यक्तिबोधाय स्वाश्रयत्वरूपः शक्यसम्बन्धः, व्यक्तिशक्तिवादे व्यक्त्यन्तरबोधाय स्वसमेवेताश्रयत्वरूपः शक्यसम्बन्धः इति व्यक्तिशक्तिवादे लक्षणास्वरूपे गौरवात् व्यक्तौ शक्तिः स्वीकर्तुं न शक्यते। एवञ्च लाघवात् जातावेव शक्तिः व्यक्तिबोधस्तु लक्षणया इति जातिशक्तिवादिनां मीमांसकानामभिप्रायः।

तदेतन्मीमांसकमतं व्यक्तिवादिभ्यो न रोचते। गामानय इत्यादौ अन्वयानुपपत्तिसत्त्वात् व्यक्तिबोधः लक्षणया भवतीति सत्यम्, किन्तु गौः अस्ति इति प्रयोगे जातिशक्तिवादिनां मीमांसकानां मते गोपदादुपस्थितस्य गोत्वस्यापि सत्ता-क्रियायामन्वयसम्भवेन अन्वयाऽनुपपत्तिरूपलक्षणबीजाऽभावात् लक्षणाऽभावेन व्यक्तिबोधाऽनुपपत्तिः स्यात्। अतः न जातौ शक्तिः स्वीकर्तुं शक्यते, यद्युच्यते व्यक्तौ शक्तिस्वीकारे व्यक्तीनामान्त्यात् शक्त्यानन्तप्रसङ्ग इति तदा इदं बोध्यम् शक्यतावच्छेदकजातेः उपलक्षणत्वेन तदैक्येन च तादृशजात्युपलक्षितव्यक्तौ शक्तिस्वीकारेण अनन्तशक्तिकल्पनाऽभावेन गौरवाऽभाव एव भवतीति। तथा चोक्तम्-

आनन्त्येऽपि हि भावनामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति।।

किञ्च यदि सर्वत्रैव जातिपक्षः आश्रितः स्यात् तदा एकेनैव शब्देन द्वयोर्बहूनां वा ज्ञानसम्भवात् एक- शेषविधानमनर्थकं स्यात् अतः व्यक्तिपक्षवादः आस्थितो भवति।

'शक्तिग्रहं व्याकरणोपमान' इति शक्तिग्राहकेषु शिरोमणि व्यवहारः व्यक्तौ एव शक्तिं ग्राहयति इति व्यक्तिवादिनामभिप्रायः। व्याकरणदर्शने तु केवलं जातिपक्षस्य व्यक्तिपक्षस्य वा आश्रयेण लक्षणं कर्तुं न शक्यते। अत एव भगवान् पाणिनिः 'जात्याख्यायां बहुवचनमन्यतरस्याम्' इति सूत्रे जातिपक्षमङ्गीकृतवान्।[1] एवमेव 'सरूपाणामेकशेष एकविभक्तौ' इति सूत्रे व्यक्तिपदार्थमङ्गीचकार। सूत्रद्वये उभयपदार्थः क्रमशः स्वीकृतः।

---

[1] पा. अष्टा – 1.2.58

भगवता भाष्यकारेण पतञ्जलिनाऽपि पक्षद्वयमाश्रित्य सविस्तरं विवेचनं व्यधायि। केषाञ्चिन्मते सर्वेषां शब्दानां जातिपदार्थः स्वीक्रियते। द्रव्योपस्थितिर्लक्षणयाक्षेपात् सामर्थ्याद् वा भवति। आख्यातस्थानेऽपि क्रियाजातेरेवाभिधानं जायते। शुक्लादिषु गुणशब्देष्वपि गुणत्वजातेरेवाभिधानं संज्ञाशब्देषु जातेर्वाचकत्वम्। एवं सर्वत्र जातिपदार्थः। सा जातिः परमार्थतो ब्रह्मरुपा। तस्या एवापरं नाम सत्ता। धातुभ्योऽपि सत्ता एव बुध्यते। सा सत्तैव प्रातिपदिकार्थ इति भर्तृहरिणाऽपि समुदघोषि –

सम्बन्धिभेदात् सत्तैव विद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः।
तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः।।[1]

एवं जातिपदार्थवादपक्षे सर्वत्रान्वयित्वेन जातिरेव विवक्षाविषयः। सा जातिः सर्वेषामनित्यपदार्थानां महाप्रलये नाशे सत्यपि विद्यमाना भवति। महाप्रलयकालेऽप्यात्यन्तिकलयो नैव जायते। अस्याः जातेः सद्भावो ब्रह्माण्डान्तरसद्भाव आत्यन्तिकलयेऽपि तिष्ठत्येव। उक्तं हि-

अण्डानामीदृशानान्तु परिसंख्या न विद्यते।[2]

घटपटादीनां बौद्धार्थानां सद्भावात् तदाश्रिता जातिरिति वा। अथवा ब्रह्मस्वरूपत्वात् निराश्रयैव जातिः। ‘सरुपाणामेकशेष’[3] इति सूत्रस्य भाष्ये जातिपक्षोऽयं दृढं समर्थितः। एवं सर्वत्रैव जातिबोधः। जातिश्च प्रवृत्तिनिमित्तस्योपलक्षणम्।

व्याडिः व्यक्तिपदार्थं समर्थयते। ‘तथा च लिङ्गवचनसिद्धिः’[4] इति लिङ्गवचनसिद्धिः व्यक्तिपदार्थस्वीकारादेव भवति। चोदनासु प्रवर्तकवाक्येषु व्यक्तिरेवोपयुज्यत इति ‘चोदनासु च तस्यारम्भात्’[5] इति वार्तिकेन स्पष्टम्। एवं व्यक्तिपक्षोऽपि बहुशः समर्थितः। यथा- ‘न चैकमनेकाधिकरणस्थम्’[6] ‘विनासे प्रादुर्भावे च सर्वनाशः स्यात्’[7] ‘अस्ति च वैरूप्यम्’[8] व्यर्थेषु च मुक्तसंशयः’[9]

---

[1] वाक्यपदीयम्- जातिसमुद्देशः
[2] वाक्यपदीयम् – 3.1.43
[3] महाभाष्यम् – 1.2.64
[4] महाभाष्यम् – 1.2.64 वा. - 47
[5] महाभाष्यम् – 1.2.64 वा. - 48
[6] महाभाष्यम् – 1.2.64 वा. - 49
[7] महाभाष्यम् – 1.2.64 वा. - 50
[8] महाभाष्यम् – 1.2.64 वा. - 51
[9] महाभाष्यम् – 1.2.64 वा. - 53

इत्थं महाभाष्ये जातिव्यक्तिपक्षयोरुभयोरपि प्रतिपादनमवाप्यते।

यदि सर्वत्रव्यक्तिपक्षस्यैवाश्रयणमत्र शास्त्रे भवेत् तदा- 'ब्राह्मणाः पूज्या' 'सम्पन्ना ब्रीहयः' इत्यादौ व्यक्तिबहुत्वादेव बहुवचनं सिद्ध्यति किमर्थं जात्याख्यायामेकस्मिन् इति सूत्रम्। यदि च सर्वत्र जातिपक्षस्यैव आश्रयणं भवेत् तदा जातेः एकत्वेन एकशब्दप्रयोगे तेनैव भवति च सकलजात्यवच्छिन्नव्यक्त्युपस्थितिः भवेत्, बहूनां प्रयोग एव न प्राप्नोति, एकशेषकारणार्थं सरुपाणामितिसूत्रं व्यर्थं भवति।

अत एवात्र दर्शने उभयपक्षाश्रयणं क्रियते। तदुक्तं- पदमञ्जर्याम्- इह केषाञ्चित् जातिपदार्थः, गृहीतसम्बन्धो हि शब्दोऽर्थं बोधयति, नचक्षुरादिवत्तन्निरपेक्षः, सम्बन्धग्रहणञ्च व्यक्तिषु न सम्भवति तासामानन्त्यात्। केषाञ्चिद् व्यक्तिः पदार्थः तत्रैव वाहदोहादिकार्यान्वयात्। जातौ हि पदार्थे.......... पाणिनेस्तूभयम् पदमञ्जरी।।[1]

पाणिनीयदर्शनं सर्वोपकारकं वर्तते। पुरा महर्षिः व्याडिः लक्षश्लोकात्मकं व्याकरणदर्शनग्रन्थं प्रणीतवान्। तत्र तत्तद्दर्शनप्रणेतृणाम् अभिमताः पदार्थाः प्रतिपादिताः। अत एव- सर्ववेदपरिषदं हीदं शास्त्रं तत्र नैकः पन्थाः शक्य आस्थातुम्[2] इत्युक्तं भाष्यकृता। अत एव यथा योग्यमत्र कदाचित् व्यक्तिपदार्थवादः कदाचिच्च जातिपदार्थवादः स्वीक्रियते। जातेः व्यक्तेर्वा पदार्थत्वे कश्चन फलभेदो न भवति सामान्यप्रतिबद्धैव व्यक्तिः कार्यं प्रतिपद्यते। सामान्यमपि व्यक्तिद्वारेणैव कार्यं प्रतिपद्यते।

वस्तुतस्तु- "न ह्याकृतिपदार्थिकस्य द्रव्यं न पदार्थोः द्रव्यपदार्थिकस्य वाऽऽकृतिर्न पदार्थः। उभयरुपोऽयं पदार्थः। कस्यचित्तु किञ्चित् प्रधानभूतं किञ्चिद् गुणभूतम्। आकृतिपदार्थिकस्याऽऽकृतिः प्रधानभूता, द्रव्यं गुणभूतम्। द्रव्यपदार्थिकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता"[3] इति भाष्यग्रन्थेन। विशिष्टशक्तिवाद एव वैयाकरणसम्मतः। कदाचित् जातिविशिष्टं द्रव्यं पदार्थः, कदाचिच्च द्रव्यविशिष्टा जातिः पदार्थ इति लक्ष्यानुरोधात् स्वीक्रियतेऽत्र दर्शने। एवञ्च मीमांसकोक्ताष्टपक्षीयमध्ये तृतीयः पक्षः 'विकल्पेन'[4] इत्यत्र शास्त्रे अश्रियते। स च विकल्पः लक्ष्यानुसारी भवति न तु यदृच्छयेति बोध्यम्। तथा च जातिविशिष्टं द्रव्यं, द्रव्यविशिष्टा

---

[1] पदमञ्जरी मा. सू. 5

[2] महाभाष्यम् – 1.2.64 वा. - 58

[3] महाभाष्यम् – 1.2.64 वा. - 64

[4] द्वौ च पक्षावुपन्यस्तौ भाष्यकारेण यद्यपि। व्याख्यातारस्तथा कुर्युः पक्षान्तराण्यपि।
नियोन विकल्पेन द्वे वा सह समुच्चिते। सम्बन्ध समुदायो वा विशिष्टा वैकयेतरा।।
एते पक्षा पुनर्योज्या व्यतिकीर्णाः परस्परम्। लिङ्गकारकसंख्याभिः संहतासंहतात्मभिः।।
पुनर्जात्यादिपक्षाणां तादृश्येवात्र योजना।। मी. द. टुप्टीका 1.3.9

जातिर्वा पदार्थः वैयाकरणसम्मतः। यदि च पृथक्जातिव्यक्त्योः शक्यत्वं स्वीक्रियते तदा गोपदात् गोत्वमित्याकारकं निर्विकल्पकं स्मरणं स्यात्, अनुभवस्मरणयोः समानविषयकत्वस्वीकारात्। अत्र जातेः प्राधान्यविवक्षायां द्रव्यगतद्वित्वादिकमादाय द्विवचनादिप्रयोग उपपद्यते। व्यक्तिविशिष्टजातिबोधे व्यक्तौ निरवच्छिन्नैव प्रकारता भवति इति विशिष्टे शक्तिस्वीकारः। 'नियतोपस्थितिकः प्रातिपदिकार्थः'[1] इत्यनेनापि जातिव्यक्तिवादः समर्थितो भवति। यतोहि प्रायः सर्वत्र जातिव्यक्त्योः स्थितिर्भवति। 'यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेन उपस्थिति स तदर्थः' इति शेखरेणापि एतदेव समर्थ्यते।[2] 'परे तु प्रातिपदिकशब्देन प्रवृत्तिर्निमित्तं तदाश्रयश्च स च मुख्य इव आरोपित- तदाश्रयोऽपि'[3] इत्यत्रापि प्रवृत्तिनिमित्ततदाश्रयशब्दाभ्यां जातिव्यक्ती एव उच्येते।

त्रिकनित्यपि प्रातिपदिकार्थ एव। अत्र प्रमाणं 'स्वमोर्नपुंसकात्'[4] नपुंसकलिङ्गवाचकात् प्रादिपदिकात् स्वमोर्लुक् स्यात्। 'ह्रस्वो नपुंसके प्रातिपदिकस्य'[5] नपुंसकलिङ्गवाचकस्य प्रातिपदिकस्य अन्तस्य ह्रस्वः स्यात्- इत्यादि सूत्रमेव। यद्यपि तत्तत्प्रत्ययसन्निधानेनैव तत्तत्स्थलेषु स्त्रीत्वादेर्बोधो भवति। यथा- देवः, देवी, तटः, तटी, तटम्, गृहम्, गृहः इति तथापि तत्र प्रत्ययानां द्योतकत्वमेव स्वीकर्तव्यम्। अत एव 'अजाद्यतस्टाप्'[6] इत्यस्यार्थः – 'अजादीनामकारन्तस्य वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यात्' इति भवति। किञ्च यदि स्त्रीत्वादेः प्रत्ययार्थत्वं स्वीक्रियेत, तदा तस्य प्राधान्यं स्यात्।[7] किञ्च नेयं व्याप्तिर्यत्- तत्तत्प्रत्ययसत्व एव लिङ्गबोधो भवति। तथाहि – 'वाग्', 'वेधाः', 'मधु' इत्यादौ प्रकृतिमात्रतोऽपि स्त्रीपुंनपुंसकस्य लिङ्गस्य बोधो भवत्येव। अतः लिङ्गस्यापि प्रातिपदिकार्थत्वमेव न्याय्यम्।

एतच्च लिङ्गम्- स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदऽभावे नपुंसकम्।।[8]

इति लक्षणलक्षितमवयवसंरचनरूपं लौकिकं शास्त्रे नाश्रीयते। यतः एतादृशं लिङ्गम् अचेतनखट्वावृक्षादौ न सम्भवति। अतः प्रातिपदिकार्थरूपं भिन्नमेव शास्त्रीयं लिङ्गं भवति।

---

[1] वै. सि. कौ. कारक प्र. प्रातिपदिकार्थ इति सूत्रे।
[2] ल. श. शे. का. प्र.
[3] ल. श. शे. का. प्र.
[4] पा. सू.
[5] पा. सू.
[6] वै. सि. कौ. स्त्रीप्रत्यय
[7] ल. श. शे. अजाद्यातष्टाप्
[8] म. भा. 4.1.2

तच्च सत्त्वरजस्तमसां प्राकृतगुणानाम् उपचयापचयस्थितिरूपं भवति। एतेषां गुणानाम् उपचयः पुंस्त्वम्, अपचयः स्त्रीत्वम्, साम्यावस्था च नपुंसकत्वं भवति।

संख्याऽपि नामार्थ इति चतुष्कं प्रातिपदिकार्थः। अत्रापि विभक्तीनां द्योतकत्वं मन्तव्यम्। अत एव विभक्तिं विनाऽपि दधि, मधु, सरित् इत्यादौ संख्याविषयकप्रतीतिः भवत्येव। अत एव एकत्वेऽपि कदाचित् बहुवचनम् 'ब्राह्मणाः न हन्तव्याः', 'जात्याव्याख्यायामेकस्मिन बहुवचनमन्यतरस्याम्'[1] अत एव च 'आदिर्ञिटुडवः'[2] इति सूत्रभाष्ये- आदिरिति बहुत्वे एक वचनम् इत्युक्तम्।

अत एव- वाचिका द्योतिका वा स्युः द्वित्वादीनां विभक्तयः[3]

कारकमपि प्रातिपदिकार्थ एव। अत एव प्रत्ययं विनापि केवलं प्रकृतिमात्रतोऽपि दध्यस्ति दध्यानय इत्यादौ कर्त्रादिकारकाणां प्रतीतिः भवति।

शब्दोऽपि प्रातिपदिकार्थः वैयाकरणैः स्वीक्रियत इति षोढ प्रातिपदिकार्थः। 'युधिष्ठिरः आसीत्।' इत्यादौ युधिष्ठिरशब्दवाच्य कश्चन आसीत् इति बोधो भवत्येव।

सर्वं ज्ञानं शब्दानुविद्धमेव भवति। तदुक्तम् —

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।[4]

किञ्च दीपादेः तेजसो यथा द्वे शक्ती भवतः। दीपोऽन्यद्वस्तु प्रकाशयति, सहैव स्वयं प्रकाशितो भवति। स्वस्माद् भिन्नस्य वस्तुनः ग्राहको भवति, स्वयञ्च ग्राह्यो भवति तथैव शब्दोऽपि स्वार्थानां वाचको भवति, तथा शब्दस्य स्वरूपादि शब्देनैव वाच्यं भवति। तदुक्तम् —

ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगवस्थिते।।[5]

अत एव 'गामुच्चारय' इत्यादौ गोशब्दस्य अर्थः- गोशब्द एव भवति। सास्नादिमत्पदार्थस्य उच्चारणाऽभावात्। एवञ्च षोढा प्रातिपदिकार्थो वैयाकरणैः स्वीक्रियत इति स्थिरीभवतीति शम्

---

[1] पा. सू.
[2] महाभाष्यम्
[3] वाक्यपदीयम्
[4] वाक्यपदीयम्
[5] वाक्यपदीयम्

# स्तोकं पाकः, स्तोकः पाकः, इति वाक्यद्वयसाधुत्वविमर्शः

डॉ. प्रदीपकुमारपाण्डेयः
सहाचार्यः, व्याकरणविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, भोपालपरिसरः

लोकेऽर्थबोधनायैव वाक्यप्रयोगः, इत्यत्र न कस्यापि विमतिः, किन्तु प्रयुक्तवाक्येनाऽभीष्टार्थबोधः साधुवाक्येन, असाधुवाक्येन वेति। सिद्धान्ते दृश्यते विवादो दार्शनिकसमुदाये। तत्र वैय्याकरणमते शाब्दबोधकारणकूटौ पदवाक्ययोः साधुत्वाऽसाधुत्वययोः निवेशो नास्ति, अतः समानरूपेण साध्वसाधुवाक्ययोः बोधो भवति, सति शक्तिज्ञानादिकारणसत्त्वे, न्यायनये तु शाब्दबोधे यत् पदज्ञानं करणं तत्तु साधुपदमेव भवितव्यम्। यतः पदसमुदायो वाक्यं भवति, अतः साधुवाक्यमेव वाक्यार्थबोधं प्रति कारणम्। पदवाक्ययोः साधुत्वनिश्चयश्च व्याकरणेनैव भवति सर्वमते, परञ्च शब्दसाधुत्वप्रणाल्यां भवति मतभेदः, एवं रीत्या ''स्तोकं पाकः, स्तोकः पाकः '' इति वाक्यद्वयस्यापि साधुत्वे मतभेदाऽभावेऽपि साधुत्वप्रणाल्यां मतभेदः। तस्य युक्तायुक्तत्वं विवेचनीयमिति मत्वा पूर्वं न्यायमतमुपस्थाप्यते- न्यायनये वाक्यद्वयेनापि अभेदसम्बन्धावच्छिन्नस्तोकत्वावच्छिन्नप्रकारतानिरुपितपाकत्वावच्छिन्नविशेष्यताकः शाब्दबोधो जायते। तत्र स्तोकः पाकः इति वाक्येन निरुक्तबोधे न काचित् विप्रतिपत्तिः, विशेष्यविशेषणवाचकपदयोः समानविभक्तिकत्वात्। परञ्च स्तोकं पचतीति वाक्येन न तादृशो बोधः समीचीनं प्रतिभाति धात्वर्थपाके स्तोकरुपनामार्थस्याऽभेदेनान्वयस्याऽव्युत्पादनात्, ''अभेदान्वयबोधश्च प्रातिपदिकार्थे स्वसमानविभिक्तिकेन, स्वाव्यवहितपूर्ववर्तिना च पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते[1]'' इति व्युत्पादनात्। भेदान्वयबोधोऽपि न सम्भवति नामार्थधात्वर्थयोः साक्षात् भेदान्वयबोधस्याऽव्युत्पन्नत्वात्। उक्तञ्च ''भेदान्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थेन च सममेव जायते न त्वन्येन[2]'' अर्थात् नामार्थधात्वर्थयोः साक्षात् भेदान्वयबोधो

---

1 सुदर्शनाचार्य विरचित आदर्शटीका समलंकृत गदाधरभट्टाचार्य प्रणीत व्युत्पत्तिवाद पृष्ठसं 04 प्रकाशक पूर्वतन राष्ट्रिय संस्कृत संस्थान मानित विश्वविद्यालय नई दिल्ली, सम्पादक प्रो. हरेराम त्रिपाठी, सम्पादन सन 2011 संस्करण प्रथम

2 सुदर्शनाचार्य विरचित आदर्शटीका समलंकृत गदाधरभट्टाचार्य प्रणीत व्युत्पत्तिवाद पृष्ठसं 92 प्रकाशक पूर्वतन राष्ट्रिय संस्कृत संस्थान मानित विश्वविद्यालय नई दिल्ली, सम्पादक प्रो. हरेराम त्रिपाठी, सम्पादन सन 2011 संस्करण प्रथम

न जायते, स्तोकं पचतीति वाक्येन कथं निरुक्तार्थबोधः इति प्रश्नस्य समाधानायोक्तं गदाधरेण यत् ''विरुद्धविभक्त्यवरुद्धपदोपस्थापितस्यापि स्तोकमृदादेर्धात्वर्थपाकादावऽभेदान्वयो व्युत्पत्तिसिद्धः तदनुरोधेन च द्वितीयान्तपदधातुपदयोः समभिव्याहारस्याप्यभेदान्वयबोधोपयिकाऽऽकाङ्क्षात्वमुपगम्यते[1]'' अस्येदं तात्पर्यं यत् यथा नीलस्य घटः इत्यादौ सुबन्तप्रयोगे विशेष्यविशेषणवाचकपदयोः विरुद्ध-विभक्त्यन्तत्वे, अभेदान्वयबोधो न भवति तथा स्तोकं पचति, इत्यादौ तिङन्तप्रयोगेऽपि विशेष्यविशेषणवाचकपदयोः विरुद्धविभक्त्यन्तत्वादभेदान्वयबोधो न भविष्यति। (तिङन्तप्रयोगे विरोधः असमानाधिकरण्यमेव। तच्चेत्थम्। तिङ्प्रत्ययस्य प्रकृतिः सर्वदा धातुरेव भवति, धातोश्चाप्रातिपदिकत्वेन कदापि सुप्प्रत्ययस्य प्रकृतिः न भवितुमर्हति, एवमेव सुप्प्रत्ययस्य या प्रकृतिः सा कदापि तिङ्प्रत्ययस्य प्रकृतिः न भवितुं शक्नोति) अभेदान्वयबोधश्चेष्टः, अतः एतादृक्वाक्यानाम् अभेदान्वयबोधोपयिकाकांक्षा स्वीकृता यत् '' यद्द्वितीयान्तपदधातुपदयोः समभिव्याहारोऽप्यभेदान्वयबोधे कारणम्[2]'' निरुक्तशाब्दसामग्रीस्वीकारे स्तोकं पचति, इति वाक्येन स्तोकाऽभिन्नः पाकः इति बोधो जायते। परञ्चात्र वाक्ये धात्वर्थपाके, अभेदन विशेषणीभूते स्तोकपदे द्वितीया न भवितुं शक्नोति, अनुशासनाभावात्। यतोहि क्रियाजन्यफलाश्रयत्वमेव कर्मत्वम्'' एतादृश-कर्मवाचकपदादेव द्वितीया अनुशिष्यते, यतः आश्रयता भेदसम्बन्धेनैव सम्भवति, न त्वभेदेन। अत्र हि धात्वर्थपाके अभेदेनैव स्तोकपदार्थस्याऽन्वयः, अतः स्तोकपदार्थस्य क्रियाजन्यफलाश्रयत्वाऽभवात् न स्तोकपदात् द्वितीया, एवं रीत्या वाक्यस्यैवा-साधुत्वमिति मनसि निधायोक्तं यत्, ''क्रियाविशेषणानां क्लीबत्वं कर्मत्वञ्च[3]'' यतः अनेनानुशासनेन क्रियाविशेषणे कर्मत्वस्यातिदेशो भवति, अतः स्तोकं पचति, इत्यादिवाक्यघटकस्तोकपदस्याऽर्थे निरुक्तानुशासनेन कर्मत्वोपचारात्, औपचारिकं यत् कर्मत्वं तदाश्रित्य द्वितीयासत्त्वे वाक्यस्य साधुत्वम्। ननु यदि क्रियाविशेषणानां कर्मत्वमित्यनुशासनेन सर्वत्र क्रियाविशेषणस्थले द्वितीयातिरिक्तविभक्तिर्नातिदिश्यते तदा स्तोकः पाकः , इति वाक्यस्याऽसाधुत्वम्, यतोहि अत्रापि स्तोकपदार्थस्य धात्वर्थपाकेनाऽभेदान्वयसत्त्वेनाऽत्रापि स्तोकपदात् द्वितीयापत्तिः। न चात्र

1 सुदर्शनाचार्य विरचित आदर्शटीका समलंकृत गदाधरभट्टाचार्य प्रणीत व्युत्पत्तिवाद पृष्ठसं 42 प्रकाशक पूर्वतन राष्ट्रिय संस्कृत संस्थान मानित विश्वविद्यालय नई दिल्ली, सम्पादक प्रो. हरेराम त्रिपाठी, सम्पादन सन 2011 संस्करण प्रथम
2 सुदर्शनाचार्य विरचित आदर्शटीका समलंकृत गदाधरभट्टाचार्य प्रणीत व्युत्पत्तिवाद पृष्ठसं 42 प्रकाशक पूर्वतन राष्ट्रिय संस्कृत संस्थान मानित विश्वविद्यालय नई दिल्ली, सम्पादक प्रो. हरेराम त्रिपाठी, सम्पादन सन 2011 संस्करण प्रथम
3 सुदर्शनाचार्य विरचित आदर्शटीका समलंकृत गदाधरभट्टाचार्य प्रणीत व्युत्पत्तिवाद पृष्ठसं 42 प्रकाशक पूर्वतन राष्ट्रिय संस्कृत संस्थान मानित विश्वविद्यालय नई दिल्ली, सम्पादक प्रो. हरेराम त्रिपाठी, सम्पादन सन 2011 संस्करण प्रथम

पाकशब्दे पच्धातुः घञ्प्रत्ययः, प्रकृतिप्रत्ययसमभिव्याहारे प्रत्ययार्थस्यैव प्राधान्येन तत्रैव स्तोकपदार्थस्यान्वयः, यतोहि विशेष्यत्वेनोपस्थिते पदार्थे एव पदार्थान्तरस्यान्वयः। क्रियाविशेषणवाचकात् पदात् द्वितीया तत्रैव भवति यत्र क्रियाविशेषणस्य धात्वर्थेऽभेदेनान्वयः, एवं सति न स्तोकः पाकः , इत्यत्र स्तोकपदात् द्वितीयापत्तिरिति वाच्यम्। पाकः इति शब्दः पच्धातुना भावार्थकघञ्प्रत्ययेन साधुत्वं भजति, तथा च प्रकृत्यर्थेन यथा पाकक्रियायाः उपस्थितिः तथा प्रत्ययार्थेनापि प्रकृत्यर्थवत् पाक क्रियायाः उपस्थितिः भवति, ''उक्तार्थानामप्रयोगः'' इति न्यायेनैकस्यैव पाकस्य द्विराविधानं न सम्भवति, अतः प्रकृत्यर्थेनैव पाकक्रियायाः उपस्थितिः प्रत्ययस्तु साधुत्वार्थकः एव। एवञ्च धातुनैव पाकक्रियायाः उपस्थितिसत्त्वात् तत्रैव च स्तोकपदार्थस्याऽन्वयसत्त्वेन स्तोकपदात् द्वितीयायाः आपत्तिः दुरुद्धरैवेति। न च पाकः इत्यत्र प्रकृतिप्रत्ययार्थाभ्यां समानक्रियायारुपस्थितिसत्त्वेन प्रत्ययेनैव पाकक्रियायाः उपस्थितिः स्वीक्रियते, तत्र च स्तोकपदार्थस्यान्वयसत्त्वेन धात्वर्थक्रियायामन्वयाऽभावेन न निरुक्तानुशासनेन स्तोकपदात् द्वितीयापत्तिरिति वाच्यम्। अनेकभावार्थकप्रत्ययानां प्रकृतिभूतधात्वर्थक्रियायां शक्तिकल्पनापेक्षया लाघवात् धातोरेव क्रियायां शक्तिः कल्पनीया, अन्यत्र तण्डुलं पचतीत्यत्र अगत्या धातोः क्रियायां शक्तिः स्वीकार्यैव, अतो भवार्थप्रत्ययस्थलेऽपि धातोरेव क्रियायां शक्तिः स्वीकार्या, एवं सति स्तोकः पाकः इत्यत्रापि स्तोकपदात् द्वितीयायाः आपत्तिः ताद्वस्थ्यैवेति वाच्यम्। क्रियाविशेषणानां क्लीबत्वं कर्मत्वञ्च'' इत्यनुशासने क्रियापदस्य सार्थकप्रत्ययान्तधातूपस्थाप्यक्रिया परत्वात् न दोषः, यतोहि पाकः इत्यत्र घञः साधुत्वमात्रार्थकत्वेन सार्थकत्वाऽभावात्, तदन्तधातूपस्थाप्य पाकक्रियायां स्तोकपदार्थस्य विशेषणत्वेऽपि न स्तोकपदात् द्वितीया। स्तोकं पचति, इत्यादौ तु तिप्प्रत्ययस्य कृत्यर्थवाचकत्वेन सार्थकत्वात् तदन्तधातूपस्थाप्य क्रियायां स्तोकपदार्थस्य विशेषणत्वेन द्वितीयासत्त्वे न काचित् विप्रतिपत्तिः। ननु यदि भावार्थकप्रत्ययानां न सार्थकत्वं स्वीक्रियते किन्तु लक्ष्यसाधुत्वमात्रार्थकत्वमेवोररीक्रियते, तदा स्तोकं स्थीयते, इत्यत्रापि स्तोकपदे द्वितीयायाः असाधुत्वम्, अत्रापि, आख्यातप्रत्ययस्य भावार्थकत्वेन निरर्थकत्वात् तत् प्रकृतिकस्था धातूपस्थाप्य क्रियायामन्वयसत्त्वेऽपि क्रियाविशेषणनामित्यनुशासनेन द्वितीयायाः अप्रसङ्गः, यतः स्थाधातुरकर्मकः अतः तस्य फलावाचकत्वेन ''क्रियाजन्यफलशालित्वं कर्म'' इत्यनेनापि द्वितीया न सम्भवति, तस्मात् स्तोकं स्थीयते, इति वाक्ये स्तोकपदात् द्वितीयायाः श्रवणमसङ्गतमेवेति चेन्न। अकर्मकात् स्थाधातोः विहितो भावार्थकः तङ्प्रत्ययः वर्तमानकालबोधकत्वेन सार्थकत्वं भजति न तु निरर्थकत्वम्, अतो न

द्वितीयानुपपत्तिः। ननु आख्यातार्थसंख्यानिष्ठप्रकारतानिरुपित-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वाच्छिन्नं प्रति प्रथमान्तपदजन्योपस्थितिः कारणम्, इति नियमेन देवदत्तः पचति तण्डुलः पच्यते, इत्यादौ देवदत्ततण्डुलादिप्रथमान्तपदसत्त्वेन तत्र देवदत्ततण्डुलादावाख्यातार्थसंख्यायाः अन्वयेन यद्यपि सार्थक्यं भवति, किन्तु, अन्यैर्गम्यते, त्वया गम्यते, इत्यादि भावाख्यातस्थले प्रथमान्तपदाऽभावेनाख्यातार्थ-संख्यायाः क्वचिदप्यन्वयो न सम्भवति, अतोऽत्र आख्यातप्रत्ययो निरर्थकः तथापि आख्यातार्थ संख्यायाः अविवक्षां विधाय एकवचनस्य साधुत्वं स्वीक्रियते सर्वैः तद्वदेव, स्थीयते, इत्यत्रापि यथा संख्यायाः विवक्षा न भवति तथा वर्तमानकालस्यापि विवक्षा न क्रियते, एवं सति संख्यावर्तमानकालत्वाद्यविवक्षायां स्थाधातूपस्थाप्या क्रिया न सार्थकः। अतः तत्र स्तोकपदार्थस्य विशेषणेऽपि द्वितीयायाः असाधुत्वमेवेति चेन्न। भावाख्यातप्रत्ययेन बोधितसंख्यायाः त्वगत्या सर्वदा अविवक्षैव करणीया भवति तदन्वयी प्रथमान्तपदाऽभावात्, अतः तस्याः कदापि विवक्षा कर्तुं न शक्यते किन्तु वर्तमानकालविषये तादृशी स्थितिर्नास्ति तस्य यदा विवक्षा भवति तदा आख्यातप्रत्ययेन वर्तमानकालबोधो भवति, स्तोकाऽभिन्नवर्तमानस्थितिरिति बोधस्वीकारात्। तथा च भावाख्याततिङ्प्रत्ययस्थले, अर्थबोधस्वरुपयोग्यत्वमेव सार्थकत्वम्, अर्थबोधस्वरुपयोग्यत्वञ्च, अर्थबोधजनकतावच्छेकाऽनुपूर्वीमत्वम्। स्थीयते, इत्यादौ, अर्थबोधजनकतावच्छेकीभूताविशेषाकांक्षा स्थाधातूत्तरयगुत्तरतेत्वरुपा, सा चा वर्तमानकालाविवक्षास्थलेऽपि वर्तते एव, एवञ्चार्थबोधानुकूलाकांक्षापर्याप्त्यधिकरणी-भूतप्रत्ययप्रकृतिभूतधातुवाच्यक्रियानिष्ठविशेष्यतानिरुपिताऽभेदसम्बन्धावच्छिन्नकर्मत्वप्रयोजक-पदात् द्वितीया भवतीति, अनुशासनार्थः सम्पद्यते, स्तोकं पचति, स्थीयते, इत्यादौ तिप्प्रत्ययस्य सार्थकत्वेनार्थबोधानुकूलाकांक्षा पर्याप्त्यधिकरणसत्त्वात् तत्प्रकृतिभूतधातुवाच्यपाकक्रियानिष्ठ-विशेष्यतानिरुपिताभेदसम्बन्धावच्छिन्नकर्मत्वस्य प्रयोजकं स्तोकपदमिति स्तोकपदादत्र द्वितीया भवति। स्तोकः पाकः इत्यादौ तादृश्याः स्थितेरभवात् न स्तोकपदात् द्वितीया। पच्धातोः भावार्थकघञ्प्रत्ययेन निष्पन्नपाकशब्दे यः प्रकृत्यंशः तेनाऽपि पाकक्रियायाः एवोपस्थितिः प्रत्ययांशेनापि पाकक्रियायाः एवोपस्थितिः, एवं सति धात्वर्थपाकप्रत्ययार्थपाकयोः विरुपोपस्थित्याऽभावेन अन्वयबोधाऽसंभवात् समुदाये एव शक्तिः स्वीकर्तव्या, यतोहि यस्य प्रत्ययार्थस्य प्रकृत्यर्थेऽन्वयो न सम्भवति तत्प्रकृतितः तत्प्रत्ययस्य विधानं न भवति, अतोऽत्र यथा धातोः पाकादौ शक्तिः तथा प्रकृतिप्रत्ययविशिष्टसमुदायस्यापि पाके शक्तिः स्वीकार्या। अपि च यदि धातोरिव घञन्तस्य पाकादौ शक्तिः नोपेयते तदा पाकः इत्यत्र सुबर्थसंख्याप्रतियोगिक-

पाकानुयोगिकः अन्वयबोधः असम्भवः एव स्यात्, यतोहि घटं कुरु, इत्यत्र द्वितीयायाः स्वप्रकृत्यर्थघटविशिष्टस्वार्थबोधकत्वमेवास्ति, न तु घटाऽनन्वितकर्मबोधकत्वम्, एवं सति घञन्तपाकपदस्य पाके शक्तिरभावे घञः साधुत्वमात्रार्थकत्वे केवलस्य धातोरेव पाके शक्तिस्वीकारे सुप्विभक्त्यर्थसंख्या कर्मत्वादीनां पाकेनान्वयो न स्यात्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्। प्रकृतित्वञ्च ''स्वनिष्ठविधेयतानिरूपितोश्यतावत्त्वमेव[1]''। प्रकृते पाकः इति पदे सुप्प्रत्ययस्य प्रकृतिः पच्धातुः भवितुमर्हति, सुप्निष्ठविधेयतानिरूपितोद्देश्यतायाः अभावात्, धातोः सुप्प्रत्ययस्य विधानाऽसम्भ वाच्च। यस्मिन् घञन्तपाकशब्दे प्रकृतित्वं सः समुदायः समुदाये शक्ति-अस्वीकतृणां मते अनर्थकः, अतः तत्रान्वयः असम्भवः एव, अर्थवतामेव प्रतियोग्यनुयोगिभावेन परस्परान्वयसम्भवात्। अत्र केचित् प्रकृतेः लक्षणं कृतं यत् ''स्वपूर्ववर्त्तित्वमेव प्रकृतित्वम् (स्व पदेन प्रत्ययः) तन्न समीचीनं प्रतिभाति, घटो पटश्च, इत्यादौ पटपदोत्तरसुप्प्रत्ययस्य पूर्ववर्त्तित्वेन घटस्य विद्यमानत्वेन घटादेः पटपदोत्तरसुप्प्रकृतित्वापत्तेः। यदि एतद्दोषवारणाय स्वाव्यवहितपूर्ववर्त्तित्वमुच्यते तदा प्रकृते तु न दोषः, यतोहि पटपदोत्तरसुबाव्यवहितपूर्ववर्त्तित्वेन घटस्य विद्यमानत्वाऽभवात्। परञ्च बहुपटुः इत्यादौ पटोः बहुच्प्रत्ययस्य प्रकृतित्वानुपपत्तिः, बहुच्प्रत्ययाव्यवहितपूर्ववर्त्तित्वाऽभावात्। तस्मात् ''स्वनिष्ठविधेयतानिरूपितोद्देश्यतावत्त्वमेव लक्षणं प्रकृतेः समीचीनं प्रतिभाति। अथवा स्वाव्यवहितपूर्ववर्त्तित्वमेव प्रकृतित्वमिति लक्षणस्य तात्पर्यमित्थं ज्ञातव्यं यत् प्रत्ययो द्विविधः, एकः विभक्तिसंज्ञकः, अपरश्च विभक्तिसंज्ञकभिन्नः, तत्र स्वाव्यवहितपूर्ववर्त्तित्वमिति लक्षणं विभक्तिसंज्ञकप्रत्ययप्रकृतेरेव तस्यैव प्राकृतत्वात्। प्रत्ययसामान्यप्रकृतित्वस्य स्तोकं पचतीत्यादावनुपयोगात्। ननु प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमे प्रकृतिपदं यथा अभिधया स्वार्थस्य बोधकं तथा लक्षणया तदेकदेशस्यापि बोधकमिति कल्पयामः, एवञ्च यथा प्रत्ययार्थस्यान्वयः प्रकृत्यर्थे भवति तथा प्रकृत्यर्थैकदेशेऽपि भवष्यति, अतः स्तोकः पाकः, इत्यत्र पाकपदोत्तरसुबर्थसंख्याकर्मत्वयोः प्रकृत्यर्थैकदेशे धात्वर्थपाके अन्वयबाधकाऽभावेन न समुदाये शक्तिः स्वीकर्तव्येति चेन्न। पचन्तं पश्यति, इति वाक्यं पाककतृकर्मकं दर्शनमित्यर्थबोधाय लोके प्रयुज्यते, अत्रि हि पच्धातोः पाकोऽर्थः शतृप्रत्ययः कर्त्र्यर्थकः, अतः पचच्छब्दः पाककर्ता,

---

1 पं शिवदत्त मिश्र विरचित दीपिका टीका समलंकृत गदाधरभट्टाचार्य प्रणीत व्युत्पत्तिवाद पृष्ठसं 84 प्रकाशक चौखम्भा सुरभारती प्रकाशन वाराणसी, सम्पादक प्रो. पं ज्वाला प्रसाद गौड, सम्पादन सन 2010

इत्यर्थबोधकः, पचत्प्रकृतिकस्य अम्प्रत्ययस्यैकत्वसंख्या कर्मत्वं चार्थः तयोः संख्याकर्मत्वयोः शतृप्रत्ययार्थे कर्तरि, अन्वयः, अनया रीत्याऽन्वयस्वीकार एव एकत्वविशिष्टं पाककर्तृकर्मकं दर्शनमित्यभीष्टार्थबोधः। यदि सुबर्थसंख्याकर्मत्वादीनां विवक्षासत्त्वे प्रकृत्यर्थैकदेशेऽप्यन्वयः स्यात् तदा, अत्रापि, पचत्पदोत्तरामर्थसंख्याकर्मत्वादीनां प्रकृत्यर्थैकदेशे पाकेऽन्वयः स्यात्, एवं सति पाककर्मकं दर्शनमित्येवार्थः स्यात्, स चार्थो नाभीष्टः, एवञ्चाभीष्टार्थबोधाय प्रकृत्येकदेशार्थे प्रत्ययार्थस्यान्वयो न स्वीकर्तव्यः किन्तु समुदायशक्तिं मत्वा समुदाये एवान्वयो वक्तव्यः, एवं रीत्या पाकः इत्यत्रापि धात्वर्थपाके कर्मत्वाद्यन्वयोऽनुपपन्न इति तदन्वयार्थं घञन्तस्य विशिष्टस्य पाके शक्तिः स्वीकार्या। यदा च समुदायशक्तिः स्वीक्रियते तदा पाकः इत्यत्र घञ्न्तपाकपदस्य सुब्विभक्ति प्रकृतित्वेन तदर्थीभूतपाके सुब्विभक्त्यर्थसंख्याकर्मत्वादीनमन्वये न काऽपि विप्रतिपत्तिः। ननु पचन्तं पश्यति, इति वाक्ये पचन्तं यत् पदं विद्यते, तत्र प्रत्ययद्वयम्, पच्धातुप्रकृतिं मत्वा शतृप्रत्ययः एकः, शतृप्रत्ययविशिष्टो यः पचच्छब्दः तत्प्रकृतिकः अम्प्रत्ययो द्वितीयः, ''प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थस्यैव प्राधान्यम्'' इति सिद्धान्तरीत्या धात्वर्थपाकापेक्षया शतृप्रत्ययार्थः कर्ताविशेष्यः, यतः शतृप्रत्ययार्थकर्तारं प्रति धात्वर्थपाकस्य विशेषणत्वेनो परस्थितिः, अतः तस्यैव पाकस्य अम्प्रत्ययार्थे विशेषणतयाऽन्वयो न भविष्यति, एवं सति प्रकृत्येकदेशार्थे सुब्प्रत्ययार्थस्यान्वयोपगमेऽपि पचन्तं पश्यति, इत्यादौ न काचिच्छति रिति चेन्न। ''एकत्र विशेषणत्वेनोपस्थितस्य अन्यत्र विशेषणत्वेनाऽन्वयः अव्युत्पन्नः''[1] इति सिद्धान्तेन सुबर्थकर्मत्वे पच्धात्वर्थपाकस्य विशेषणाऽभावेऽपि प्रकृत्येकदेशार्थे प्रत्ययार्थस्याऽन्वयोपगमे, सुबर्थसंख्यायाः अन्वयः भविष्यत्येव, यतोहि संख्यायाः सर्वत्र विशेषणतयैवान्वयो भवति, एवं सति शतृप्रत्ययार्थकर्तारं प्रति धात्वर्थपाकस्य विशेणतयोपस्थितिसत्त्वेऽपि संख्यां प्रति विशेष्यमेव, तथा सति यत्रैकः एव पाककर्ता पाकद्वयं करोति तत्र द्वित्वसंख्यायाः प्रकृत्येकदेशार्थे पाकेऽन्वयसंभवात् पचन्तौ पश्यति, इत्यादि प्रयोगापत्तिः, न चैवं भवति,किन्तु यत्र द्वौ पाककर्तारौ भवतः, तत्रैव पचन्तौ पश्यति, इति प्रयोगो भवति, एवञ्च प्रकृत्येकदेशार्थे प्रत्ययार्थान्वयो न स्वीकर्तव्यः। एवञ्च घञन्तस्य विशिष्टस्य पाकादौ शक्तिरुपेया। ननु प्रत्ययार्थनिष्ठप्रकारतानिरूपितधात्वर्थनिष्ठविशेष्यता-सम्बन्धेन शाब्दबुद्धित्वाच्छिन्नं प्रति तत्तद्धातूत्तरप्रत्ययधर्मिककिञ्चिदर्थपरत्वज्ञानं प्रतिबन्धकमित्येवं

1 सुदर्शनाचार्य विरचित आदर्शटीका समलंकृत गदाधरभट्टाचार्य प्रणीत व्युत्पत्तिवाद पृष्ठसं 45-46 प्रकाशक पूर्वतन राष्ट्रिय संस्कृत संस्थान मानित विश्वविद्यालय नई दिल्ली, सम्पादक प्रो. हरेराम त्रिपाठी, सम्पादन सन 2011 संस्करण प्रथम

प्रतिबद्ध्यप्रतिबन्धकभावः कल्पते, एतादृशप्रतिबद्ध्यप्रतिबन्धकभावकल्पने सुबर्थसंख्यायाः प्रकृत्येकदेशार्थे धात्वर्थपाके नान्वयापत्तिः येन यत्रैकः एव पाककर्ता पाकद्वयं करोति तत्र पचन्तौ पश्यति, इत्यापत्तिस्स्यात्, यतोहि पचन्तौ पश्यति, इत्यादौ पच्धातूत्तरवर्तमानस्य शतृप्रत्ययस्य कर्तरि शक्तत्वेन तदर्थकतया शतृप्रत्ययस्य कर्तृरूपार्थपरत्वज्ञानमेव प्रत्ययार्थसंख्यादीनां धात्वर्थपाकादौ विशेषणतयान्वयबोधे प्रतिबन्धकं भविष्यतीति कृत्वा प्रकृत्येकदेशार्थपाकादौ प्रत्ययार्थसंख्यादीनामन्वयापत्तिर्दोषः,पाकः इत्यादि भावार्थककृत्प्रत्ययस्थले तु भावार्थककृत्प्रत्यया नां साधुत्वमात्रार्थकत्वेन निरर्थकत्वा श्रयणात् किञ्चिदर्थपरत्वज्ञानमेव न जायते, इति प्रतिबन्धकाऽभावात् प्रत्ययार्थसंख्याकर्मत्वादीनां धात्वर्थपाकादौ विशेषणतया ऽन्वयबोधे न काचिदनुपपत्तिरिति व्याख्याने दोषाऽभावेऽपि नवीनप्रतिबध्यप्रतिबन्धकभावकल्पनारूपमेव गौरवं भविष्यति, अतः घञन्तस्य पाकादौ शक्तिः स्वीकार्या। प्रत्ययार्थानां प्रकृत्येकदेशार्थान्वयश्च न स्वीकर्तव्यः। ननु पाकः इत्यादौ घञन्तस्यैव पाकादौ शक्तिस्वीकारे दीधितिग्रन्थविरोधः, कथमिति चेच्छ्रूयताम्—संज्ञा द्विधा भवति,एका नैमित्तिकसंज्ञा, अपरा यदृच्छासंज्ञा। तत्र'' जात्यवच्छिन्नसंकेतवती संज्ञा''[1] नैमित्तिकसंज्ञा।यथा घटपटादिसंज्ञा नैमित्तिकसंज्ञा, घटत्वपटत्वादिकं प्रवृत्तिनिमित्तं कृत्वा जायमानत्वात्।डित्थादिसंज्ञा यदृक्षासंज्ञा, स्वेच्छया पिण्डविशेषे संकेतितत्वात्। एवं सति समुपसृष्टात् युज्धातोः भावे घञ्प्रत्यये कृते सति निष्पन्ने संयोगशब्दे, भवति संदेहः, यदियं नैमित्तसंज्ञा, यदृच्छा वेत्याशङ्क्योत्तरितं यत् संयोगत्वप्रवृत्ति निमित्तं कृत्वा संयोगशब्दस्य प्रवृत्तिर्न भवति, संयोगत्वावच्छिन्ने संयोगपदस्य शक्तेरभावात्, यतोहि यदि घञन्तसंयोगशब्दस्य संयोगत्वावच्छिन्ने शक्तिः स्यात् तदा संयुनक्ति, इत्यत्र संयोगपदाऽभावात् संयोगरूपार्थस्योपस्थितिर्न भवितव्या, किन्त्वत्रापि संयोगरूपार्थोपस्थितो भवति,अतः संयोगसंज्ञा नैमित्तिकसंज्ञा नास्ति, एवं सति सर्वत्रानुगतस्य धातोरेव लाघवात् संयोगादौ शक्तिः स्वीकार्या न तु घञन्तसंयोगपदस्य, घञः साधुत्वमात्रार्थकत्वेन निरर्थकमेवेति दीधितिग्रन्थस्याऽभिप्रायः, घञन्तस्य पाकादौ शक्तिस्वीकारे घञन्तसंयोगशब्दस्य नैमित्तिकसंज्ञा निराकरणपरकदीधितिग्रन्थस्य वैय्यर्थ्यापत्तिः स्पष्टैवेति चेन्न। घञन्तसमुदायस्य पाकादौ शक्तिः युक्तिवलेन सिद्धा, युक्तिबलमाश्रित्य सिद्धवस्तुप्रतिबन्धकं कस्यचित् ग्रन्थकृतो विपरीतकथनं न भवतीति कृत्वा दोषाऽभवात्। न च घञन्तसमुदायस्यैव यदा पाकादौ शक्तिः तदा

1 पं शिवदत्त मिश्र विरचित दीपिका टीका समलंकृत गदाधरभट्टाचार्य प्रणीत व्युत्पत्तिवाद पृष्ठसं 92 प्रकाशक चौखम्भा सुरभारती प्रकाशन वाराणसी, सम्पादक प्रो. पं ज्वाला प्रसाद गौड, सम्पादन सन 2010

विशेषणवाचकस्तोकादिपदात् विशेष्यवाचकपदोत्तरविभक्तिसजातीयविभक्तिप्राप्तिप्रसङ्गेन द्वितीयाऽनुपपत्या स्तोकं पाकः, इति वाक्यप्रयोगः असाधुरेव स्यादिति वाच्यम्। यत्र धातुमात्रेणैव पाकोपस्थितिः तत्र धात्वर्थविशेषणवाचकस्तोकपदात् द्वितीया भवति, यत्र तु कृदन्तसमुदायेन पाक इति पदेन पाकोपस्थापकत्वं तत्र विशेषणवाचकस्तोकादिपदात् प्रथमा भवति, यतोहि पाकाद्यर्थो पस्थापको यः कृदन्तसमुदायः तस्य विशेषणीभूतः तत्समानविभक्तिकः एवेति रीत्या स्तोकः पाकः इति। अत्र प्रमाणमस्ति, कातन्त्रपरिशिष्टकृता वाक्यमेव। तच्च वाक्यमस्ति, '' कथं स्तोकः पाकः कृदन्तविशेषणत्वात्'[1]'।

एतावता प्रबन्धेन न्यायरीत्या वाक्यद्वयस्य( स्तोकः पाकः, स्तोकं पाकः) साधुत्वोपपादनं मया कृतम्, परञ्च यैराचार्य्यैः व्याकरणसिद्धान्ताः न स्वीकृताः तैरपि, इदन्तु स्वीकृतं यत् ''पाणिनीयस्मृतिः साधुत्वमात्राभिधायिका'' अनेन इदन्तु सिद्ध्यत्येव यत् शब्दसाधुत्वनिर्णयः पाणिनीयव्याकरणेनैव भवति, अतः तत्दृशाऽपि वाक्यद्वयस्य साधुत्वं प्रतिपानीयमेवेति मत्वा साधुत्वं प्रतिपाद्यते। न च पदसाधुत्वख्यापिकया पाणिनिस्मृत्या वाक्यसाधुत्वान्वाख्यानं नोचितम्, अन्वाख्यानं नामशब्द संस्कारः, स च त्रिविधः, वर्णपदवाक्यसंस्कारपक्षभेदात्। अत एव ''न पदान्त[2]''—0 इति सूत्रे पदान्तविधिं प्रत्यजादेशो न स्थानिवत्, इत्यस्योदाहरणम्, कौ, स्तः, इति वाक्यं दत्तं महाभाष्यकारेण, अतो वाक्यस्यापि संस्कारः व्याकरणेन भवत्येव। परञ्च नव्यनैय्यायिकैः कातन्त्रपरिशिष्टकारदिभिः निरुक्तवाक्ये स्तोकपदात् प्रथमाद्वितीया समुत्पादनाय या सरण्याश्रिता ('' कथं स्तोकः पाकः कृदन्तविशेषणत्वात्') तस्याः इदमेव तात्पर्यं यत् धातुना यादृशी क्रिया अभिधीयते तादृश्येव क्रिया घञन्तेनाऽपि, किन्त्वभयोर्मध्येऽयं भेदो यत्, क्रियाविशेषणानां स्तोकादीनां धात्वर्थक्रियाविशेषणत्वे क्रियाविशेषणानामित्यनुशासनेन स्तोकादिपदे कर्मत्वातिदेशात् ''कर्मणि द्वितीया[3]'' इति सूत्रेण द्वितीया भवति, घञर्थक्रियाविशेषणत्वे घञन्तसमानविभक्तिकत्वात् प्रथमा। परञ्च मतेऽस्मिन् वाक्यद्वयस्य साधुत्वे बाधकाऽभावेऽपि धातूपस्थाप्यक्रियायाः घञन्तोपस्थाप्यक्रियायाश्च परस्परं वैलक्षण्यं नोपपद्यते, ''कृदभिहितो भावः द्रव्यवत् प्रकाशते'' घञ्वाच्यो भावो बाह्याः प्रकृत्यर्थात्'' इति ''कर्तरि कृत्[4]'' सूत्रभाष्य प्रामाण्यात् वैलक्षण्यमवश्यमेव वक्तव्यम्, तच्च सिद्धसाध्यावस्थाभेदेनैव सम्भवति, तथा च साध्यावस्थापन्ना

1 1 सुदर्शनाचार्य विरचित आदर्शटीका समलंकृत गदाधरभट्टाचार्य प्रणीत व्युत्पत्तिवाद पृष्ठसं 52 प्रकाशक पूर्वतन राष्ट्रिय संस्कृत संस्थान मानित विश्वविद्यालय नई दिल्ली, सम्पादक प्रो. हरेराम त्रिपाठी, सम्पादन सन 2011 संस्करण प्रथम

2 न पदान्तवरेलोपस्वरसवर्णानुस्वारदीर्घजश्चरविधिषु (पा. सूत्र 01-01-58)

3 पा. सूत्र

4 पा. सूत्र

क्रिया धातुपदवाच्या, सिद्धावस्थापन्ना क्रिया घञ्वाच्या, इति भावार्थककृत्प्रत्ययस्थले वैय्याकरणानां स्थितिः। परञ्चानेन भाष्येण नेदं ज्ञातव्यं यत् घञन्तशक्त्यभिप्रायकमिदं भाष्यम्, किन्तु घञ्शक्त्यभिप्रायकमेव। अत एव कण्ठरवेणोक्तं यत् ''घञ्वाच्यो भावो बाह्याः प्रकृत्यर्थात्''। घञ्निष्ठवाचकतानिरुपिता वाच्यता यस्मिन् भावे विद्यते सः भावः (क्रिया) प्रकृत्यर्थात् भिन्नः इति भाष्यतात्पर्यम्। एवं व्यवस्थासिद्धे स्तोकः, स्तोकम्, पाकः इत्यनयोः वाक्ययोः साधुत्वव्यवस्था कथमुपपन्ना भवतीति विचारयामि। वैय्याकरणमते पाकः, इत्यादि घञन्तेषु प्रकृति भूतेन धातुना साध्यस्वभावयोः फलव्यापारयो रुपस्थतिर्भवति, प्रत्ययेन सिद्धावस्थापन्नयोः फलव्यापारयोरुपस्थितिर्जायते, धातुवाच्यफलव्यापारयोर्मध्ये फलमपि प्रथक्पदार्थः एव, तथा च स्तोकपदार्थः धात्वर्थाशें फले, अभेदेन विशेषणम्, यतः फलमपि व्यपिदेशिवद्भावेन फलाश्रयः, अतः तस्याऽपि कर्मत्वेन तत्समानाधिकरणे स्तोकपदाद्द्वितीया सिद्धा। अथवा धात्वर्थभावानां प्रति फलांशस्य कर्मत्वेन ,कर्मवाचकस्य फलस्याऽप्रातिपदिकत्वात् द्वितीयायाः प्रवृत्याऽभावेऽपि तत्समाना धिकरणस्तोकादिपदात् द्वितीयासत्त्वे वाक्यस्य साधुता सुसम्पन्ना। यद्यप्यत्रेयं शङ्का भवितुं शक्नोति यत् व्यपदेशिवद्भावेन फलस्य कृते फलाश्रयव्यवहारसत्त्वेऽपि तस्य कारकत्वं दुर्लभम्, क्रियाजनकस्यैव कारकत्वात्, फलस्य च क्रियाजनकत्वाऽवेन कथं तस्य कर्मता कारकत्वमुद्दिश्यैव कर्मसंज्ञा विधानात्,तदभावे च तत्समानाधिकरणे स्तोकादिपदे द्वितीया कथं सम्भवति, तथापि फलज्ञानपूर्वमेव कर्त्रा क्रियोत्पादनेन ज्ञानगतक्रियाजनकत्वस्य तद्विषये फले आरोप्य कारकत्वस्य निर्वाहः कर्तव्यः। इयं रीतिः द्वितीयान्तस्तोकपदसमभिव्याहृतप्रथमान्त पाकपदघटितवाक्यसाधुतायाः। वैय्याकरणमते नपुंसकत्वविशिष्टप्रथमान्तस्तोकपदसमभि-व्याहृतप्रथमान्तपाकपदघटित वाक्यमपि साधुत्वं भजति,(स्तोकं पाकः) सा प्रणालीत्थं वर्तते, स्तोकादीनां यदा धात्वर्थव्यापारे विशेषणं तदाऽपि स्तोकं पाकः, किन्तु स्तोकमिति प्रथमान्तः, यतोहि धात्वर्थव्यापरस्याऽकर्मकत्वात्, असत्त्वरूपत्वाच्च प्रातिपदिकार्थे प्रथमा सामान्ये नपुंसकमिति नपुंसकत्वं सिद्ध्यति। यथा ज्योतिष्टोमेन भक्तिपूर्वं यजेत, इत्यत्र भक्तिपूर्वपदार्थस्य धात्वर्थव्यापारे कर्तृत्वेन विशेषणात् भक्तिपूर्वपदात्प्रथमा नपुंसकत्वञ्च भवति, ज्योतिष्टोमपदार्थस्य च यज्धात्वर्थव्यापारे करणत्वेन विशेषणात ज्योतिष्टोमपदात् तृतीया च सिद्ध्यति। वेगेन धावति, इत्यत्रापि तथैव बोध्यम्। यदि क्रियाविशेषणस्थले स्तोकादीनां कर्मत्वं न स्वाभाविकं किन्तु ''क्रियाविशेषणानां कर्मत्वम्'' इत्यपूर्वेण वचनेनातिदेशिकमिति स्वीक्रियते तदा उक्तस्थलेऽपि क्रियाविशेषणपदे द्वितीपत्तिः, अतः अपूर्ववचनं परित्यज्य क्रियाविशेषणस्थले वैय्याकरण प्रतिपादितरीत्यैव समाधानं कर्तव्यम्। घञर्थभूतसिद्धावस्थापन्ना या व्यापारात्मिका क्रिया तस्याः अकर्मकत्वेन द्वितीयायाः अप्राप्ते प्रातिपादिकार्थमात्रे प्रथमाविधाने स्तोकः पाकः इति वाक्यं साधुत्वं भजति। यतः अत्र काश्चन विप्रतिपत्तयः सन्ति, ताश्चेमाः—यथा धात्वर्थव्यापारविशेषणी भूते स्तोकादि पदार्थे प्रथमाविभक्तिः नपुंसकत्वञ्च भवति, तथा घञर्थव्यापारे विशेणीभूते

स्तोकादिपदार्थे नपुंसकत्वं कथं न भवति। एवमेव यदि घञ्प्रत्ययेन सिद्धावस्थापन्नयोः फलव्यापारयोरुपस्थितिः तदा सिद्धावस्थापन्नत्वेनोपस्थिते स्तोकापदार्थस्याऽन्वयं विधाय द्वितीया कथं न भवति। तत्र प्रथमापत्तेः इदं समाधानं यत् ''कृदभिहितो भावः द्रव्यवत् प्रकाशते इति भाष्यप्रामाण्यात्सिद्धावस्थापन्ने घञर्थव्यापारे लिङ्संख्यादीनामन्वयः, अत एव पाकः, पाकौ, पाकाः, इति रूपाणि प्रचलन्ति, तत्र सामान्ये नपुंसकमित्यस्य विषयाऽभावात् पुल्लिङ्गः एव। द्वितीयापत्तेः समाधिरियं वर्तते यत् घञ्प्रत्ययेन सिद्धावस्थापन्नयोः फलव्यापारयोरुपस्थिति सत्त्वेऽपि प्रयोजनाऽभवात् फलस्य पार्थक्येन बोधो न भवति किन्तु सर्वत्र घञाद्यन्तेषु व्यापार मुख्यविशेष्यकशाब्दबोधस्यैवानुभवः, अतः तस्मिन् फले स्तोकादिपदार्थानामन्वयो न सम्भवतीति कृत्वा द्वितीयायाः प्रसङ्गो नास्तीति।

**निष्कर्षः**

निबन्धेऽस्मिन् मया साधकबाधकप्रमाणाभ्यां स्तोकः पाकः, स्तोकं पाकः, इतिवाक्यद्वयस्य साधुत्वं न्यायरीत्या , वैय्याकरणरीत्या च साधितम्। तत्र न्याय सिद्धान्तरीत्या पाकः इत्यादि स्थले भावार्थक घञ्प्रत्ययः प्रयोगसाधुत्वार्थकमेव। वैय्याकरणनये तु न प्रयोगसाधुत्वार्थकः किन्तु व्यापारार्थकः, स च व्यापारः कीदृशः इत्यपि साधितमेव, अपि च वैय्याकरणनये स्तोकं पाकः इति वाक्यघटकं स्तोकमिति विभक्त्यन्तं पदं प्रथमान्तमपि भवितुमर्हतीति विशेषः। इति शम्

***

ISSN-2321-6948

# तदन्ततदादिविधिश्च

**डॉ. नरेशकुमारपाण्डेयः**
सहायकाचार्यः, व्याकरणविभागः

व्याकरणशास्त्रे साधुत्वसम्पादनार्थं प्रकृतिप्रत्ययद्वारा सम्यग् ज्ञानार्थं पाणिनिः चतुस्सहस्त्रं सूत्राणि अरचयत् तानि सूत्राणि षोढा विभक्तानि संज्ञा परिभाषादिरूपेण यथा-

**संज्ञा च परिभाषा च विधिर्नियम एव च।**
**अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्।।**

सर्वविधसूत्राणि शास्त्रनिर्वाहार्थं एव परिकल्पितानि। एवञ्च वृद्धिगुणादयः संज्ञाः तस्मिन्नितिनिर्दिष्टपूर्वस्य इत्यादयः परिभाषा सूत्राणि, प्रक्रियानिर्वाहार्थं संक्षेपीकरणाय च प्रत्याहारः, तदन्तविधिः तदादिविधिः इत्यादयः, आदिरन्त्येन सहेता इति रूपेण प्रत्याहारसंज्ञा च कृतेति। प्रत्याहारसंज्ञासिद्ध्यर्थं तदादिविधिः तदन्तविधिः इत्येते संज्ञारूपेषु उपायेषु स्वीकृतः। प्रत्याहारादयः अन्त्येनेता सहित आदि मध्यगानां स्वस्य च संज्ञा वर्तते एवं प्रकारेण अण् अक् अच् आदयः प्रत्याहाराः निष्पाद्यन्ते। यस्मात् पूर्वं नास्ति परं च अस्ति स आदिः। यस्मात् पूर्वं अस्ति परे च नास्ति सोऽन्तः। येन विधिस्तन्तस्य इति सूत्रेण वर्णः प्रत्ययः प्रातिपदिकम् अनर्थकः वर्णसमुदायो वा शब्दः समुदायान्त्ययाव्यवभूतः समुदायस्य संज्ञेति अन्तः इत्युक्ते- समुदायस्यैवान्तः। यस्मिन् विधिस्तदादौ अल्ग्रहणे इति वार्तिके वार्तिककारेण कात्यायनेन तदादिविधिरुपमुपायं स्वीकृतेति। आदि वर्णः परनिमित्तत्वेन समुदायस्य संज्ञेति।

येन विधिस्तदन्तस्य इति सूत्रं पाणिनिना तदन्तग्रहणार्थं स्वीकृतः। येन विधिस्तदन्तस्य इति सूत्रे येनेति करणतृतीयान्तम् यत् शब्द, तद् शब्दं बोध्यते शब्दशास्त्रं निर्वाहार्थमेव यत् तत् शब्दद्वयम् ग्रहणं कृतमिति। विधाने येन शब्दः तत्पर्यन्तस्य शब्दसंज्ञा। यथा अचो यत् इत्यत्र अजन्तस्य धातोः संज्ञा। अत इञ् इत्यत्र प्रातिपदिकविशेषणमत इति। तस्मात् अत् इति अकारान्तस्य शब्दान्ते एव इञ् प्रत्ययः एवं प्रकारेण अपि वक्तुं शक्यते येन विधिस्तदन्तस्य इति सूत्रे येन यं शब्दं स्वीकृत्य विधिः- विधिः उच्यते कस्य तदन्तस्य-तत्पर्यन्तस्य शब्दस्य। तत्पर्यन्तश्च शब्दः तत्र प्रातिपदिकात्, धातोः, पदस्य, अङ्गस्य भस्य एवं निर्दिश्यते सामान्यतः शब्द एव ग्राह्येति। एवं च अत इञ् इत्यत्र अत इति निर्देशः। अकारन्त शब्दात् इञ् इत्यर्थः। अकारसंज्ञकश्च शब्दे अकारान्तः। प्रातिपदिकभिन्नो योऽकारसंज्ञकः शब्दः ‘च,तस्मात् इञ् प्रत्यय इति सूत्रार्थः। यथा दशरथ शब्दात् अत इञ् इति सूत्रेण

इञ् प्रत्यये दाशरथिः इति रूपं सिद्ध्यति। एवं अचो यत् इति सूत्रेण अजन्तधातोः यत् प्रत्ययः इत्यर्थः। अथवा अजन्तक्रियावाचको धातुसंज्ञकः शब्दः तस्मात् अजन्तत्वेन अचो यत् इति सूत्रेण यत् प्रत्ययः इति।

इको यणचि इति सूत्रेण अपि तदन्तविधिः प्राप्नोति इक् स्थाने यण् स्यात् अचि संहितायां विषये अतः इगन्तत्वे अचि परे इक् स्थाने यणादेशो भवति इत्यर्थः। इदमपि वक्तुं शक्यते यत् इक् प्रत्याहारत्वेन अच् परत्वात् इक् स्थाने यण् स्यात्। यथा सुद्ध्युपास्यः इति प्रयोगे सुधी + उपास्यः इत्यत्र सुधीति ईकारान्तत्वेन उपास्यः इत्यत्र आदौ अचि इति स्थिते इको यणचि इति सूत्रेण यणादेशे सुद्ध्युपास्यः इति। पुगन्तलघूपघस्य इति सूत्रेण लूघपघं यदङ्गं तदवयवस्येव अतः अन्ते इकः इत्यस्वैव गुणः इत्यर्थः।

इको गुणवृद्धी इति परिभाषासूत्रेण उपस्थापितो इक् इत्युक्ते इगन्तस्यैव ग्रहणं वर्तते। यथा- सार्वधातुकार्धधातुकाभ्यां पूर्वस्य अङ्गस्य इको गुणः इगन्तस्य इत्यर्थः। सार्वधातुकार्धधातुभ्यां पूर्वस्य इको गुणः। पुगन्तलघूपघस्य इति सूत्रवत् अत्र सार्वधातुकार्धधातुकयोः इति सूत्रे नास्ति यद् इगन्तस्य लघूपघत्वं इति सम्बन्धः नैव दृश्यते। तस्मात् अत्र सार्वधातुकार्धधातुकयोः इति सूत्रे उपस्थितस्य इक् इत्यस्य तदन्तत्वं नैव स्वीकर्तुं शक्यते।

येषां शब्दानां अन्तिमोऽवयवः समानः तेषां ग्रहणं कर्तुं शक्यते यथा- अदन्तानां शब्दानां अदिति ग्रहणम्। दाक्षि इतिवत्। अकारान्तानां धातूनामवयवः आकारेति आकारान्तधातूनाम् आदिति ग्रहणं। देयम् इतिवत्। अजन्तानां धातूनानामवयवः अचः स तेषां ग्रहणमिति। तिङन्तानां अन्तावयवः तिङ् तेषां ग्रहणम्। सुन्बन्तानां अन्तावयवः सुप् तेषां ग्रहणम्। तं तं समानमन्तावयवमादाय पाणिनिना तदन्तविधः स्वीकृतेति। वर्णेन तदन्तविधिः इकोयणचि। प्रत्ययेन तदन्तविधिः- सुप्तिङन्तं पदम्। प्रातिपदिकेन तदन्तविधिः पदं पदं प्रतिपदं प्रति पदे भव प्रातिपदिकम्। अनर्थकवर्ण समुदायेन तदन्तविधिः प्रत्याहार इत्यादयः। प्रत्ययस्य तदन्त संज्ञात्वं प्रति सन्यङोरपि स्वीकर्तुं शक्यते।

वनो रच इति सूत्रे वन् इति प्रत्ययग्रहणत्वात् शब्दरूपमाश्रित्य प्रत्यय ग्रहणपरिभाषा वनन्तामिति स्वीकृता वर्तते तस्य च प्रातिपदिकत्वात् पुनः तदन्तविधिः इति। तेन अतिधीवरी इति सिद्ध्यति।

अन्यथा प्रत्ययग्रहणेषु प्रकृतिप्रत्ययोभयावयवाविवाचिकातसमुदायस्यैव ग्रहणात् धीवरी इत्यत्र ङीबौ स्याताम्।

अनुच्चारितस्य तदन्तस्य पाणिनिसूत्रविधाने करणत्वायोगात् इति प्रथमेन। द्वितीयेन प्रत्ययग्रहणपरिभाषांशतदादिविधेः अनादरादिति। तस्मादत्र मार्गान्तरं स्वीक्रियते तदन्तविधिद्वयेन भवता प्रत्ययग्रहणपरिभाषीय तदादिविधेः अभावः एव फलतः सम्पाद्यते। मया तु एवमुच्यते वनः परस्य ङीपो रेफः स्यादिति सूत्रार्थः। अलोऽन्त्यस्येति नकारस्य अङ्गसंज्ञा सूत्रे यस्मात् प्रत्ययविधिस्तदादि प्रत्यये इति योगविभागेन प्रत्ययग्रहणपरिभाषीय तदादिवाक्यम्। तथा च इह वन इति प्रत्यय ग्रहणात् धातुपदमुपनिष्ठते। धातोः परस्य वनो ङीप् सन्नियोगेन रेफः स्यादिति सूत्रार्थः।

***

# परमलघुमञ्जूषायां लिङ्गर्थविचारः

**डॉ. नन्दकिशोरतिवारी**
सहायकाचार्यः, व्याकरणविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, भोपालपरिसरः

व्याकरणस्याष्टाध्याय्यां प्रथमस्याध्यायस्य तुरीये पादे एकोत्तरशतसंख्यायां तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः[1] इति सूत्रं पठितमस्ति।तिप्तस्झीत्यादि[2] सूत्रे तिबाद्यष्टादशप्रत्यया उक्तास्सन्ति तेषामेव प्रत्यायानां तिङ् इति संज्ञा भवति। तथा च इदं सूत्रं तिङ्प्रत्याहारबोध्यप्रत्ययानाम्मध्ये यथाक्रमं त्रयाणां त्रयाणां प्रत्ययानां प्रथममध्यमोत्तमादि संज्ञा भवतीति बोधनं कारयति। तत्रैव च अग्रे तृतीयं सूत्रं सुपः[3] इति वर्तते।अत्र स्वौजसादि[4]सूत्रेण प्रातिपदिकमुद्दिश्य विहितानां प्रत्ययानामेव कश्चन सुप् प्रत्याहारत्वेन व्यवहारो भवति इति आकरग्रन्थादवगम्यते।ताभ्यामेव सूत्राभ्यां तिङः[5] इति पदस्य सुपः इति सूत्रस्य च अग्रिमे चतुरधिकशततमे विभक्तिश्चेति[6] सूत्रेऽनुवर्तनं भवतीति मन्यमानेन श्रीमद्भट्टोजिदीक्षितवर्येण वैयाकरणसिद्धान्तकौमुद्या अजन्तपुंल्लिङ्गप्रकरणे विभक्तिश्च इति सूत्रमुपस्थाप्य सुप्तिङौ विभक्तिसंज्ञौ स्त[7] इत्युक्तम्।तदनन्तरम् प्राग्दिशो विभक्तिः[8] इत्यधिकारे ये तसिल्[9]-त्रल्[10]-ह[11]-अत्[12]-दा[13]-र्हिल्[14]-अधुना[15]-दानीं[16]-थाल्[17]-थमु[18]-द्युस्[1]-उत्[2]-आरि[3]-समसण्[4]-

---

[1] पाणिनीयं सूत्रम् -१।४।१०४॥
[2] पाणिनीयं सूत्रम् – ३।४।७८॥
[3] पाणिनीयं सूत्रम् -१।४।१०३॥
[4] पाणिनीयं सूत्रम् -४।१।२॥
[5] तिङस्त्रीणि त्रीणि इत्यतस्तिङ्ग्रहणं व्यवहितमपि स्वरितत्वबलादनुवर्तते- विभक्तिश्चेति सूत्रस्य तत्वबोधिनी।
[6] पाणिनीयं सूत्रम् -१।४।१०४॥
[7] वैयाकरणसिद्धान्तकौमुदी
[8] पाणिनीयं सूत्रम् -५।३।१॥
[9] पञ्चम्यास्तसिल् - पाणिनीयं सूत्रम् -५।३।७॥
[10] सप्तम्यास्त्रल् - पाणिनीयं सूत्रम् -५।३।१०॥
[11] इदमो हः - पाणिनीयं सूत्रम् -५।३।११॥
[12] किमोऽत् –पणिनीयं सूत्रम् -५।३।१२॥
[13] सर्वैकान्यकिंयत्तदः काले दा –पाणिनीयं सूत्रम् -५।३।१५॥
[14] इदमो र्हिल् - पाणिनीयं सूत्रम् -५।३।१६॥
[15] अधुना - पाणिनीयं सूत्रम् -५।३।१७॥
[16] दानीं च - पाणिनीयं सूत्रम् -५।३।१८॥
[17] प्रकारवचने थाल् - पाणिनीयं सूत्रम् -५।३।२३॥
[18] इदमस्थमुः - पाणिनीयं सूत्रम् -५।३।२४॥

एद्यवि[5]-द्यस्[6] इति षोडशप्रत्ययास्तेऽपि त्यदाद्यत्वादिकार्यलाभाय[7] विभक्तिसंज्ञकाः सन्ति। तत्र विभक्तिवाच्यप्रत्ययेष्वेकदेशभूततिङां मध्येऽष्टमो लिङ्लकारो वर्तते तमेवाश्रित्यात्र किञ्चिद्विचार्यते।

तत्र विषयेऽस्मिन् वयं जानीमो यत् प्रातिपदिकसंज्ञकशब्दमुद्दिश्य[8] स्वादयो विधीयन्ते।तिबादीनाञ्च विधाने धातो[9]रिति सूत्रमधिक्रियते तस्मादेतेषां धातुसंज्ञकशब्दमुद्दिश्य विधानं भवति इति।अत्र इदमपि अवगन्तव्यं भवति यत् धातुमुद्दिश्य यावन्तः प्रत्ययाः विधीयन्ते तेषां मध्ये तिबादीनान्तु आख्यातशब्देन[10] व्यवहारो भवति तथा तेभ्यो भिन्ना ये प्रत्ययास्सन्ति ते कृदतिङ्[11] इति सूत्ररीत्या कृत्संज्ञका भवन्ति।तत्र कृत्संज्ञकप्रत्ययेषु मध्ये केषाञ्चित्प्रत्ययानां स्वतन्त्ररुपेणापि विधानं भवति केषाञ्चिच्च लकाराणां स्थाने विधानं भवति।किन्तु सर्वेषामपि तिङां लकाराणामेव स्थाने आदेशतया विधानं भवति।लकाराश्चानुबन्धभेदात् दशसङ्ख्याकाः सन्ति। ते च लट्-लिट्-लुट्-लृट्-लेट्-लोट्ः षड् लकारास्सन्ति।लङ्लिङ्लुङ्लृङश्च पञ्चैते ङिल्लकारास्सन्ति।लः कर्मणि च भावे चाकर्मकेभ्यः[12]

---

[1] " पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युरिति किं निपात्यते? पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् च (वा)इति " सद्यः परुत्परार्यैषमः इत्यादि पाणिनीये सूत्रे महाभाष्यम्।

[2] परुत्परारीति किं निपात्यते? पूर्वपूर्वतरयोः परभाव उदारी च संवत्सरे , तत्रैव महाभाष्यम्।

[3] तदेव।

[4] ऐषमः इति किं निपात्यते ? इदमः समषण् (वा) इदमः समषणप्रत्ययो निपात्यते संवत्सरेऽभिधेये " सद्यः परुत्परार्यैषमः इत्यादि पाणिनीये सूत्रे महाभाष्यम्।

[5] परेद्यवीति किं निपात्यते ? परस्मादेद्यव्यहनि (वा) परस्मादेद्यविप्रत्ययो निपात्यते अहन्यभिधेये, " सद्यः परुत्परार्यैषमः इत्यादि पाणिनीये सूत्रे महाभाष्यम्।

[6] अद्येति किं निपात्यते ? इदमोऽश् भावो द्यश् च (वा) इदमोऽश्भावो निपात्यते द्यश्च प्रत्ययोऽहन्यभिधेये " सद्यः परुत्परार्यैषमः इत्यादि पाणिनीये सूत्रे महाभाष्यम्।

[7] लित्स्वरार्थं विभक्तिनिमित्तकत्यदाद्यत्वार्थमित्यर्थः। अन्यथा अरत्वात्तसौ कृते तस्य अप्राग्दिशीयत्वाद्विभक्तित्वाभावात्यदाद्यत्वादिकं न स्यादित्यर्थ इति पञ्चम्यास्तसिल् इति सूत्रस्य बालमनोरमाख्यायां व्याख्यायाम्?

[8] ङ्याप्प्रातिपदिकात् इत्यधिकारे स्वौजस्मौट् इति सूत्रमुक्तम् तस्मादिति भावः।

[9] पाणिनीयं सूत्रम् -३।१।९१॥

[10] महाभाष्ये चत्वारि शृङ्गा त्रयोऽस्य पादाः इति ऋङ्मत्रस्य व्याख्यानकाले नागेशभट्टेन आख्यातं तिङन्तम् इत्युक्तं।

[11] पाणिनीयं सूत्रम् -३।१।९३॥

[12] पाणिनीयं सूत्रम् -३।४।६९॥

इति सूत्रेण लकाराणां विधानं भवति अत्र पूर्वपठित कर्तरि कृत्[1] इति सूत्रात् कर्तरि इत्यस्य अनुवर्तनात् सूत्रार्थः सम्पद्यते लकाराः कर्मणि कर्तरि भावे च भवन्ति।

शाब्दिकानां सिद्धान्ते फले व्यापारे च धातोः शक्तिरस्ति, तथा च सामान्येन लकाराः कर्तृकर्म्मभावबोधकाः भवन्ति इति प्रतीयते। तथाप्यत्र व्याकरणसम्प्रदाये यो निर्णयः स एव न्यायशास्त्रे मीमांसायाञ्च यथावदेव नाङ्गीक्रियते।मीमांसकानां मतानुसारं भावना अर्थात् व्यापारो आख्यातप्रत्ययार्थो भवति न तु धात्वर्थः।शाब्दबोधे भावना मुख्यं विशेष्यं भवति।[2]न्यायाचार्याः यत्न आख्यातार्थो भवतीति स्वीकुर्वन्ति तत्र प्रथमान्तार्थमुख्यविशेष्यको शब्दबोधनं भवति।।[3] यद्यपि आख्यातप्रत्यया अपि न साक्षादर्थवाचका अपितु लकारस्थाने आदेशभूतास्ते भवन्ति। स्थानिनामर्थबोधने समर्थस्यैवादेशता इति न्यायानुरोधेन लकारस्यार्थ एव आख्यातप्रत्ययेषु भासतेऽतो लकार एव यत्नेऽर्थे शक्तः[4] यथोक्तं परमलघुमञ्जूषायां शक्यतावच्छेदकञ्च लकारसाधारणं लत्वमेव भवतीत्यादौ चादेशेनाशेनादेशिनो लस्यैव स्मरणादन्वयधीः[5] इति। वैयाकरणाः कर्तृकर्मसंख्याकाला आख्यातार्था भवन्ति इति वदन्ति।

उपरिकथिता अर्थाः सामान्येन सर्वेषामेव लकाराणां स्वस्वसिद्धन्ते भवन्ति इति बोध्यम्।यथा नैयायिकानां मते लडर्थो यत्नो एवं सामान्येन समेषामपि लकाराणामर्थो यत्नो भवत्येव।एवमेव मीमांसकानां मते भवना सर्वेषामेव लकाराणां, वैयाकरणानां समाजे कर्तृकर्मसंख्याकालाः सर्वेषामर्थाः सामान्येन भवन्ति।अस्तु प्रकृतमनुसरामः।

अस्मिन् शोधनिबन्धस्य विचार्यमाणो विषयो वर्तते यत् एतेषां नैयायिकमीमांसकवैयाकरणानाञ्च समाजे लिङर्थ कः कथञ्च तस्मादर्थबोधः भवतीति? नागेशभट्टः वैयाकरणानां मतमुपस्थापयन् तस्मात् पूर्वमेव नैयायिकानां मीमांसकानाञ्च मतं गृह्णाति तदेवात्र यथामति उपस्थाप्यते। ।तत्र यजेत इत्यादौ विधित्वस्य भवत्वित्यादौ आशीरर्थस्य प्रतीतिकारणात् नैयायिकानां मतेन लिङो विधिराशीश्चार्थो भवतीति मञ्जूषा वदति।तत्रैव विधौ आशीरर्थे च लिङः शक्तिरस्ति। आशीरित्यनेन

---

[1] पाणिनीयं सूत्रम् -३।४।६७॥

[2] आख्यातेन भावनोच्यते।सा च कर्तारं विनानुपपन्ना तमाक्षिपति।स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यते।अनन्यलभ्यो हि शब्दार्थ इति न्यायात्।एवं च आख्यातवाच्यभावना कर्तारं विनानुपपन्ना तमाक्षिपतीत्याक्षेपादेव कर्तुः प्रतिपत्तिसम्भवे तद्वाचकत्वसाख्यातस्य कल्पनीयम्।- मीमांसान्यायप्रकाशस्य आख्यार्थनिरूपणे।

[3] १. वैयाकरणैराख्यातस्य कर्तरि शक्तिरुच्यते ।चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्याभेदान्वयः, तच्च गौरवात्त्यज्यते किन्तु कृतौ शक्तिर्लाघवात्।– न्यायसिद्धान्तमुक्तावल्यां शब्दखण्डे।

२. प्रथमान्तार्थविशेष्यक एव बोधः- परमलघुमञ्जूषायाम् , दशलकारादेशार्थनिरूपणे।

[4] न्यायसिद्धान्तमुक्तावल्यनुसारं लत्वस्य कर्तृकर्मादिनिष्ठशक्यतानिरूपितशक्ततावच्चेदकत्वे गौरवमनुभवन्तो नैयायिका लकारा एव वाचकाः सन्ति न तु तदादेशभूता तिप्तस्झिप्रभृतय, न्यायसिद्धन्तमुक्तावल्यां शब्दखण्डे।

[5] परमलघुमञ्जूषायां पूर्वपक्षोपस्थापनप्रक्रमे न्यायमतम् – दशलकारादेशार्थनिरूपणम्।

क गृह्यते इति जिज्ञासायामुच्यते सा च शुभाशंसनं तदिच्छा वा भवति।[1] अर्थात् प्रयोक्तृसमवेतहितप्राप्तिविषयकेच्छारुपा सा भवति।हितञ्च परस्य स्वस्य वा विवक्षितम्।तस्या विषयतासम्बन्धेन लिङ्गादिप्रकृतिभूतधात्वर्थे अन्वयः।तस्मात् भूयात् ते शिवप्रसादः इत्यनेन वक्तृसमवेतहितप्राप्तिविषयकेच्छाविषयस्त्वत्सम्बन्धिशिवप्रसादकर्तृको यत्न इति शाब्दबोधः प्रतिफलति।

तत्र विधिरित्यनेन किं विवक्ष्यते इत्यस्मिन्विषये नैयायिकपक्षतः स्वमतप्रकाशनात्पूर्वं मीमांसकेषु एकदेशभूतानां भाट्टमीमांसकानां मतं संगृह्य वदति नागेशो यत् विधिः प्रवर्तनेति भाट्टाः[2] इति। अर्थात् लिङ्श्रवणानन्तरम् अयं मां प्रेरयति इति नियमेन प्रतीतेरभिधाख्या प्रेरणापरपर्याया व्यापाररुपा भवति तथा सा प्रवर्तना लिङो वाच्या भवति।अत्र लिङ्गसंख्ययोरन्वयाभावात् व्यापाररुपतास्या भवति प्रवर्तकवृतित्त्वाच्चस्याः प्रवर्तनापदेन व्यवहारः भवति।इयं भावना शब्दनिष्ठा भवति तस्मात् आर्थी भावनातो विलक्षणा शब्दनिष्ठत्वमेवास्या वैलक्षण्यमस्ति।यद्यपि लोके पुरुषनिष्ठैव प्रवर्तना भवति परन्तु वेदस्यापौरुषेयत्वात् तत्र सा कथं भवितुमर्हति इति प्रश्ने इदमुत्तरमस्ति यत् अयं मां प्रवर्तयति इति प्रतीतिसाक्षिकस्य प्रवर्तनात्वस्य आज्ञादिष्विव शब्दव्यापारेऽपि सत्वात्तस्याः शब्दनिष्ठत्वमेव इति।भाट्टानां मतनिरासाय नैयायिकपक्षत उच्यते यत् सद्योजातस्य शिशोः अयं मां दुग्धापाने प्रवर्तयति इति बोधाभावात् प्रवृत्तिर्न स्यात् किन्तु प्रवृत्तिर्भवति तिरश्चां च लिङ्श्रवणं दुश्शकं तथापि तेषां स्वस्वकर्मणि प्रवृत्तिर्दृश्यते तेन च इष्टसाधनताज्ञानमेव विधित्वे सम्भवति मास्तु प्रवर्तनात्वम् विध्यर्थः[3]।तच्चेष्टसाधनात्वं फलबलात् जन्मान्तरीयमपि भवितुमर्हति

अथेदानीं प्रभाकरमीमांसकमतानुयायिनां मतमुपस्थापयन् वदति नागेशो यत् कार्यं विधिरिति प्राभाकराः।[4] कार्यम् अर्थात् कृतिसाध्यम्।तच्च वेदे अपूर्वरुपं भवति। तत्रैव च लिङः शक्तिरस्ति। इदमत्राकूतं – आशुतरविनाशिनो यागादेः कालान्तरभाविस्वर्गसाधनत्वस्य ग्रहीतुमशक्यत्वात् इष्टसाधनत्वं न विध्यर्थः। द्वारानुपस्थित्या च न परम्परया साधनत्वस्यापि ग्रहः संभवति।योग्यताज्ञानस्य शाब्दबोधहेतुत्वात्। योग्यता च अन्वयप्रयोजकधर्मरुपा भवति। एवञ्च यथा घटेन जलमानयेत्युक्ते जलानयनकरणत्वेन सच्छिद्रेत्तरघटे साऽनुभूयते।एवमेव स्वर्गकामो यजेत इत्यत्र यजधातु तप्रत्ययवाच्ययागकरणभावनायां लिङर्थकृतिवाच्यत्वरुपकार्याभेदान्वयस्य यागभावना कार्या इत्याकारकस्य सिद्धये यागभावनायां नियोज्यान्वयरुपाया योग्यतायाः

1 परमलघुमञ्जूषायां दशलकारदेशार्थनिरूपणे।

2 तत्रैव।

3 तत्रैव।

4 तत्रैव।

शाब्दबोधे भानमावश्यकम्।तत्र भावनायां नियोज्यान्वयस्तु स्वर्गकामनियोज्यिका यागभावना इत्येवंरूपं भवितुमर्हति।अर्थात् स्वर्गकामनिष्ठं यन्नियोज्यत्वं तन्निरूपितं यन्नियोजकत्वं तद्वती भावना। नियोज्यत्वं क्रियानिष्ठकाम्यसाधनताज्ञानाधीनमत्कार्यत्वप्रकारकज्ञानवत्वम्। नियोजकत्वञ्च स्वनिष्ठकाम्यसाधनताज्ञानजन्यमत्कार्यत्वप्रकारकज्ञानवत्वम्। उक्तरूपस्य भावनानुयोगिक नियोज्यान्वस्य लिङर्थकार्यान्वयप्रयोजकरूपवत्वरूपयोग्यतात्वञ्च प्रवृत्तिमात्रं प्रति मदिष्टसाधनत्वजन्यमत्कर्यत्वप्रकारकज्ञानं चिकीर्षोत्पादनद्वारा लाघवात् कारणमिति प्रभाकरानुभवसिद्धव्युत्पत्तिमूलकम्।

एवञ्च नियोज्यान्वयभानस्यावश्यकत्वे घटकतया कारणीभूतत्वेन भावनायां स्वर्गसाधनत्वमावश्यकम्।तथा भावनायां स्वर्गसाधनत्वज्ञानार्थं कार्यत्वरूपेणापूर्वनामकपदर्थस्य लिङा भानमावश्यकम्।तदस्वीकारे तु तृतीयक्षणवृत्तिध्वंसप्रतियोगिन्याः यागभावनाया मरणाद्यनन्तरभाविस्वर्गं प्रति साक्षात् साधनत्वग्रहासम्भवः।कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्यव्यापकरूपस्य कारणत्वस्य तत्राभावात् यागभावनाविषयकं अपूर्वात्मकं कार्यं इति रूपेण अपूर्वस्योपस्थितौ तु तस्य स्वर्गप्राप्त्यव्यवहितपूर्वक्षणावच्छेदेन स्थायीत्वात् तद्द्वारा यागभावनायां स्वर्गसाधनत्वज्ञानमुपपद्यते अर्थात् यागभावनाया अपूर्वोत्पत्तिः अपूर्वाच्च स्वर्गोत्पत्तिरिति परम्परया यागभवनायां स्वर्गसाधनत्वज्ञानं जायते।अपूर्वस्य भावनाविषयकत्वञ्च भावनाविषयककृतिसाध्यत्वमेव।कार्यञ्च कृतिसाध्यमेव।तथा च स्वर्गकामो यजेत इत्यादिवाक्यात् स्वर्गकामकर्तृकयागकरणकभावनाविषयकं कार्यमपूर्वरूपमिति प्रथमो बोधो जयते।अस्मिन् बोधे कार्यात्मकरूपेण अपूर्वस्योपस्थित्यर्थं कार्यत्वं विहाय कार्ये लिङः शक्तिः प्रतिपादिता।तदनन्तरं स्वर्गकामकर्तृकयागभावनाविषयकं स्थायित्वेन स्वर्गसाधनं कार्यमपूर्वरूपमिति द्वितीयो बोधो जायते।ततश्च स्वर्गकामनियोज्यिका यागभावना स्वर्गकामकार्या इति तृतीयो बोधः।प्रथमबोधात् अपूर्वस्य कार्यत्वेन उपस्थितिर्भवति ततश्च स्वर्गसाधनत्वग्रहात्मको द्वितीयो बोधः।द्वितीयबोधाच्च स्वर्गसाधनत्वग्रहाधीनकार्यत्वप्रकारज्ञानात् शाब्दबोधहेतुभूतयोग्यताया नियोज्यान्वयरूपाया ग्रहणेन यागभावनायां स्वर्गकामकार्यत्वस्य ग्रहात्मकः प्रवृत्यौपयिकः तृतीयः शाब्दबोधः अयमेव च प्रवृत्यौपयिकत्वात् मुख्यः।अत्र पदनिष्ठवृत्या अनुपस्थितमपि नियोज्यत्वं वाक्यशक्त्यौपस्थाप्यते।अत्र कृतिसाध्यत्वविशिष्टात्मक-लिङ्वाच्यकार्यघटक-कृतेराकाङ्क्षपूरणार्थम् अपरोऽपि चतुर्थो बोधः स्वर्गकामो यागभावनाविषयककृत्याश्रयः इति जायते।तथा चैतेषां निष्कर्षभूतः पञ्चमः अहं स्वर्गकामः अतो यागभावना मत्कृतिसाध्या इत्याकारको बोधो जायते।तस्मात् लाघवात् कृतिसाध्यत्वरूपं कार्यमेव विध्यर्थः।[1]

[1] मञ्जूषायामेव दशलकादेशनिरूपणप्रकरणे।

किन्तु न्यायविदुषां मतेन प्रभाकरमतानुयायिमीमांसकानां अपूर्वात्मकं कार्यं विधिरिति तत्रैव लिङः शाक्तिरिति मतमपि रुचिकरं न प्रतिभाति अपूर्वस्य वाच्यत्वे मानं नास्ति।घटेन जलमाहरेत्यत्रापि यो छिद्ररहितो घटः सैव घटत्वेन बोधविषयो भवति नतु सच्छिद्रेतरत्वविशिष्टघटत्वेन तदुपस्थापकाभावात्। अन्वयप्रयोजकरुपवत्वरुपयोग्यताज्ञनस्य हेतुतया तदुपस्थितिरावश्यकीत्येतदपि न कथयितुं न शक्यते वृत्या पदजन्यपदार्थोपस्थितेरेव शाब्दबोधहेतुतया तेन रुपेण भानासंभवात्। अतः प्रवर्तकज्ञानविषयो विधिरिति नैयायिकाः। प्रवर्तकं च कृतिसाध्यत्वेष्टसाधनत्वबलदनिष्टाननुबन्धित्वानां ज्ञानम्।[1] अतस्तेषु लिङ्शक्तित्रयम्।तात्पर्यमत्र वर्तते यत् कृतिसाध्यत्वनिरुपिता लिङ्गिनष्ठैका शक्तिः, इष्टसाधनत्व निरुपिता लिङ्गिनष्ठा द्वितीया शक्तिः, तथा च बलदनिष्टाननुबन्धित्वनिरुपिता लिङ्गिनष्ठा तृतीया शक्तिः।एषां मिथो विशेष्यविशेषणभावेनान्वस्य प्रमाणाभात् त्रितयनिष्ठैकाशक्तिर्न भवति।अतः स्वर्गकामो यजेत इत्यादिवाक्येभ्यो स्वार्गकामीयो यागः कृतिसाध्यः,इष्टसाधनं बलवदनिष्टाननुबन्धी चेति बोधोऽथवा नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वात् यागानुकूलकृतिमान् स्वर्गकाम इत्येव शब्दबोध भवति। कृतिसाध्यत्वं प्रवृत्तिसाध्यत्वम्।अतो न समुद्रतरणादौ प्रवृत्तिः। इष्टसाध्यत्वञ्च इष्टसाध्यतानिरुपकत्वम्। बलदनिष्टाननुबन्धित्वं तु स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्।[2]

नञ्समभिहारे तु कृतिसाध्यत्वेष्टसाधनत्वनिषेधे स्वारस्याभावात् बलवदनिष्टाननुबन्धित्वाविशिष्ट इष्टसाधनत्वरुपस्य स्वप्रतियोगिकत्वसम्बन्धेन नञर्थेऽभावेऽन्वयो अभावस्य अर्थात् नञर्थस्य स्वरुपसम्बन्धेन हननरुपधात्वर्थेऽन्वयः। तथा चा बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वप्रतियोगिकाभावविशिष्टं ब्राह्मणहननमिति शाब्दबोधो जायते। अत्र विशेषणस्य बलवदनिष्टाजनकत्वस्यविशेष्यस्येष्टसाधनत्वस्य चाभावप्रयुक्तो विशिष्टाभावस्तेन हनने बलवदनिष्टजनकत्वं प्रतीयते नैयायिकमते।तथा चात्र प्रकृत्यर्थान्वित स्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तौ नञर्थातिरिक्तत्वेन सङ्कोचः कर्तव्यो भवति।

स्वयं वैयाकरणानां मतेन लिङादेशभूतानां आख्यातप्रत्ययानां विध्यादिरर्थो वर्तते।आदिपदेन निमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनानां ग्रहणं भवति।[3]तत्रापि विध्यादिचतुष्टयनिष्ठं प्रवर्तनात्वं विध्यादिचतुष्टयार्थनिष्ठशक्यतावच्छेदकं न तु विधित्वदिकं पृथक्पृथगिति। तथापि परमकारुणिकेनाचार्येण न्यातव्युत्पादनार्थं शिष्याणां प्रपञ्चार्थ विस्तरेण ज्ञानार्थं वा इतरेषामुपादानं

[1] तत्रैव।

[2] तत्रैव दशलकादेशनिरुपणप्रकरणे ।

[3] लिङादेशस्य तु विध्यादिरर्थः।तत्र विध्यादिचतुष्टयानुस्यूतप्रवर्तनात्वेन चतुर्णां वाच्यता लाघवात्- परमलघूमञ्जूषायाम् दशलकारादेशार्थनिरूपणे।

कृतम्।वैयाकरणानां मतेन प्रवत्तर्नात्वं प्रवृत्तिजनकज्ञानविषयतावच्छेदकरुपं भवति। अर्थात् प्रवृत्तिजनकं यज्ज्ञानं इदं मदिष्टसाधनमित्याकारकं ज्ञानं तद्विषयतावच्छेदकत्वमिति यावत्। स्वर्गकामो यजेत इति वाक्येन यागो मदिष्टसाधनमिति ज्ञानं प्रवर्तकं भवति।कृतिसाध्यत्वे प्रवर्तनात्वं नास्ति, यागादौ हि तत् लोकत एव लभ्यते तथा चानन्यलभ्य एव शब्दार्थो भवति। बलवदनिष्टाननुबन्धित्वेऽपि तन्नास्ति, द्वेषाभावेन तस्य अन्यथासिद्धत्वात्।

अत्र वैयाकरणानां मतेन यदुक्तं वस्तुतस्तद् भूषणमतानुसारं उक्तमस्ति।नागेशस्य मतं लघुमञ्जूषायामेव दृयते यत् –विधि: प्रेरणं अधीष्टं नामसत्कारपूर्विका व्यापरणा इत्यादिभाष्यात् निमन्त्रणादिशब्दानां प्रयोजकनिष्ठव्यापारवाचकत्वस्य सर्वसम्मततया लिङ्श्रवणे अयं मां प्रवर्तयति इति नियमेन प्रतीतेश्च प्रेरणा प्रवर्तनापरपर्याय: प्रयोजकनिष्ठव्यापार एव लिङर्थ: न तु इष्टसाधनत्वम्, स चात्र प्रयुज्यमानलिङ्घटितवाक्यरुप एव व्यापारान्तरस्याननुभवात्। स च प्रेरणात्वेन लिङ्शक्य:शक्यतावच्छेदकं च प्रेर्यादिधात्वर्थतावच्छेदकतया सिद्धं प्रेरणात्वमखण्डोपाधि: न तु प्रवृत्तिजनकज्ञानीयविषयतावच्छेदकत्वरुपम्।स च व्यापारो अवच्छेदकतासम्बन्धेन लोके पुरुषनिष्ठ: वेदे च ईश्वरनिष्ठ:।स च शब्दरूपत्वात् शाब्दी भावना इत्युच्यते।[1]लिङ्संख्यादि अनन्वयित्वात् व्यापारपदेनापि सा व्यवह्रयते इत्यलम्।

***

[1] आचार्यजयशङ्करलालत्रिपाठिकृतायाः परमलघुमञ्जूषाया भावबोधिनी टीकाया उद्धृतम्।

ISSN-2321-6948

# [1]ऋदन्त-शब्द-स्वरुपम्

सोमा प्रामाणिकः
**State Aided College Teacher ( SACT-1 ) In Sanskrit**
भैरवगाङ्गुली महाविद्यालयः, बेलघरिया, कलिकाता-56.

ऋकारान्तशब्दः सामान्येन द्विविधो दृश्यते। केचन दातृ , कर्तृ इत्यादयः शब्दाः व्युत्पन्नरुपाः , कतिचन शब्दाश्च पितृ , भ्रातृ इत्यादयः अव्युत्पन्नरुपा भवन्ति।

दातृ-कर्तृ इत्यादिशब्दास्तु धातोः निष्पन्नाः भवन्ति। अतः ते धातुजाः तृन् , तृच् प्रत्ययान्तनिष्पन्नाः भवन्ति। तृन्[2] , ण्वुल्तृचौ[3] – इतिसूत्रद्धयेन कर्तरि[4] तृन्तृचौ विहितौ। अन्ये शेषास्तु केचन उणादय ऋकारान्तशब्दा भवन्ति। ते **उणादयोऽव्युत्पन्नानि प्रातिपदिकानि** इति। संज्ञाशब्दाः तृन्तृजन्ता औणादिका भवन्ति।




भवन्तः सर्वे जानन्ति यत् , सुप् प्रत्ययाः एकविंशतिसंख्यकाः ( 21) भवन्ति। यथा-

| | | | |
|---|---|---|---|
| सु (स्) | औ | जस् (अस्) - - | इति प्रथमा। |
| अम् | औट् (औ) | शस् (अस्) - - | इति द्वितीया। |
| टा (आ) | भ्याम् | भिस् - - | इति तृतीया। |
| ङे (ए) | भ्याम् | भ्यस् - - | इति चतुर्थी। |
| ङसि (अस्) | भ्याम् | भ्यस् - - | इति पञ्चमी। |
| ङस् (अस्) | ओस् | आम् - - | इति षष्ठी। |
| ङि (इ) | ओस् | सुप् (सु) - - | इति सप्तमी। |

एतेषु सु , औ , जस् , अम् , औट् इति स्वादिपञ्चवचनानि सर्वनामस्थान-संज्ञकानि भवन्ति। सामान्येन पञ्चवचनानि सुट् – इत्यनेन अभिधीयन्ते।

0 असम्बुद्धौ[5] सर्वनामस्थाने [6] ( सुडनपुंसके ) प्रत्यये परे तृन् तृच्-कृदन्तशब्दानाम् ॠकारस्य स्थाने **आर्** आदेशो भवति। यथा --

दातृ – ( यो ददाति ) – दाता , दातारौ , दातारः , दातारम् , दातारौ।

दातृ – औ

दात् ॠ – औ



दात् आर् – औ

अत एव – दातारौ।

एवमेव --

कर्तृ – ( यः करोति ) – कर्ता , कर्तारौ , कर्तारः , कर्तारम् , कर्तारौ ----।

ज्ञातृ – ( यो जानाति ) – ज्ञाता , ज्ञातारौ , ज्ञातारः , ज्ञातारम् , ज्ञातारौ ----।

क्रेतृ – (यः क्रीणाति ) – क्रेता , क्रेतारौ , क्रेतारः , क्रेतारम् , क्रेतारौ ----।

पातृ – ( यः पाति ) – पाता , पातारौ , पातारः , पातारम् , पातारौ ----।

ग्रहीतृ – ( यो गृह्णाति ) – ग्रहीता , ग्रहीतारौ , ग्रहीतारः , ग्रहीतारम् , ग्रहीतारौ ----।

धातृ – ( यो दधाति ) – धाता , धातारौ , धातारः , धातारम् , धातारौ ----।

अधिष्ठातृ – ( योऽधितिष्ठति ) – अधिष्ठाता , अधिष्ठातारौ , अधिष्ठातारः , अधिष्ठातारम् , अधिष्ठातारौ।

रचयितृ – ( यो रचयति ) – रचयिता , रचयितारौ , रचयितारः , रचयितारम् , रचयितारौ ----।

जेतृ – ( यो जयति ) – जेता , जेतारौ , जेतारः , जेतारम् , जेतारौ ----।

नेतृ – ( यो नयति ) – नेता , नेतारौ , नेतारः , नेतारम् , नेतारौ ----।

श्रोतृ – ( यः शृणोति ) -- श्रोता , श्रोतारौ , श्रोतारः , श्रोतारम् , श्रोतारौ ----।

योद्धृ – ( यो युध्यते ) – योद्धा , योद्धारौ , योद्धारः , योद्धारम् , योद्धारौ ----।

जनयितृ – ( यो जनयति ) – जनयिता , जनयितारौ , जनयितारः , जनयितारम् , जनयितारौ ----।

स्रष्टृ – ( यः सृजति ) – स्रष्टा , स्रष्टारौ , स्रष्टारः , स्रष्टारम् , स्रष्टारौ ----।

हन्तृ – ( यो हन्ति ) – हन्ता , हन्तारौ , हन्तारः , हन्तारम् , हन्तारौ ----।

वेत्तृ – (यो वेत्ति ) – वेत्ता , वेत्तारौ , वेत्तारः , वेत्तारम् , वेत्तारौ ----।

वक्तृ – ( यो वक्ति ) – वक्ता , वक्तारौ , वक्तारः , वक्तारम् , वक्तारौ ----।

द्रष्टृ – ( यः पश्यति ) – द्रष्टा , द्रष्टारौ , द्रष्टारः , द्रष्टारम् , द्रष्टारौ - - - -।

परन्तु-

0 अव्युत्पन्न-पितृ-भ्रातृ-शब्दानाम् ऋकारस्य स्थाने **अर्**- इति आदेशो भवति , सुट् प्रत्यये परे। सुडिति प्रत्याहारः सु औ जस् अम् औट् इति पञ्च वचनानि। यथा –

पितृ – पिता , पितरौ , पितरः , पितरम् , पितरौ - - - -।

मातृ – माता , मातरौ , मातरः , मातरम्, मातरौ - - - -।

भ्रातृ – भ्राता , भ्रातरौ , भ्रातरः , भ्रातरम् , भ्रातरौ - - - -।

जामातृ – जामाता , जामातरौ , जामातरः , जामातरम् , जामातरौ - - - -।

दुहितृ – दुहिता , दुहितरौ , दुहितरः , दुहितरम् , दुहितरौ - - - -।

ननान्दृ – ननान्दा , ननान्दरौ , ननान्दरः , ननान्दरम् , ननान्दरौ - - - -।

यातृ – याता , यातरौ , यातरः , यातरम् , यातरौ - - - -।

सवितृ – सविता , सवितरौ , सवितरः , सवितरम् , सवितरौ - - - -।

0 औणादिकेषु नप्त्रादि सप्तानामेव तृन् तृजन्तानां शब्दानां सर्वनामस्थाने ( सुट् ) प्रत्यये ऋकारस्य स्थाने **आर्** भवति। एतेन सह स्वसृ शब्दस्यापि ग्रहणं भवति। यथा –

स्वसृ – स्वसा , स्वसारौ , स्वसारः , स्वसारम् , स्वसारौ - - - -।

नप्तृ – नप्ता , नप्तारौ , नप्तारः , नप्तारम् , नप्तारौ - - - -।

नेष्टृ – नेष्टा , नेष्टारौ , नेष्टारः , नेष्टारम् , नेष्टारौ - - - -।

त्वष्टृ – त्वष्टा , त्वष्टारौ , तष्टारः , तष्टारम् , तष्टारौ - - - -।

क्षत्तृ – क्षत्ता , क्षत्तारौ , क्षत्तारः , क्षत्तारम् , क्षत्तारौ - - - -।

होतृ – होता , होतारौ , होतारः , होतारम् , होतारौ - - - -।

पोतृ – पोता , पोतारौ , पोतारः , पोतारम् , पोतारौ - - - -।

प्रशास्तृ – प्रशास्ता , प्रशास्तारौ , प्रशास्तारः , प्रशास्तारम् , प्रशास्तारौ - - - -।

पुनः स्मरणम् –

दातृशब्दे - - - दातारौ दातारः - -।

किन्तु- पितृशब्दे - - - पितरौ पितरः - -।

{ दा – तारौ { दा – तारः
पि – तरौ पि – तरः इत्यादि।

शसादौ तु समानरुपाणि दृश्यन्ते। यथा –

दातृ – शस् – [7] दातृ*न्। जेतृ – शस् – जेतृ*न्।

श्रोतृ – शस् – श्रोतृ*न्। रचयितृ – शस् – रचयितृ*न्।

पितृ – शस् – पितृ*न्। योद्धृ – शस् – योद्धृ*न्।

कर्तृ – शस् – कर्तृ*न्। स्रष्टृ – शस् – स्रष्टृ*न्।

भ्रातृ – शस् – भ्रातृ*न्। हन्तृ – शस् – हन्तृ*न्।

नेतृ – शस् – नेतृ*न्। वेत्तृ – शस् – वेत्तृ*न्।

ज्ञातृ – शस् – ज्ञातृ*न्। वक्तृ – शस् – वक्तृ*न्।

क्रेतृ – शस् – क्रेतृ*न्। द्रष्टृ – शस् – द्रष्टृ*न्।

पातृ – शस् – पातृ*न्। जामातृ – शस् – जामातृ*न्।

ग्रहीतृ – शस् – ग्रहीतृ*न्। सवितृ – शस् – सवितृ*न्।

धातृ – शस् – धातृ*न्। नृ – शस् – नृ*न्।

0 स्त्रीलिङ्ग-ऋकारान्तशब्दानां द्वितीयाबहुवचने नकारो न श्रूयते तत्स्थाने विसर्गो[8] भवति। यथा –

पितृ*न् परन्तु मातृः*।

भ्रातृ*न् ,, स्वसृः*।

दातृ*न् ,, दुहितृः*।

जामातृ*न् ,, ननान्दृः*।

सवितृ*न् ,, यातृः*। इत्यादि।

तृतीयैकवचने – टा ( आ )

चतुर्थ्यैकवचने – ङे ( ए )

षष्ठी – सप्तमीद्विवचने – ओस् ( ओः ) –

विभक्तिस्थले केवलम् ऋकारस्य स्थाने रेफादेशे [9] रूपसिद्धिर्भवति। यथा –

पितृ – टा ( आ ) – पित्रा।

पितृ – ङे – ( ए ) – पित्रे।

पितृ – ओस् ( ओः ) – पित्रोः ( 2 )।

ऋकारान्तशब्दात् पञ्चमी-षष्ठ्येकवचने ङसि-ङसोः अकारे परतः उर् एकादेशो[10] भवति।

यथा – पितृ – ङसि ( अस् ) – पितुः।

पितृ – ङस् ( अस् ) – पितुः। इत्यादि –

षष्ठीबहुवचने नामि परतः ऋकारस्य दीर्घ-ॠकारे रुपसिद्धिर्भवति [11]। यथा –

पितृ – आम् – पितृ*णाम्।

मातृ*णाम् , भ्रातृ*णाम् , दातृ*णाम् , स्वसृ*णाम् , जामातृ*णाम् , कर्तृ*णाम् इत्यादि।

परन्तु

**तिसृणाम् , चतसृणाम्** – इति पदद्वये दीर्घादेशो न[12] भवति।

नृ – शब्दे तु विकल्पेन दीर्घादेशो भवति। यथा –

**नृ*णाम् , नृणाम्।**

सर्वत्र णत्वविधानेन णत्वं [13] विधीयते।

स्त्रीलिङ्गे त्रि तथा चतुर् शब्दे तिसृ चतसृ इत्यादेशौ[14] भवतः। अतः तिसृ चतसृ शब्दस्य प्रथमा-द्वितीयाबहुवचने तिस्रः चतस्रः – इति रुपं सिध्यति।

0 समेषाम् ऋकारान्तशब्दानां सप्तम्येकवचने ङि-विभक्तौ परतः ऋकारस्य स्थाने **अर्** इत्यादेशो भवति।

यथा –

| | |
|---|---|
| पितृ – ङि – पितरि। | मातृ – ङि – मातरि। |
| भ्रातृ – ङि – भ्रातरि। | स्वसृ – ङि – स्वसरि। |
| सवितृ – ङि – सवितरि। | जामातृ – ङि – जामातरि। |
| दातृ – ङि – दातरि। | कर्तृ – ङि – कर्तरि। |
| ज्ञातृ – ङि – ज्ञातरि। | क्रेतृ – ङि – क्रेतरि। |
| नेतृ – ङि – नेतरि। | हन्तृ – ङि – हन्तरि। |
| नृ – ङि – नरि। | वक्तृ – ङि – वक्तरि। इत्यादि। |

0 भ्याम् (3) , भिस् , भ्यस् (2) , सुप् – इति हलादौ विभक्तौ परे ऋकारान्तशब्दानां किमपि परिवर्तनं न भवति। केवलं सुप् इत्यस्य षत्वं[15] भवति। यथा –

| | |
|---|---|
| पितृ – भ्याम् – पितृभ्याम् (3)। | दातृ – भ्याम् – दातृभ्याम् (3)। |
| पितृ – भिस् – पितृभिः। | दातृ – भिस् – दातृभिः। |
| पितृ – भ्यस् – पितृभ्यः (2)। | दातृ – भ्यस् – दातृभ्यः (2)। |
| पितृ – सुप् – पितृषु ( [15]षत्वनियमः )। | दातृ – सुप् – दातृषु। |

मातृ – भ्याम् – मातृभ्याम् (3)। स्वसृ – भ्याम् – स्वसृभ्याम् (3)।

मातृ – भिस् – मातृभिः। स्वसृ – भिस् – स्वसृभिः।

मातृ – भ्यस् – मातृभ्यः (2)। स्वसृ – भ्यस् – स्वसृभ्यः (2)।

मातृ – सुप् – मातृषु। स्वसृ – सुप् – स्वसृषु।

0 सर्वेषाम् ऋकारान्त-शब्दानां सम्बोधनस्य एकवचने ( [16]सम्बुद्धौ ) रुपाणि यथा –

हे पितृ – सु – पितः। हे दातृ – सु – दातः।

हे मातृ – सु – मातः। हे स्वसृ – सु – स्वसः।

हे भ्रातृ – सु – भ्रातः। हे सवितृ – सु – सवितः।

हे दातृ – सु – दातः। हे कर्तृ – सु – कर्तः।

हे ज्ञातृ – सु – ज्ञातः। हे क्रेतृ – सु – क्रेतः।

हे धातृ – सु – धातः। हे नृ – सु – नः। इत्येवं रुपाणि भवन्ति।

**पिता माता ननान्दा ना** ( पितृ , मातृ , ननान्दृ , नृ – 4 )

**सव्येष्ट्र - भ्रातृ – यातरः**। (सव्येष्ट्र , भ्रातृ , यातृ – 3 )

**जामाता दुहिता देवा -** ( जामातृ , दुहितृ , देवृ – 3 )

**पित्रादि – दशकं स्मृतम्।।** अतः पित्रादिगणे दश शब्दाः सन्ति।

एतेषु षट् पुंलिङ्गशब्दाः , चत्वारश्च स्त्रीलिङ्गशब्दा विद्यन्ते।

**पितृ-शब्दः** नित्यद्विवचने प्रयुक्ते सति मातरम् पितरम् च उभौ बुध्यते। माता च पिता च – पितरौ ( [17] एकशेषवृत्तिः )।

वागर्थाविव संपृक्तौ वागर्थः प्रतिपत्तये।
जगतः **पितरौ** वन्दे पार्वतीपरमेश्वरौ [18]।।

**पितृ – शब्दः** बहुवचने प्रयुक्ते सति पितृपुरुषान् ज्ञापयति।

( ओं ) आगच्छन्तु मे **पितर** इमं गृह्णन्त्वपोऽञ्जलिम्। ( पितृ – तर्पणे )

( ओं ) तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः।
प्रत्नमद्भिः पृक्तः स्वधया **पितृ*न्** लोकान् प्रीणाहि नः स्वाहा।।

( ओं ) देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।
नमः स्वधायै स्वाहायै नित्यमेव भवन्त्विति।। ( पितृ – श्राद्धे )

अत्रावधेयम् –

राज्ञः दशरथस्य पत्नीषु कौशल्यायाः पुत्रः रामः , सुमित्रायाः पुत्रौ लक्ष्मणः शत्रुघ्नश्च। ऋष्यशृङ्गमुनिः राज्ञः दशरथस्य दुहितरं शान्तां , श्रीरामः सीतां , लक्ष्मणश्च ऊर्मिलां परिणीतवन्तः। अतः –

**पुरुष-सम्बन्धे**

दशरथः - रामस्य , लक्ष्मणस्य , शत्रुघ्नस्य च **पिता**।

लक्ष्मणः शत्रुघ्नश्च मिथः सहदरौ **भ्रातरौ**।

रामः लक्ष्मणश्च मिथः वैमात्रेयौ **भ्रातरौ**।

ऋष्यशृङ्गः - दशरथस्य **जामाता**।

लक्ष्मणः शत्रुघ्नश्च – सीतायाः **देवरौ**।

**स्त्री-सम्बन्धे**

कौशल्या - श्रीरामस्य **माता** , लक्ष्मणस्य **विमाता**।

सुमित्रा-रामस्य **विमाता** , लक्ष्मणस्य **माता**।

शान्ता - दशरथस्य **दुहिता** , सीतायाः **ननान्दा**।

सीता ऊर्मिला च मिथः **यातरौ**।

**[19] स्वसा तिस्रश्चतस्रश्च [20] ननान्दा [21] दुहिता तथा।**

**[22] याता मातेति सप्तैते स्वस्रादय उदाहृताः।।**

एतान् सप्त स्त्रीलिङ्ग – स्वस्रादिशब्दान् विहाय अन्ये ये ऋकारान्तशब्दाः सन्ति , तेभ्यः स्त्रियां ङीप् (ई) भवति [23]। ङीपि प्रत्यये सति ततः ऋकारस्य रेफादेशे [24] ऋकारान्तशब्दानां नदीशब्दवद् रुपाणि भवन्तीति विज्ञेयम्। नेतृ – ( स्त्रियां ङीप् – नेत्री। एवं विध – नेत्री – शब्दस्य , नेत्री नेत्र्यौ नेत्र्यः – इति प्रथमा। ( नेत्री महिला , नेत्र्यौ महिले , नेत्र्यः महिलाः ) नेत्रीम् नेत्र्यौ नेत्रीः – इति द्वितीयी। ( नेत्रीं महिलाम् , नेत्र्यौ महिले , नेत्रीः महिलाः ) इत्यादयः। क्लीवे तु – धातृ धातृणी धातृ*णि। हे धातः , हे धातृ इत्यादयः। तृतीयादौ टादावचि तु [25] पुंवद् वा भवति। यथा – धात्रा , धातृणा। धात्रे , धातृणे। धातुः , धातृणः (2)। धात्रोः , धातृणोः (2)।

**पितृ – शब्दः** ( अव्युत्पन्नः )

| **विभक्तिः** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| **प्रथमा-** | पिता | **पितरौ** | **पितरः** |
| **द्वितीया-** | **पितरम्** | **पितरौ** | पितृ*न् |
| **तृतीया-** | पित्रा | पितृभ्याम् | पितृभिः |
| **चतुर्थी-** | पित्रे | पितृभ्याम् | पितृभ्यः |
| **पञ्चमी-** | पितुः | पितृभ्याम् | पितृभ्यः |
| **षष्ठी-** | पितुः | पित्रोः | पितृ*णाम् |
| **सप्तमी-** | पितरि | पित्रोः | पितृषु |

**दातृ – शब्दः** ( व्युत्पन्नः )

| **विभक्तिः** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| **प्रथमा-** | दाता | **दातारौ** | **दातारः** |
| **द्वितीया-** | **दातारम्** | **दातारौ** | दातृ*न् |
| **तृतीया-** | दात्रा | दातृभ्याम् | दातृभिः |
| **चतुर्थी-** | दात्रे | दातृभ्याम् | दातृभ्यः |
| **पञ्चमी-** | दातुः | दातृभ्याम् | दातृभ्यः |
| **षष्ठी-** | दातुः | दात्रोः | दातृ*णाम् |
| **सप्तमी-** | दातरि | दात्रोः | दातृषु |

**सम्बोः**- हे पितः पितरौ पितरः **सम्बोः**- हे दातः दातारौ दातारः

**मातृ — शब्दः** ( अव्युत्पन्नः ) **स्वसृ — शब्दः** ( अव्युत्पन्नः )

| **विभक्तिः** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** | **विभक्तिः** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|---|---|---|---|
| **प्रथमा**- | माता | **मातरौ** | **मातरः** | **प्रथमा**- | स्वसा | **स्वसारौ** | **स्वसारः** |
| **द्वितीया**- | **मातरम्** | **मातरौ** | मातॄः* | **द्वितीया**- | **स्वसारम्** | **स्वसारौ** | स्वसॄः* |
| **तृतीया**- | मात्रा | मातृभ्याम् | मातृभिः | **तृतीया-** | स्वस्रा | स्वसृभ्याम् | स्वसृभिः |
| **चतुर्थी-** | मात्रे | मातृभ्याम् | मातृभ्यः | **चतुर्थी-** | स्वस्रे | स्वसृभ्याम् | स्वसृभ्यः |
| **पञ्चमी**- | मातुः | मातृभ्याम् | मातृभ्यः | **पञ्चमी**- | स्वसुः | स्वसृभ्याम् | स्वसृभ्यः |
| **षष्ठी-** | मातुः | मात्रोः | मातॄ*णाम् | **षष्ठी-** | स्वसुः | स्वस्रोः | स्वसॄ*णाम् |
| **सप्तमी-** | मातरि | मात्रोः | मातृषु | **सप्तमी**- | स्वसरि | स्वस्रोः | स्वसृषु |
| **सम्बोः**- | हे मातः | मातरौ | मातरः | **सम्बोः**- | हे स्वसः | स्वसारौ | स्वसारः |

**नृ — शब्दः** ( अव्युत्पन्नः ) **तिसृ — शब्दः** ( नित्यं बहुः ) **चतसृ**

| **विभक्तिः** | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** | **विभक्तिः** | **बहुवचनम्** | **बहुवचनम्** |
|---|---|---|---|---|---|---|
| **प्रथमा**- | ना | **नरौ** | **नरः** | **प्रथमा-** | तिस्रः | चतस्रः |
| **द्वितीया**- | **नरम्** | **नरौ** | नॄ*न् | **द्वितीया**- | तिस्रः | चतस्रः |
| **तृतीया**- | न्रा | नृभ्याम् | नृभिः | **तृतीया**- | तिसृभिः | चतसृभिः |
| **चतुर्थी-** | न्रे | नृभ्याम् | नृभ्यः | **चतुर्थी-** | तिसृभ्यः | चतसृभ्यः |
| **पञ्चमी-** | नुः | नृभ्याम् | नृभ्यः | **पञ्चमी-** | तिसृभ्यः | चतसृभ्यः |
| **षष्ठी-** | नुः | न्रोः | नृणाम् / नॄ*णाम् | **षष्ठी-** | तिसृणाम् | चतसृणाम् |
| **सप्तमी-** | नरि | न्रोः | नृषु | **सप्तमी**- | तिसृषु | चतसृषु |
| **सम्बोः**- | हे नः | नरौ | नरः | **सम्बोः**- | हे तिस्रः | चतस्रः |

नृ-शब्दस्य प्रथमाबहुवचने नरः इति रूपं जातम् , परन्तु नर-शब्दस्य प्रथमाबहुवचने नराः इति रूपं भवति। अतः **नरः गच्छन्ति** ( नृ- शब्दात् )।

**नरः गच्छति** ( नर- शब्दात् ) एतदुभयं वाक्यं साधु। विस्तरेणालम्।

**तथ्यसूत्रम् –**

(1) तपरस्तत्कालस्य – ( पा.सू.- 1/1/70 ) तः परो यस्मात् स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात्। इत्यनेन ह्रस्व-ऋकारो बोध्यते।

(2) पा.सू.- 3/2/135।

(3) पा.सू.- 3/1/133।

(4) कर्तरि कृत् ( पा.सू.- 3/4/67 ) कृत् प्रत्ययः कर्तरि वाच्ये स्यात्।

(5) एकवचनं सम्बुद्धिः (पा.सू.- 2/3/49 ) – सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं भवति।

(6) शि सर्वनामस्थानम् , सुडनपुंसकस्य (पा.सू1/1/42-43 ) शि इत्यस्य तथा स्वादिपञ्चवचनानि सर्वनाम-स्थानसंज्ञानि भवन्ति , अक्लीवस्य।

(7) प्रथमयोः पूर्वसवर्णः ( पा.सू.- 6/1/101 ) अकः ( अ इ उ ऋ लृ ) प्रथमा – द्वितीययोरचि पूर्वपरयोः पूर्वसवर्णदीर्घो जातः। ततः तस्माच्छसो नः पुंसि ( पा.सू. – 6/1/102 ) इत्यनेन पुंसि शसो नकारो विधीयते। **Arial Unicode MS** इति उत्टङ्कने देवनागरी दीर्घ-ऋकारो नास्ति अतः ( * ) अनेन चिह्नेन दीर्घ-ऋकारः सूचितो मया। अतः ( * ) चिह्नमेतद् यत्र दृश्यते तत्र दीर्घ-ऋकारो ज्ञातव्यः।

(8) अत्र ऋकारस्य दीर्घे सति शसः नकारो न जातः , पुल्लिँङ्गाभावात्।

(9) इको यणचि (पा.सू.- 6/2/77 ) इकः ( इ उ ऋ लृ ) स्थाने यण् ( य् व् र् ल् ) स्यात् असवर्णे अचि ( स्वरवर्णे) परतः।

(10) ऋत उत् (पा.सू.- 6/1/111 ) ऋतो ङसि-ङसोरति उदेकादेशः। रपरः। विसर्गश्च।

(11) ह्रस्वनद्यापो नुट् ( 7/1/54 ) ह्रस्वान्तान्नद्यन्तादावन्ताच्चाङ्गात् परस्यामो नुडागमः। नामि (6/4/3) अजन्ताङ्गस्य दीर्घः नामि परे।

(12) न तिसृ – चतसृ (पा.सू.- 6/4/4 ) , नृ च (पा.सू.- 6/4/6 ) नृ शब्दस्य नामि वा दीर्घः।

(13) ऋवर्णान्नस्य णत्वं वाच्यम् ( वर्तिकसूत्रम् – 4969 )।

(14) त्रि – चतुरोः स्त्रियां तिसृ – चतसृ (पा.सू.- 7/2/99 )।

(15) आदेशप्रत्यययोः (पा.सू.- 8/3/59 ) इण् कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवश्च यः सस्तस्य मूर्धन्यादेशः स्यात्।

(16) एकवचनं सम्बुद्धिः (पा.सू.- 2/3/49 ) सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्।

(17) पिता मात्रा ( पा.सू.- 1/2/70 ) मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च पितरौ , मातापितरौ वा। अन्येषां मतेन – मातरपितरौ इत्यपि साधु रुपम्।

(18) ( रघुवंशम्- 1/1 )।

(19) भगिनी।

(20)पत्युर्भगिनी।

(21)पुत्री।

(22)पतिभ्रातृपत्नी।

(23)ऋन्नेभ्यो ङीप् ( पा.सू.- 4/1/5 ) ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् भवति।

(24)इको यणचि ( पा.सू.- 6/1/77 ) इकः ( इ उ ऋ लृ ) स्थाने यण् (य् व् र् ल् ) स्यात् असवर्णे अचि ( स्वरवर्णे ) परे।

(25)तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ( पा.सू.- 7/1/74 ) पुंस्त्रीक्लीवेषु समानम् , तस्मिन्सति भाषितपुंस्कस्य इगन्तस्य क्लीवस्य टादावचि विभक्तौ वा पुंवद्भावो भवति। पक्षे नुमागमः।

**सहायकग्रन्थसूची---**


(1) पाण्डा डः अध्यापक श्रीविश्वरञ्जन , संस्कृत-व्याकरण ओ अनुवाद-शिक्षा , संस्कृत बुक् डिपो, कोलकाता-6, 2010 ई.

(2) ओप्टे, वामन-शिवरामः, संस्कृत-हिन्दी-कोशः,दिल्लीः मोतीलाल-बनारसीदास-पाब्लिशार्स्-प्राइभेट्-लिमिटेड्, 2007 ई.

(3) त्रिपाठी, ड.जयशङ्करलालः, काशिका, वाराणसीः तारा प्रिन्टिंस् वर्क्स्, 1985 ई.

(4) दीक्षितः, श्रीमद्भट्टोजी, वैयाकरणसिद्धान्तकौमुदी (सम्पूर्णम्) , सम्पादकौ, शर्मा, महामहोपाध्यायः गिरिधरः, शर्मा, महामहोपाध्यायः परमेश्वरानन्दः, श्रीवासुदेवदीक्षितप्रणीतया बालरनोरमाख्यया व्याख्यया श्रीज्ञानेन्द्रसरस्वती-विरचितया तत्वबोधिन्याख्यया च सनाथिता, वाराणसीः मोतीलाल-बनारसीदास ,2010 ई.

(5) देवशर्मा, श्रीकालीजीवनः , शब्दशास्त्रेर् इतिहास , कलिकाताः रामकृष्णमिशन इन्स्टिटिउट् अव् काल्चार्, प्रथमसंस्करणम् , 1995 ई.


***

# व्याकरणाध्ययनस्य बहुविधानि प्रयोजनानि

**पंकज शर्मा**
**शोधच्छात्रः**
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
**वेदव्यासपरिसरःबलाहरः (हि.प्र.)।**

अस्मिन् जगति सर्वे जानन्ति यत् सर्वप्राचीनाः ग्रन्थाः वेदाः सन्ति। वेदा चत्वारः सन्ति – ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्च। वेदस्यैव वेदाङ्गत्वेन षड्वेदाङ्गानि कथितानि सन्ति। उक्तञ्च-

**छन्दः पादौ तु वेदस्य, हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।**
**शिक्षा घ्राणं तु वेदस्य, मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।।**

भगवता पतञ्जलिना स्वकीये ग्रन्थे महाभाष्ये उक्तमस्ति- ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्ययो ज्ञेयश्चेति । वेदानां षट् अङ्गानि सन्ति । तत्र व्याकरणं प्रधानम् । अतः व्याकरणं मुखमुच्यते । उक्तञ्च -**"मुखं व्याकरणं स्मृतम्"।**"व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेनेति व्याकरणम्", वि आङ् इत्युपसर्गपूर्वककृञ् धातोः ल्युट् प्रत्ययेन व्याकरणशब्दो निष्पद्यते। व्याक्रियन्ते पृथक्क्रियन्ते साधुशब्दाः असाधुशब्देभ्यः प्रकृतिप्रत्ययादिज्ञानमहिम्नाऽनेनेति व्याकरणम्। विचाराणाम् अभिव्यक्तिं शुद्धां परिष्कृतां परिमार्जितां च कर्तुं भाषाविशेषस्य व्याकरणमावश्यकं भवति। व्याकरणेन विना छात्राः शुद्धरुपेण भाषाज्ञानं न प्राप्तुं शक्नुवन्ति। साधुशब्दानां ज्ञानार्थं व्याकरणस्य ज्ञानमनिवार्यमस्ति। अवैयाकरणस्तु साधुशब्दानां प्रयोगेऽसमर्थाः भवन्ति। उक्तञ्च -

**यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्।**
**स्वजनः श्वजनो मा भूत् सकलं शकलं सकृच्छकृत्।।**

भगवान् भाष्यकारः पतञ्जलिः व्याकरणाध्ययनस्य "अथ शब्दानुशासनमिति" साक्षात् प्रयोजनमभिधाय परम्परया व्याकरणाध्ययनस्य गौणमुख्यप्रयोजनानि प्रतिपादयितुमारभते । महाभाष्यकारमहर्षिपतञ्जलिमताऽनुसारेण व्याकरणाध्ययनस्य पञ्चमुख्यप्रयोजनानि सन्ति। तथा

त्रयोदशगौणप्रयोजनानि वर्तन्ते । मुख्यप्रयोजनत्वेन **–"रक्षोहागमलघ्वसन्देहाः प्रयोजनम्"[1]।**

**1. रक्षा –**

भाष्कारपतञ्जलिना रक्षायाः लक्षणं कुर्वता लिखितमस्ति **–"रक्षार्थं वेदानामध्येयं व्याकरणम्"[2]** अर्थात् वेदानां रक्षार्थं व्याकरणस्य अध्ययनं नितरामावश्यकं वर्तते। ये लोपागमवर्णविकारादीनां ज्ञातारः सन्ति ते एव वेदानां सम्यक्प्रकारेण रक्षां कर्तुं समर्थाः सन्ति। तथाहि **"लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यति।"** अत्रेदं तत्त्वम्- लोके लोपाद्यदृष्टं वेदे दृष्टवा भ्राम्येदवैयाकरणः, वैयाकरणश्च न भ्रमति, वेदार्थञ्च अध्यवस्यति। तत्र लोपागमयोरुदाहरणं यथा –

देवा अदुह्रेति । दुहेर्लङो झस्य अदादेशे कृते "लोपस्त आत्मनेपदेषु "इत्यनेन तलोपे "बहुलं छन्दसि "[3] इत्यनेन रुटि सति रुपमेतत् सिद्धयति । लोके च "अदुहत" इति प्रयोगो दृश्यते । एवं मध्या कर्तोर्विततं संजभार- इत्यत्र हकारस्य भकारादेशः । लोके – संजहारेति दृश्यते । वर्णविकारो यथा– उद्ग्राभं, निग्राभञ्चेति ।

**2.ऊहः –**

महाभाष्यकारः ऊहम् स्पष्टयन् कथयति यत् वेदेषु पठितमन्त्रेषु सर्वाणि लिङ्गानि तथा विभक्तयः नैव प्रयुक्ताः। यजमानस्य यज्ञसमये वेदमन्त्रजपकाले समस्तलिङ्गानां विभक्तीनाञ्च ज्ञानमावश्यकम् **–"ऊहः खल्वपि न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्राः निगदिताः तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम्, तस्मादध्येयं व्याकरणम्"[4]**

अयं भावः – प्रकृतियागे विनियुक्तानाम्मन्त्राणां देवतादिवाचकपदानां विकृतियागस्य देवतादिबोधनार्थं विपरिणाम "ऊह " इत्युच्यते । सर्वेषामिष्टियागानां दर्शपूर्णमासाप्रकृतिः , सर्वेषाञ्च सोमयागानाम् अग्निष्टोमयागः प्रकृतिः। यस्मिन् यागे इतिकर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः । यत्र च "प्रकृतिवद्विकृतिः कर्तव्येति " वचनात्प्रकृतियागेनोपजीव्यते सा विकृतिः ।

---

[1]व्याकरणमहाभाष्यम् (चारुदेव शास्त्री) पृष्ठसंख्या-4

[2]व्याकरणमहाभाष्यम् (चारुदेव शास्त्री) पृष्ठसंख्या-4

[3]पाणिनीय अष्टाध्यायी ७.१.८ ।

[4]व्याकरणमहाभाष्यम् (चारुदेव शास्त्री) पृष्ठसंख्या-5

तत्र " प्रकृतिवद्विकृतिकर्तव्येति" मीमांसकसिद्धान्तात्प्रकृतियागे पठितस्य "अग्नये त्वा जुष्टं निर्वपामि " इति मन्त्रस्य " सौर्यं चरुं निर्वपेद् ब्रह्मवर्चस्कामः" इति वचनानुसारेण सौर्ये चरौ विकृति यागे अग्निसंबन्धिनिर्वापप्रकाशकमन्त्रस्थाग्निपदस्य सूर्यसम्बन्धिनिर्वापप्रकाशनाऽसमर्थत्वात्त-दपहाय तत् स्थाने " सूर्याय त्वा जुष्टं निर्वपामि " इत्यूहार्थमध्येयं व्याकरणम् ।

**3. आगमः-**

पतञ्जलिः व्याकरणाध्ययनस्य प्रयोजनानि अकथयन् आगमं स्पष्टीकृतवान्। भाष्यकारः कथयति यद् ब्राह्मणः किमपि दृष्टकारणानपेक्षमाणः शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दसां तथा ज्योतिषविज्ञानस्य च सम्यगध्ययनं विदध्यात्— **"आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गोवेदोध्येयो ज्ञेयश्चेति । प्रधानञ्च षट्स्वङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्नः फलवान् भवति"।**[1]

अत्रेदं तत्त्वं —व्याकरणस्य पदपदार्थावगमद्वारा वाक्यार्थावगमोपयोगित्वात्-तदध्ययनप्रयुक्तस्य वेदार्थाज्ञानप्रयुक्तस्य च प्रत्यवायस्य परिहारार्थमध्येयं व्याकरणम्। सर्वेषां ब्राह्मणानां कृते षडङ्गयुक्तवेदस्य अध्ययनमत्यावश्यकं भवति । भाष्यकारः कथयति —**"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोध्येयो ज्ञेयश्चेति ।** षटसु अङ्गेषु व्याकरणमेव प्रधानमस्ति। अतोऽस्य पठनं पाठनं सर्वापेक्षया अधिकं फलदायकं भवति। यतोहि उक्तमस्ति —

**"प्रधाने च कृतो यत्नः फलवान् भवति ।"**

**4.लघु —** "लघु" इत्याख्यं चतुर्थप्रयोजनं व्याचक्षाणेनोक्तम् भगवता पतञ्जलिना —

व्याकरणस्याध्ययनं लाघवार्थमपि कर्तव्यम्। **भाष्यकारः कथयति —"लघ्वर्थं चाध्येयं व्याकरणम्"।** संसारे सर्वो व्यवहारः शब्देन जायते । संसारेऽस्मिन् बहवः शब्दाः सन्ति । शब्दस्य कोऽपि सीमा नास्ति । किन्तु शब्दस्य ज्ञानमावश्यकम् । ब्राह्मणेनावश्यं शब्दाः ज्ञेया इति । न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्याः विज्ञातुम् ।

**5. असन्देहः —**असन्देहः इत्याख्यं पञ्चमं प्रयोजनं प्रोक्तं भगवता पतञ्जलिना —

**असन्देहः —"असन्देहार्थञ्चाऽध्येयं व्याकरणम्"।** अस्य उदाहरणं दीयते यथा याज्ञिकाः पठन्ति —

**"स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत"** इत। अत्र शङ्का जायते यत् स्थूल**पृषती**

[1]व्याकरणमहाभाष्यम् (चारुदेव शास्त्री) पृष्ठसंख्या-5-6

इत्यस्य कोऽर्थः । अत्र स्थूला चासौ पृषती च स्थूलपृषती वा स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीति भविष्यति । अस्यार्थस्य ज्ञानं व्याकरणे नैव भवितुमर्हति । यदि स्थूलपृषती इत्यत्र पूर्वपदमुदात्तप्रकृतिस्वरत्वं भवेत् तदा अत्र बहुव्रीहिसमासः भूत्वा स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीत्यर्थो भविष्यति । यदि अत्र अन्त्य अच् उदात्तो भवेत् तदा तत्पुरुषसमासः भूत्वा स्थूला चासौ पृषती च स्थूलपृषतीत्यर्थो भविष्यति । अतः सन्देहनिवृत्यर्थं व्याकरणस्य अध्ययनमावश्यकं भवति । अत एव सम्यक् प्रकारेण व्याकरणं पठितव्यम् ।

व्याकरणशास्त्रस्य गौणप्रयोजनत्वेन भाष्ये भगवता पतञ्जलिना त्रयोदशः गौणप्रयोजनान्युक्तानि वर्तन्ते। तेऽसुराः, दुष्टः शब्दः, यदधीतम्, यस्तु प्रयुङ्क्ते, अविद्वांसः, विभक्तिं कुर्वन्ति, यो वा इमाम् , चत्वारि, उत त्वः , सक्तुमिव, सारस्वतीम् , दशम्यां पुत्रस्य , सुदेवो असि वरुण इति ।

प्रथमं प्रयोजनत्वेन उक्तं

१. **"तेऽसुराः"**—अतः परम् आनुषङ्गिकप्रयोजनेषु प्रथमं तेऽसुराः इत्याख्यं प्रयोजनं उक्तं भगवता पतञ्जलिना — तेऽसुराः हेलयो हेलय इति कुर्वन्तः पराबभूवः । तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै । म्लेच्छो ह वा एष यदपशब्दः । म्लेच्छा मा भूमेत्यध्ययं व्याकरणम् ।।

२. **दुष्टः शब्दः** —अतः परम् "दुष्टः शब्दः "इति द्वितीयम् आनुषङ्गिकं प्रयोजनं उक्तं भगवता पतञ्जलिना **दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात् ।। दुष्टाञ्छब्दान् मा प्रयुक्ष्महीत्यध्येयं व्याकरणम् ।।**

अत्रेदं तत्त्वम् — स्वरतो वर्णतो वा मिथ्याप्रयुक्तः शब्दोऽभीष्टमर्थः न कथयति । तथा च स शब्दः वज्ररूपो भूत्वा यजमानमेव हन्ति ।एवं हि श्रूयते तैत्तिरीयब्राह्मणे यत् —एकदा त्वष्टुः पुत्रं विश्वरुमिन्द्रो जघान , तदनन्तरं त्वष्टा इन्द्रसंहारायैकमभिचारयागं प्रास्तौत् । तत्र यागे सः "स्वाहेन्द्रशत्रुर्वर्द्धस्व " इति मन्त्रमुदाजहार । अत्र "शत्रु " शब्दः क्रियावाची , न तु संज्ञावाची । तस्मादयमर्थः — शत्रु —शमयिता , शातयिता , संहारको नेत्यर्थः । अत्राऽयं सारांशो यत् त्वष्टुरिदमभिप्रेतमासीत् यद् हे अग्ने!त्वमेवं वर्द्धस्व यत्तव ज्वालासमुत्पन्नो वृत्रासुरः इन्द्रशत्रुर्भवेद् अर्थात् इन्द्रस्य नाशको जायत । अयमर्थस्तदैव सम्भवति , यदा खलु "इन्द्रशत्रु "शब्दः समासान्तो भवेत् ।

३. **यदधीतम्** —अतः परम "यदधीतम्"इति तृतीयमानुषङ्गिकं प्रयोजनं व्याचक्षाणेनोक्तं भगवता

पतञ्जलिना –"**यदधीतमविज्ञातं निगदेनैव शब्द्यते ।अनग्नाविव शुष्कैधो न तज्जवलति कर्हचित्।।तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम् ।।"**

**४. यस्तु प्रयुङ्क्ते-**

अतः परम् " यस्तु प्रयुङ्क्ते "इति चतुर्थं गौणप्रयोजनमुक्तं भगवता पतञ्जलिना –

**यस्तु प्रयुक्ते कुशलो विशेषे शब्दान्यथावद् व्यवहारकाले ।**
**सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ।।**

कः?वाग्योगविदेव ।कुत एतत् ? यो हि शब्दाञ्जनात्यपशब्दानप्यसौ जानाति ।यथैव हि शब्दज्ञाने धर्मः , एवमपशब्दज्ञानेऽप्यधर्मः । अथवा भूयानधर्मः प्राप्नोति । भूयांसोऽपशब्दाः ,अल्पीयांसः शब्दाः इति ।एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः । तद्यथा "गौरित्यस्य शब्दस्य गावी गोणी गोपोतलिकेत्येवमादयोऽपभ्रंशाः ।अथ योऽवाग्योगावित् ।अज्ञानं तस्य शरणम् । विषमुपन्यासः ।

नात्यन्तायाऽज्ञानं भवितुमर्हति ।यो ह्यजनान् वै ब्राह्मणं हन्यात् सुरां वा पिबेत् सोऽपि मन्ये पतितः स्यात् ।एवं तर्हि ।सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् ,विज्ञानं तस्य शरणम् । क्व पुनरिदं पठितं ?भ्राजा नाम श्लोका अपि प्रमाणम् , अयमपि श्लोकः प्रमाणं भवितुमर्हति –

**"यदुदुम्बरर्णानां घटोनां मण्डलं महत् ।**
**पीतं न गमयेत् स्वर्गं किं तत् क्रतुगतं नयेत् ।।**
**प्रमत्तगीत एष तत्र भवतः ।यस्त्वप्रमत्तगीतस्तत् प्रमाणम् ।।"**

**५. अविद्वांसः –**अतः परं "अविद्वांस"इति पञ्चममानुषङ्गिकं प्रयोजनम्

**"अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः ।**
**कामं तेषु तु विप्रोष्य स्त्रीष्विवाऽयमहं वदेत् ।।**
**अभिवादे स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम् ।।"**

अत्रेदं तत्त्वम्– प्रवासादेत्य शिष्येण गुरोः समक्षं नामगोत्रोच्चारणपूर्वकं प्रणामो विधेयः ।अभिवादानन्तरप्रयोज्ये वचने गुरूणा प्लुतो विधेयः । यः प्लुतं कर्तुं न जानाति , सः स्त्रीवद् वक्तव्योऽयमहमिति ।अभिवादनविषये मनुनोक्तम् –

**अभिवादात्परं विप्रो ज्यायां समभिवादयन् ।**
**असौ नामाऽहमस्मीति स्वं नाम परिकीर्तयेत् ।।**

**नामधेयस्य ये केचिदभिवादं न जानते ।**
**तान्प्राज्ञोऽयमहं ब्रूयात् स्त्रियः सर्वास्तथैव च ।।**[1]

६. **विभक्तिं कुर्वन्ति –**अतः परं विभक्तिं कुर्वन्ति इत्याख्यं षष्ठमानुषङ्गिकं प्रयोजनम् –

**याज्ञिकाः पठन्ति – प्रयाजाः सविभिक्तिकाः कार्या इति न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम् ।।**

अत्रेदं तत्त्वं – कर्मविच्छेदे सति पुनराधेयेष्टिविधीयते । तस्या एवेष्टे इति कर्तव्यताविषये वचनमिदं पठितम् । प्रयाजाः पञ्चभवन्ति , ते तु सविभक्तिका एव पठिताः ।किन्तु तत्र विभक्त प्रत्ययः , तत्र प्रकृतिराक्षिप्यते । यतो हि **त्वमग्ने प्रयाजानां पुरस्तात्त्वं पश्चात्**इति वेदवाक्यमस्ति , अतः **अग्नि** शब्दः एवाऽत्र प्रकृतित्वेन गृह्यते , स च प्रथमा सप्तमी-तृतीया-द्धितीया प्रथृतिषु चतसृषु विभक्तिषु पठ्यते । उदाहरणं यथा **–ये यजामहे भूर्भुवः सुवः समिधोग्नेऽग्ने आज्यस्य व्येतु वौषट् ,।**

७. **यो वा इमाम् –**अतः **परं यो वा इमाम्** इति सप्तमं आनुषङ्गिकं प्रयोजनमुक्तम् **–यो वा इमाम् पदशः स्वरशोऽक्षरशच वाचं विदधाति स अर्त्विजीनो भवति । आर्त्विजीनाः वयं स्यामेत्ययधेययं व्याकरणम् ।**

अत्रेदं तत्त्वं – यो वै निश्चयेन इमां सन्निहितामपरोक्षां वाचं वेदरूपां वाणीं पदं पदं ,स्वरं स्वरं ,अक्षरं अक्षरं विदधाति संस्करोति स आर्त्विजीनो भवति ।अर्थात् ऋत्विक् कर्मारहो भवतीति विज्ञेयम्।

८. **चत्वारि-**

व्याकरणाध्ययनमन्तरेण पदपदार्थज्ञानं न भवितुमर्हति । अतोऽष्टमं **चत्वारि** इत्याख्यमानुष्ङ्गिकं प्रयोजनं निरुपयितुं निम्नवेदमन्त्रं व्याचक्षाणेन भगवता पतञ्जलिना व्याकरणाध्ययनस्य शब्दरूपेण देवेनास्माकं साम्यरुपप्रयोजनसहकारेणसमस्तपदानां वर्गीकरणं बोधितम् –

**चत्वारि श्रृङ्गा त्रयो अस्य पादा , द्वे शीर्षे सप्तहस्तासो अस्य ।**
**त्रिधा बद्धो वृषभो रोरवीति , महो देवो मर्त्यां आ विवेश ।। इति**

चत्वारि श्रृङ्गाणि चत्वारि पदजातानि

[1]मनुस्मृति २.१२२-२३ ।

नामाख्यातोपसर्गनिपाताश्च । त्रयो अस्य पादाः त्रयः कालाः भूतभविष्यद्वर्तमानाः । द्वे शीर्षे द्वौ शब्दात्मनौ नित्यः कार्यश्च । सप्त हस्तासौ अस्य सप्त विभक्तयः । त्रिधा बद्धः त्रिषु स्थानेषु बद्धः उरसि शिरसीति । वृषभो वर्षणात् । रोरवीति शब्दं करोति । कुतः एतत् ? रौतिः शब्दकर्मा । महो देवो मर्त्यां आविवेशेति । महान् देवः शब्दः । मर्त्या मरण-धर्माणो मनुष्यास्तानाविवेश। महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम् ।।

"अपर आह – चत्वारि वाक्परिमिता पदानि चत्वारि पदजातानि नामाख्यतोपसर्गनिपाताश्च । तानि विदुब्राह्मणा ये मनीषिणः ।मनसः ईषिणो मनीषिणः । गुहा त्रीणी निहिता नेङ्गयन्ति ।गुहायां त्रीणि नेहिता नेङ्गयन्ति न चेष्टन्ते न निमिषन्तीत्यर्थः ।तुरीयं वा एतत् वाचो यन्मनुष्येषु वर्तते चतुर्थमित्यर्थः।।"

९. **उत त्वः**–पुनश्च उत त्व इति वाग्विस्ताररूपं नवमं आनुषङ्गिकेव्याकरणाध्ययनप्रयोजनं प्रतिपादयतोत्कम् भगवता पतञ्जलिनाय

**उत त्वः पश्यन्न ददर्श वाचमुत त्वः श्रृणोत्येनाम् ।**
**उतो त्वस्मैतन्वं विसस्रे जायेवपत्ये उषति सुवासाः ।।**

अपि खल्वेकः पश्यन्नपि न पश्यति वाचम् । अपि खल्वेकः श्रृण्वन्नपि न श्रृणोत्येना इति अविद्वांसमाहार्धम् । उतो त्वस्मै तन्वं विसस्रे तनुं विवृणुते । जायेव पत्ये उशती सुवासाः तद्यथा जाया पत्ये कामयमाना सुवासाः स्वामात्मानं विवृणुते एवं वाग् वाग्विदे स्वात्मानं विवृणुते । वाङ्नो विवृणुयादात्मानमित्यध्येयं व्याकरणम् ।

**१०. सक्तुमिव**-ततोऽसाधुशब्देभ्यो विविच्य साधुशब्दज्ञानरूपं दशमानुषङ्गिक प्रयोजनम् –

**सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।**
**अत्रा सखायः सख्यानि जनाते भद्रैषालक्ष्मीर्निहिताधि वाचि ।।**

सक्तुः सचतेर्दुर्धावो भवति । कसतेर्वा विपरीताद् विकसितो धीरा ध्यानवन्तः । मनसा प्रज्ञानेन । वाचमक्रत वाचमकृषत ।

अत्र सखाया सन्तः सख्यानि जनाते । क्व ? य एष दुर्गो मार्गः एकगम्यो वाग्विषयः । के पुनस्ते ? वैयाकरणाः । कुत एतत् ?भद्रैषां लक्ष्मीर्लक्षणाद् भासनात् परिवृढा भवति ।

**११. सारस्वतीम् –**ततः "सारस्वतीम् " इत्याख्यमेकादशमानुषङ्गिकं प्रयोजनमाह –सारस्वतीम् – याज्ञिकाः पठन्ति –आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्। प्रायश्चित्तीया मा भूमेत्यध्येयं व्याकरणम् ।

१२. **दशम्याम्पुत्रस्य** —अतः परं नामकरणेषु विहितनामस्वरुपज्ञानरुपं द्वादशमानुषङ्गिकं प्रयोजनम् —याज्ञिकाः पठन्ति — दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद् घोषवदाद्यन्तःस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितम् । तद्धि प्रतिष्ठितमं भवति । द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितमिति । न चाऽन्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम् ।।

१३. **सुदेवो असि** —ततश्चाऽन्तिमं आनुषङ्गिकं प्रयोजनमाह-

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः सप्त विभक्तयः । अनुक्षरन्ति काकुदम् । सूर्म्यं सुषिरामिव । तद्यथा शोभनामूर्मिं सुषिरामग्निरन्तः प्रविश्य दहति एवं ते सप्त सिन्धवः सप्त विभक्तयस्ताल्वनुक्षरन्ति । तेनाऽसि सत्यदेवः । सत्यदेवाः स्यामेत्यध्येयं व्याकरणम् ।

**निष्कर्षः**—व्याकरणाध्ययनस्य गौणमुख्यप्रयोजनानि ज्ञात्वा एव शब्दाऽपशब्दयोः साध्वसाधु शब्दयोः ज्ञानं भवितुं शक्यते । अतः साधु —असाधु शब्दार्थबोधनार्थं तथा भाषायाः सम्यग्ज्ञानार्थं व्याकरणस्याध्ययनमवश्यमेव करणीयम् ।

**सन्दर्भ-ग्रन्थाः**

1. पाणिनीय शिक्षा ।
2. पतञ्जलिमहाभाष्यम् ।
3. वाक्यपदीयम् ।
4. पाणिनीय अष्टाध्यायी ।

***

# नव्यन्यायशास्त्रीयानुगमशैल्या अनुमानाऽलङ्कारमीमांसा

डॉ. उदयनाथ झा 'अशोक'

संस्कृतवाङ्मयेऽस्मिन् विराजमानान्निखिलनिगमागमविषयान् सारल्येनान्यूनाऽऽनतिरिक्ततयोपवर्णयितुं सर्वेषामेव विद्वन्मूर्धन्यानामवच्छेदकावच्छेदेन साहित्यज्ञानमेव मौलिकं भवतीति विदन्त्येव विज्ञाः। साहित्यमिदं संस्कृतवाङ्मये काव्यनाटकच्छन्दोऽलङ्कारभेदेन प्रायश्चतुर्विधं भवति। तत्रापि गद्यपद्यचम्पूभेदेन काव्यसाहित्यं पुनस्त्रिविधं वर्तते। अलङ्कार साहित्यन्तावल्लक्षणसाहित्यमिति नाम्ना तत्राऽभिधीयते। लक्षणसाहित्ये तावदुपमाद्यलङ्काराणां तथा ध्वनिरीतिवक्रोक्तिरसादि-सम्प्रदायसिद्धान्तानां विवेचनं तत्तद्ग्रन्थप्रणेतृभिस्साङ्गोपाङ्ग प्रादर्शि। एतादृशलक्षणसाहित्यमधिकृत्यैव महिमभट्टानन्दवर्धनाऽभिनवगुप्ताप्पयदीक्षितजगन्नाथादिभिः पुम्भावसरस्वतीभिर्विद्वन्मूर्धन्यैः व्यक्तिविवेकध्वन्यालोकलोचनचित्रमीमांसारसगङ्गाधरादयस्सर्वेऽपि लक्षणग्रन्थाः नव्यन्यायशास्त्रीयाऽनुगमपद्धत्या एव व्यरचिषत। इदानीन्तनेऽपि काले कृष्णमाधवझाविरचितेऽलङ्कारविद्योतनाभिधे ग्रन्थे इयमेव सरणिरनुपालितेति। न केवलं तावत्। एतेषु लक्षणग्रन्थेषु तत्तद्ग्रन्थकारैस्तत्तद् ग्रन्थस्थविषयाणां प्रतिपादनमपि नव्यन्यायशैल्यैव व्यधायि। जयदेवप्रणीते चन्द्रालोके ग्रन्थकारेणोपमोत्प्रेक्षानन्वयानुमानादीनामलङ्काराणां लक्षणानि सामान्यतः प्रत्यपादिषत। विद्यानाथप्रणीते प्रतापरुद्रीयेऽपि शब्दालङ्कारार्थालङ्कारप्रकरणयोः प्रतापरुद्राख्यं धीरोदात्तमहाराजमुपवर्ण्य तत्सन्दर्भे उपमोत्प्रेक्षारूपककाव्यलिङ्गार्थान्तरन्यासानुमानाद्यलङ्काराणां लक्षणानि सोदाहरणं सरलया शैल्या तेन प्रादर्शिषत।

गच्छति काले चन्द्रालोकप्रतापरुद्रीयादिग्रन्थेष्वभिवर्णितानामुपमाद्यलङ्काराणां बहुदोषग्रस्तस्त्वात्तानि प्रत्याख्याय व्यक्तिविवेकचित्रमीमांसारसगङ्गाधरादिग्रन्थेषु तत्तद्ग्रन्थकारैरुपमाद्यलङ्काराणां निर्दुष्टलक्षणानि नव्यन्यायशास्त्रीयानुगमशैल्या साङ्गोपाङ्ग - मुपवर्णितानि। तद्यथा– एकोनविंशतिख्रिष्टाब्दे लब्धजन्मानो नैकशास्त्रनदीष्णाः महामहिमोपाध्यायाः कृष्णमाधवझाशर्माणः स्वप्रणीतेऽलङ्कारविद्योतनाख्ये ग्रन्थेऽलङ्कार - लक्षणमुपमाद्यलङ्कारेषु तत्समन्वयञ्च नव्यन्यायशास्त्रीयानुगमशैल्यैव प्रणिन्युः। अयमत्र तेषामाशयः यत्किन्नामालङ्कारत्वमित्याशक्य तैर्ग्रन्थप्रणेतृभिः रसादिव्यंग्यभिन्नत्वे सति समवायसम्बन्धावच्छिन्नचमत्कृतित्वावच्छिन्नजन्यतावच्छेदकसम्बन्धावच्छिन्नजन्यतावच्छेदकावच्छिन्नजन्यतानिरूपितसमवायसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नज्ञाननिष्ठजनकतावच्छेदक-

सम्बन्धावच्छिन्नजनकतावच्छेदकावच्छिन्न– जनकतानिरूपितविषयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकताश्रयत्वमलङ्कारत्वमित्यलङ्कारलक्षणम्। प्रकृतस्या लङ्कारलक्षणस्योपमालङ्कारे इत्थं लक्षणसमन्वयः– अत्रोपमालङ्कारे उपमानोपमेयसादृश्यसाधारणवाचकेवशब्दाख्याश्चत्वारो विषया राजन्ते। अत्रोपमालङ्कारे रसरीतिध्वनिवक्रोक्त्यादिसम्प्रदायानां, तथा गुणदोषादीनाञ्चालङ्कारत्ववारणायात्र लक्षणे रसादिव्यंग्यभिन्नत्वे सतीति विशेषणमुपात्तम्। अस्योपमालङ्कारस्य हंसीव कृष्ण ते कीर्तिस्स्वर्गङ्गामवगाहते इत्युदाहरणम्। उक्तञ्च चन्द्रालोके -

**'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः।**
**हंसीव कृष्ण ते कीर्तिस्स्वर्गङ्गामवगाहते।।'** इति।

पद्येऽत्र हंसः उपमा, कीर्तिरुपमेयमदार्थः, सादृश्यं तावद्धवलिमा, इवेति वाचकश्शब्दः। अत्रोपमालक्षणे रसव्यंग्यरीतिध्वनिवक्रोक्त्यादिसम्प्रदायानामभावात् समवायसम्बन्धावच्छिन्नचमत्कृतित्वावच्छिन्नचमत्कारनिष्ठजन्यतानिरूपितजनकतावत्त्वस्योपमानोपमेयभावादिविषयत्वावच्छिन्नावच्छेदकतानिरूपितावच्छेदकत्वस्य च सत्त्वादस्य उपमालक्षणस्य समन्वयस्सुसङ्गच्छते। स्पष्टञ्चेदमलङ्कारविद्योतने।

एतावता प्रबन्धेनालङ्कारशास्त्रे रसगङ्गाधरादिग्रन्थचयसहितलक्षणग्रन्थानाम्महत्त्वं, तद्ग्रन्थेषु नव्यन्यायशास्त्रीयानुगमशैल्याऽलङ्कारलक्षणं, तथोपमाद्यलङ्कारेषु तत्समन्वयप्रकारश्च स्थालीपुलाकन्यायेन दिङ्मात्रमत्र मयान्यूनातिरिक्ततया प्रास्तावि। तत्क्रमे रसगङ्गाधरस्थमनुमानालङ्कारसिद्धान्तमहं नव्यन्यायशास्त्रीयानुगमशैल्या यथामति साङ्गोपाङ्गमत्र निबध्नामि। तथा हि – रसगङ्गाधरस्थ द्वितीयानने पण्डितराजेनाऽनुमाना -लङ्कारसिद्धान्तो नव्यन्यायशैल्येत्थमुपवर्णितः- 'अनुमानालङ्कारनिरूपणारम्भं प्रतिजानीते-अनुमितिकरणमनुमानम्। अनुमितिश्चानुमितित्ववती।अनुमितित्वञ्चानुमिनोमीति मानससाक्षात्कारसाक्षिको जातिविशेषः। व्याप्तिप्रकारकपक्षधर्मतानिश्चयजन्यज्ञानं वानुमितिः। तस्याश्च करणं व्याप्तिप्रकारकलिङ्गनिश्चय इत्येके। व्याप्यत्वेन निश्चीयमानं लिङ्गमित्यपरे। इदञ्च साधारणमनुमानम्। अस्य च कविप्रतिभोल्लिखितत्वेन चमत्कारित्वे काव्यालङ्कारता' इति।

उक्तानुमानालङ्कारघटकानुमाननिष्ठानुमित्युत्पत्तौ प्रथमं व्याप्तिज्ञानं, ततः पक्षधर्मताज्ञानं, ततः परामर्शस्ततोऽनुमितिश्च क्रमेण जायन्ते। तत्र साध्यव्याप्यो हेतुरिति व्याप्तिज्ञानं भवति। ततो हेतुमान् पक्ष इति पक्षधर्मताज्ञानं भवति। साध्यव्याप्यहेतुमान् पक्षः इति परामर्शज्ञानम्। पक्षस्साध्यवान्निति अनुमितिरुत्पद्यते। तत्र पक्षस्साध्यवान् इत्याकारकानुमित्युत्पत्तौ

परामर्शपक्षधर्मताव्याप्तिज्ञानानि व्युत्क्रमेण कारणानि भवन्ति। यथा पर्वतो वह्निमान् धूमाद्यथा महानसः इत्यादौ प्रथमतो ‘वह्निव्याप्यो धूमः’ इति व्याप्तिज्ञानं, ततो ‘धूमवान् पर्वतः’ इत्याकारकपक्षधर्मताज्ञानं, ततो ‘वह्निव्याप्यधूमवानयं पर्वतः’ इति परामर्शज्ञानं, ततः ‘पर्वतो वह्निमान्’ इत्याकारिकानुमितिश्चोत्पद्यते। अत्रापि पर्वतो वह्निमान्धूमात् इत्याकारकानुमितिरुपकार्यं प्रति पूर्वोक्तपरामर्शपक्षधर्मताव्याप्तिज्ञानानि व्युत्क्रमेण कारणानि भवन्ति। रसगङ्गाधरस्थानु मानालङ्कारघटकानुमानलक्षणस्य ‘पर्वतो वह्निमान्धूमात्’ इत्यत्र लक्षणसमन्वयश्चेत्थम्- अनुमितेः करणमनुमितिकरणम्। अनुमितेरित्यत्रानुमितिपदोत्तर-निष्ठषष्ठ्याः जनकत्वमर्थः। जनकत्वञ्च जन्यतानिरूपितजनकताश्रयत्वम्। अनुमितेर्जन्यतायां निष्ठत्वसम्बन्धेनान्वयः। अनुमितिनिष्ठजन्यतायाः निरूपितत्वसम्बन्धेन जनकतायामन्वयः। तादृशजनकतायाः आश्रयत्वसम्बन्धेन जनकताश्रयेऽन्वयः। तथा चानुमितिनिष्ठजन्यता-निरुपितजनकताश्रयत्वमित्यर्थो लभ्यते। करणत्वञ्चाऽसाधारणकारणत्वम्। तत्रादौ कारणं द्विविधम्— साधारणमसाधारणञ्चेति। कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं साधारणकारणस्य लक्षणम्। कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्व-मसाधारणकारणस्य लक्षणम्। तथा चात्र अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणता-श्रयत्वमनुमानलक्षणं फलति। प्रकृतानुमानलक्षणस्य ‘पर्वतो वह्निमान्धूमात्’ इत्यत्रेत्थं लक्षणसमन्वयः - अनुमितिः पर्वतो वह्निमान् इत्याकारिकानुमितिः। तादृशानुमितित्वावच्छिन्ना या कार्यतेत्युक्ते ‘पर्वतो वह्निमान्’ इत्याकारकानुमितिनिष्ठा कार्यता। तादृशानुमितिनिष्ठकार्यतानिरूपिता या कारणता। पर्वतो वह्निमान्धूमाद्यथा महानसः इत्याकारकानुमाननिष्ठा कारणता। तदाश्रयत्वं ‘पर्वतो वह्निमान्धूमाद्यथा महानसः’ इत्याकारकानुमाने वर्तत इति। स्पष्टञ्चैतद् अन्नम्भट्टगोवर्धन-पण्डिताभ्यामनुमानपरिच्छेदे तर्कसंग्रहन्यायबोधनीग्रन्थयोः।

एतावता प्रबन्धेन रसगङ्गाधरस्थानुमानालङ्कारलक्षणं तत्समन्वयञ्च नव्यन्याय-शास्त्रीयानुगमशैल्या पर्यशोधयम्। अत्रानुमानालङ्कारघटकव्याप्तिस्वरुपज्ञान-मन्तरानुमानलक्षणसिद्धान्तस्य लेशतोऽपि ज्ञातुमशक्यत्वेन प्रकृतानुमानलक्षणघटक-व्याप्तिस्वरुपस्याप्यवश्यं ज्ञातव्यत्वेन व्याप्तिस्वरुपप्रबोधकं पूर्वपक्षव्याप्तिसिद्धान्तव्याप्ति-लक्षणद्वयमप्यन्यूनानतिरिक्ततया यथाशक्ति साङ्गोपाङ्गमत्र निबध्नामि। तथा हि— ‘अनुमानमप्रमाणं प्रमाणान्तराभावादि त्याकारकचार्वाकमतखण्डनायानुमानं प्रमाणम्, प्रमिति-

ISSN-2321-6948

करणतावच्छेदकधमत्त्वात्' इत्यनुमानेन प्रत्यक्षादीनामिवानुमानस्यापि प्रामाण्यं साधितमाचार्य-गङ्गेशोपाध्यायेन। तत्प्रसङ्गे अनुमितिहेतुभूतव्याप्तिपदार्थज्ञानस्याऽप्यत्यावश्यकत्वेन व्याप्तिपदार्थनिरूपणाङ्गभूततया पूर्वपक्षसिद्धान्तभेदेन व्याप्तिद्वयं तेन प्रास्तावि। तत्रादौ पूर्वपक्षव्याप्तिलक्षणप्रणयनावसरे गङ्गेशेन पूर्वपक्षव्याप्तेः पञ्च लक्षणानि जाग्रन्थि। इदं हि तत्रत्यः मणिग्रन्थः - 'नन्वनुमितिहेतुभूतव्याप्तिज्ञाने का व्याप्तिः? न तावदव्यभिचरितत्वम्। तद्धि न साध्याभाववद्वृत्तित्वमथवा न साध्यविद्भिन्नसाध्याभाववद्वृत्तित्वमथवा न साध्य - वत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यमथवा सकलसाध्याभाववन्निष्ठाभाव - प्रतियोगित्वमथवा साध्यवदन्यावृत्तित्वं वा यन्न भवति तदेवाव्यभिचरितत्वरुपा व्याप्तिः' इति। अत्र पञ्चानां पूर्वपक्षव्याप्तिलक्षणनिरूपणे तत्समन्वये चाऽत्र विस्तरभयात्प्रथमपूर्वपक्ष व्याप्तिलक्षणमेवाऽन्यूनातिरिक्ततया निबध्नामि। तथा हि मणिग्रन्थे - साध्याभाववदवृत्तित्व मिति प्रथमं पूर्वपक्षव्याप्तिलक्षणम्। 'पर्वतो वह्निमान्धूमात्' इत्यत्राऽस्य लक्षणस्येत्थं लक्षणसमन्वयः - प्रकृतानुमाने पक्षः पर्वतः, साध्यो वह्निः, धूमश्च हेतुः। अत्र साध्यो वह्निः, क्रमशस्साध्याभावो वह्न्यभावः। तदधिकरणं जलह्रदादिः। तद्वृत्तित्वं मीनशैवालादावृत्तित्वं धूमे वर्तत इति।

धूमवान् वर्गोरित्यत्र साध्यो धूमः। तदभावो धूमाभावस्तदधिकरणमग्नौ तप्तमयः पिण्डम्। तद्वृत्तित्वमेव वह्नौ वर्तते। वृत्तित्वाभावस्य वह्नौ नास्ति। एवञ्च प्रकृतानुमानस्थले धूमसमानाधिकरणात्यन्ताभावनिष्ठाधेयतानिरुपिताधिकरणताश्रयवृत्तित्वस्यैव वह्नौ सत्त्वेन, वृत्तित्वाभावस्य चाभावेनैतादृशपूर्वपक्षव्याप्तिप्रथमलक्षणस्य धूमवान् वह्निरित्यत्र नातिव्याप्तिः। साध्याभाववदवृत्तित्वमित्याकारकलक्षणस्य साध्याभावाधिकरणनिरुपितवृत्तित्वाभाव इति फलितोऽर्थः। तल्लक्षणे साध्याभाव इत्यस्य साध्यस्याभावस्साध्याभाव इति षष्ठीतत्पुरुषः। तत्र साध्यपदस्य साध्यमर्थः। तत्पदोत्तरषष्ठ्याः प्रतियोगित्वमर्थः। साध्यस्य प्रतियोगितया न्निष्ठत्व-सम्बन्धेनान्वयः। तादृशप्रतियोगितायाः निरुपकत्वसम्बन्धेनात्यन्ताभावेऽन्वयः। तादृशात्यन्ताभावस्य निष्ठत्वसम्बन्धेनाधेयतायामन्वयः। तादृशात्यन्ताभावनिष्ठाधेयतायाः निरुपितत्वसम्बन्धेनाधिकरणतायामन्वयः। तादृशाधिकरणतायाः आश्रयत्वसम्बन्धेन वृत्तित्वेऽन्वयः। तादृशवृत्तित्वस्य वृत्तित्वावच्छिन्नत्वसम्बन्धेन वृत्तित्वनिष्ठप्रतियोगितायामन्वयः। तादृशवृत्तित्वावच्छिन्नवृत्तित्वनिष्ठप्रतियोगितायाः निरुपकत्वसम्बन्धेनात्यन्ताभावेऽन्वयः। तथा च साध्याभाववदवृत्तित्वमित्याकारकवाक्यात् साध्यनिष्ठप्रतियोगितानिरुपकात्यन्ताभावनिष्ठा-धेयतानिरुपिताधिकरणताश्रयवृत्तिनिष्ठत्वसम्बन्धावच्छिन्नवृत्तित्वावच्छिन्नवृत्तित्वनिष्ठ-

प्रतियोगितानिरूपकात्यन्ताभाव इति प्रथमपूर्वपक्षव्याप्तिलक्षणं फलति। पूर्वोक्तलक्षणे वृत्तित्वाभाव इति पदस्य वृत्तित्वनिष्ठप्रतियोगितानिरूपकोऽभाव इत्यर्थः। वृत्तित्वसामान्याभावस्य वृत्तित्वनिष्ठप्रतियोगितायामग्रहणे धूमवान् वह्नेरित्यत्र धूमाभावाधिकरणनिरूपित-जलह्रदादिनिरूपितवृत्तित्वस्य तथा तादृशधमसमानाधिकरणात्यन्ताभावाधिकरणनिरूपितवृत्तित्व जलत्वैतदुभयधर्मावच्छिन्नप्रतियोगिताकाभावस्य वह्नावपि सत्त्वेनाव्याप्तिः प्रसज्यते। अतो 'धूमवान् वह्निः' इत्यत्र पूर्वोक्तप्रकारद्वयेन प्रसक्ताव्याप्तिवारणाय पूर्वोक्तपूर्वपक्षव्याप्तिलक्षणघटकवृत्तित्वनिष्ठप्रतियोगितायां वृत्तित्वसामान्याभावो निवेशनीयः। तन्निवेशे तु धूमवान् वर्गोरित्यत्र धूमाभाववज्जलदादिनिरूपितवृत्तित्वाभावमादाय, धूमसमानाधिकरणात्यन्ताभावववृत्तित्वजलत्वैतदुभयधर्मावच्छिन्नप्रतियोगिताकाभावमादाय वा प्रसक्ताव्याप्तिर्वार्यते। यतो हि धूमवान् वर्तरित्यत्र धूमसमानाधिकरणात्यन्ताभावनिष्ठाधेयता-निरुपिताधिकरणतावनिरूपितवृत्तित्वस्यैव वह्नौ सत्त्वेन निरुक्तवृत्तित्वसामान्याभावस्य चासत्त्वात्पूर्वोक्तस्थले नाव्याप्तिः। एवञ्च धूमवान् वर्गोरित्यत्र पूर्वोक्तप्रकारद्वयेन प्रसक्ताव्याप्तिवारणाय वृत्तित्वनिष्ठप्रतियोगिता यां वृत्तित्वसामान्याभाव निवेशात्साध्यनिष्ठप्रतियोगिता निरुपकात्यन्ताभावनिष्ठाधेयतानिरूपिताधिकरणताश्रय-वृत्तित्वेतरधर्मावच्छिन्नवृत्तितात्वावच्छिन्नप्रतियोगितानिरूपकात्यन्ताभावो व्याप्तिरिति प्रथमपूर्वपक्षव्याप्तिलक्षणं फलति।

नन्वेवमेतल्लक्षणस्यापि वह्निसामानाधिकरणात्यन्ताभावाधिकरणवृत्तिसमवाय-सम्बन्धावच्छिन्नधूमावयवनिरूपितवृत्तित्वमादाय तथा कालिकसम्बन्धावच्छिन्नप्रतियोगिता-कवह्न्यभावाधिकरणनिरुपितवृत्तित्वमादायपर्वतोवह्निमान् धूमादित्यत्र प्रसक्ताव्याप्तिवारणाय पूर्वोक्तपूर्वपक्षव्याप्तिलक्षणघटकसाध्याभावाधिकरणनिरुपितवृत्तितायां हेतुतावच्छेदकसम्बन्धा-वच्छिन्नत्वमिति विशेषणं निवेशनीयम्। तन्निवेशे तु साध्याभावाधिकरणनिरुपित-हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितात्वावच्छिन्नप्रतियोगितानिरूपकवृत्तित्वसामान्याभावो व्याप्तिरिति पूर्वपक्षव्याप्तिलक्षणं फलति। एतल्लक्षणस्वीकारे तु संयोगसम्बन्धावच्छिन्नधूमावयवनिरुपितवृत्तित्वस्यैव तथा जल –ह्रदादिनिरुपितसंयोगसम्बन्धा-वच्छिन्नवृत्तितात्वावच्छिन्ना भावीयप्रतियोगितावन्निरुपितवृत्तित्वस्यैव च धूमे सत्त्वेन, वृत्तित्वसामान्याभावस्य चाभावेन 'पर्वतो वह्निमान् धूमात्' इत्यत्र पूर्वोक्तप्रकारद्वयप्राप्ताव्याप्तिर्वार्यते।

नन्वेवमपि पूर्वोक्तप्रथमपूर्वपक्षव्याप्तिलक्षणस्य 'पर्वतो वह्निमान्धूमात्' इत्यत्र पुनरव्याप्तिः प्रसज्यते। तथाहि—

अत्र लक्षणे साध्याभावपदेन केवलसाध्यनिष्ठप्रतियोगितानिरूपकसाध्याभावस्य ग्रहणे तादृशसाध्याभावपदेन पर्वते समवायेन वह्निर्नास्तीत्याकारकप्रतीतिसिद्धसमवाय-सम्बन्धावच्छिन्नपर्वतीयवह्न्यभावस्य तथा संयोगसम्बन्धावच्छिन्नतत्तद्वह्नित्वघटत्वैत-दुभयधर्मावच्छिन्नप्रतियोगिताक तत्तद्वह्निघटोभयाभावस्य च ग्रहीतुं शक्यत्वेन तादृशवह्निघटोभया-भावाधिकरणनिरूपितवृत्तित्वस्यैव धूमे सत्त्वेन वृत्तित्वाभावस्य चासत्त्वेनैतादृशपूर्व-पक्षीयव्याप्तिलक्षणस्य पुनः 'पर्वते वह्निमान्धूमात्' इत्यत्राव्याप्तिस्स्यात्।

अतस्तद्वारणाय पूर्वोक्तपूर्वपक्षव्याप्तिलक्षणघटकसाध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमिति विशेषणं निवेशनीयम्। दत्ते च तादृग्विशेषणे साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठप्रतियोगितानिरूपकात्यन्ताभावनिष्ठाधेयता-निरूपिताधिकरणतावन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरण-तावन्निरूपितवृत्तित्वावच्छिन्नप्रतियोगितानिरूपकात्यन्ताभावो व्याप्तिरिति तल्लक्षणं फलति। एतल्लक्षणस्वीकारे पर्वतो वह्निमान् धूमादित्यत्र साध्याभावपदेन समवायसम्बन्धा-वच्छिन्नवह्नित्वावच्छिन्नवह्निनिष्ठप्रतियोगितानिरूपकवह्न्यभावस्य तथा संयोगसम्बन्धा -वच्छिन्न तत्तद्वह्नित्वघटत्वोभयधर्मावच्छिन्नप्रतियोगितानिरूपकतत्तद्वह्निघटोभयाभावस्य चाग्रहणात् संयोग-सम्बन्धावच्छिन्नतत्तद्वह्नित्वघटत्वैतदुभयधर्मावच्छिन्नप्रतियोगिताक—तत्तद्वह्निघटोभयाभावस्य चाग्रहणात् संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नवह्नित्वेन वह्निर्नास्ति इत्याकारकवह्न्यभावस्यैव ग्रहणाच्च तादृशाभावाधि - करणनिरूपितवृत्तित्वस्य जलह्रदादौ तादृश वन्यभावाधिकरणनिरूपितवृत्तित्वाभावस्य च धूमसत्त्वात् पूर्वोक्तपूर्वपक्षव्याप्तिलक्षणस्य पर्वतो वह्निमान् धूमादित्यत्र पूर्वोक्तप्रकारद्वयेन प्रसक्ताव्याप्तिर्वार्यते।।

नन्वेवमेतादृशपरिष्कृतपूर्वपक्षव्याप्तिलक्षणस्यापि तत्तद्वन्यभावमादाय पर्वतो वह्निमान्धूमादित्यत्र पुनरव्याप्तिः प्रसज्यते। तथाहि - साध्यं वह्निः, साध्याभाव इत्युक्ते पर्वते महानसीयवह्निर्नास्तीत्याकारकप्रतीतिसिद्धो महानसीयवन्यभावः स्वीक्रियते। तादृशमहानसीयवन्यभावाधिकरणनिरूपितवृत्तित्वस्यैव पर्वते सत्त्वेन वृत्तित्वसामान्याभावस्य चासत्त्वेनोक्तपूर्व पक्षव्याप्तिलक्षणस्य पर्वतो वह्निमान्धूमादित्यत्राव्याप्तिस्स्यात्।

अतस्तद्वारणाय पूर्वोक्तप्रथमपूर्वपक्षव्याप्तिलक्षणघटकसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वमिति विशेषणं निवेशनीयम्। दत्ते च तादृग्विशेषणे पूर्वोक्तपूर्वपक्षव्याप्तिघटकसाध्यता वच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रतियोगिताकसाध्याभावपदेन पर्वतो वह्निमान्धूमादित्यत्र पर्वते संयोगसम्बन्धेन वह्निर्नास्तीत्याकारकप्रतीतिसिद्धसंयोगसम्बन्धावच्छिन्नपर्वतीयवन्यभावस्यैव ग्रहणीयत्वेन चत्वरमहानसीय गोष्ठीयतद्वन्यभावस्य चाग्रहणान्निरुक्तदिशाव्याप्तिर्वार्यते। एवमेतादृशपूर्वपक्षीयव्याप्तिलक्षणस्याव्याप्यवृत्तिकसाध्यस्थले अयं वृक्षः कपिसंयोगी एतद्वृक्षत्वात् इत्यत्र एकत्रैव वृक्षे स्थलभेदेन कपिसंयोगकपिसंयोगाभावयोस्सत्त्वेन तादृशवृक्ष समानाधिकरणकपिसंयोगाभावाधिकरणनिरूपितवृत्तित्वस्यैव वृक्षे तदभावस्य अग्रावच्छेदेन वृक्षाग्रभागेऽभावेन चाव्याप्तिः प्रसज्येत। अतस्तद्वारणाय पूर्वोक्तपूर्वपक्ष व्याप्तिलक्षणघटकाभावे प्रतियोगिवैयधिकरण्यं निवेशनीयम्। दत्ते च तादृक्प्रतियोगि-वैयधिकरणविशेषणे साध्यनिष्ठप्रतियोगिताकाभावपदेन प्रतियोगिवैयधिकरण्याभावस्यैव धर्तव्यत्वेन प्रतियोगि समानाधिकरणकपिसंयोगाभावस्य ग्रहणात्पूर्वोक्तपूर्वपक्षव्याप्तिलक्षणस्य अयं वृक्षः कपिसंयोग्येतद्वृक्षत्वादित्याकारकाव्याप्यवृत्तिसाधकस्थले अव्याप्तिर्वार्यते। निष्कर्षे तु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदका वच्छिन्नसाध्यनिष्ठप्रतियोगितावच्छेदक-सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नसाध्यनिष्ठप्रतियोगितानिरूपकव्यधिकरणधर्मावच्छिन्नात्यन्ताभावनिष्ठस्वरूपसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुता वच्छेदकावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरणतावनिरूपितवृत्तित्वावच्छिन्नवृत्तित्वनिष्ठप्रतियोगितानिरूपकात्यन्ताभावः प्रथमपूर्वपक्षव्याप्ति-लक्षणं फलति। इङ्गितञ्चैतद्गोवर्धनपण्डितेन तर्कसंग्रहव्याख्यायां न्यायबोधिन्याम्।

यद्यपि व्याप्तिपदार्थविवरणावसरे गले शोपाध्यायेन मणिग्रन्थे न तावदव्यभिचरित-त्वम्, तद्धि न साध्याभाववद्वृत्तित्वमथवा न साध्यवद्भिन्नसाध्याभाव वद्वृत्तित्वमथवा न साध्यवत्प्रतियोगिकान्योन्याभावा समानाधिकरण्य मथवा सकलसाध्याभाववन्निष्ठाभाव - प्रतियोगित्वमथवा साध्यवदन्यावृत्तित्वं वा यन्न भवति तदेवाव्यभिचरितत्वरूपा व्याप्तिः इत्याकारकग्रन्थमुखेन पञ्चपूर्वपक्षव्याप्तिलक्षणानि पूर्वपक्षग्रन्थोपष्टम्भकमुखेन प्रण्यनायिषत। तमेव तत्त्वचिन्तामणिमाधारीकृत्य गङ्गेशादर्वाचीना यज्ञपत्युपाध्यायपक्षधरमिश्रवासुदेव-

सार्वभौमरघुनाथशिरोमण्यादयो नैके नैयायिकमूर्धन्यास्स्वस्वप्रणीतग्रन्थेषु नैकानि पूर्वपक्ष-व्याप्तिलक्षणानि व्यरचयन्। परन्तु तेषां सर्वेषां पूर्वपक्षव्याप्तिलक्षणाना 'मिदं वाच्यं ज्ञेयत्वात्', 'सर्वमभिधेयं प्रमेयत्वात्' इत्यादावप्रसिद्धप्रतियोगिताकवाच्यत्वप्रमेयत्वाभाव-योरप्यप्रसिद्धत्वेना सम्भवदोषग्रस्तत्वादपि च वह्नित्वेन घटो नास्तीत्याकारकप्रतीतिसिद्धव्यधिकरण-धर्मावच्छिन्नप्रतियोगिताकाभावस्य सर्वतन्त्रसिद्धान्तविरुद्धत्वाच्चैतत्सर्वं निर्मूलीकृत्य गङ्गेशोपाध्यायः सूत्रप्रायं व्याप्तिसिद्धान्तलक्षणं परिष्कृतवान्-'अत्रोच्यते - प्रतियोगिसमानाधिकरणं यत्समानाधिकरणं प्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य व्याप्ति'रिति। इदमेव व्याप्तिसिद्धान्तलक्षणं कारिकावलीकारः स्वविरचितायां कारिकावल्यामथवा हेतुमन्निष्ठविरहाप्रतियोगिनः इति कारिकामुखेन सूक्ष्मतया परिष्कृतवान्। अतो हि मणिकारिकावलीग्रन्थाभ्यां हेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिरिति फलति।

हेतुव्यापकसाध्यसामानाधिकरण्य सिद्धान्तव्याप्तिलक्षणेऽत्र एतल्लक्षणघटक व्यापकत्वञ्च स्वसमानाधिकरणात्यन्ता भावाप्रतियोगित्वम्। तथा च हेतुव्यापकसाध्य - सामानाधिकरणमित्याकारकवाक्यात् हेतुनिष्ठाधेयतानिरूपिताधिकरण ताश्रयवृत्त्यत्यन्ताभावा-प्रतियोगिसाध्यनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वं सिद्धान्तव्याप्तिलक्षणं फलति। एतस्य सिद्धान्तव्याप्तिलक्षणस्य 'पर्वतो वह्निमान्धूमात्' इत्येत्थं लक्षणसमन्वयः - अत्रैतत्सिद्धान्तव्याप्तिलक्षणघटकहेतुपदेन धूमः स्वीकार्यः। तादृशहेत्वधिकरणं पर्वतः। तद्वृत्तिर्योऽत्यन्ताभावः इत्युक्ते संयोगसम्बन्धेन पर्वतीयवह्निः पर्वते नास्तीत्याकारक -प्रतीतिसिद्धः पर्वतीयवह्नयभावो नैव समायाति। अपितु पर्वते घटो नास्तीत्याकारकप्रतीति-सिद्धो घटाभावस्समायाति। तादृशघटाभावीयप्रतियोगितावच्छेदकं घटत्वम्। तत्प्रतियोगिता-नवच्छेदकं वह्नित्वम्, तदवच्छिन्नो वह्निः, तदधिकरणं पर्वतः, तद्वृत्तित्वं धूमे वर्तत इति।

'धूमवान् वह्निः' इत्यादौ धूमसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्वस्यैव वह्नौ सत्त्वेन प्रतियोगितानवच्छेदक साध्यसामानाधिकरण्यस्य पर्वतादावसत्त्वेन पूर्वोक्तव्याप्ति-सिद्धान्तलक्षणस्य धूमवान् वह्नेरित्यत्र नातिव्याप्तिः।

अत्रैतत्सिद्धान्तव्याप्तिलक्षणघटकहेतुनिष्ठाधेयताया हेतुतावच्छेदकसम्बन्धाव-च्छिन्नत्वमिति विशेषणन्निवेशनीयम्। अन्यथा समवायेन पर्वतो वह्निमान्धूमावयवादित्यत्र समवायसम्बन्धावच्छिन्नधूमनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्तिघटात्यन्ताभावीयप्रतियोगिता-नवच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यस्य धूमावयवे सत्त्वात् पूर्वोक्तव्याप्तिसिद्धान्तलक्षणस्य

पर्वतो वह्निमान्धूमादित्यत्राव्याप्तिः। अतस्तद्वारणायैतल्लक्षणघटकहेतुनिष्ठाधेयतायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणदानात्पर्वतो वह्निमान्धूमाद् इत्यत्र हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नवह्निनिष्ठवह्निर्नास्तीत्याकारक-प्रतीतिसिद्धवह्न्यभावस्य धर्तुमशक्यत्वेन घटाभावस्यैव स्वीकर्तव्यतया तादृशघटाभावीयप्रतियोगितानवच्छेदकवावच्छिन्नसाध्यसामानाधिकरण्यस्य धूमे सत्त्वान्नाव्याप्तिः।

नन्वेवमपि पूर्वोक्तसिद्धान्तव्याप्तिलक्षणघटकहेतुनिष्ठाधेयतायां हेतुतावच्छेदकत्वानिवेशे पर्वतो वह्निमान्धूमादित्यत्र कालिकसम्बन्धावच्छिन्नपर्वतीयवह्न्यभावाधिकरणनिरूपितवृत्तित्वस्य जले सत्त्वेन तत्प्रतियोगितानवच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यस्य धूमेऽसत्त्वेन पुनरव्याप्तिः प्रसज्यते। अतस्तद्वारणाय पूर्वोक्तसिद्धान्तव्याप्तिलक्षणघटकहेतुनिष्ठाधेयतायां हेतुतावच्छेदकावच्छिन्नत्वमिति विशेषणं निवेशनीयम्। तन्निवेशे तु हेतुतावच्छेदकसम्बन्धावच्छिन्न-हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरणतावदत्यन्ताभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिसिद्धान्तलक्षणं फलति। एतल्लक्षणस्वीकारात्तत्रापि हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुनिष्ठाधेयतायां हेतुतावच्छेद-कावच्छिन्नत्वविशेषणदानात् पर्वतो वह्निमान्धूमादित्यत्र कालिकसम्बन्धावच्छिन्न-वह्निनिष्ठात्यन्ताभावीयप्रतियोगितानवच्छेदकसाध्यसामानाधिकरण्यस्य धूमे सत्त्वेन पर्वतो वह्निमान् धूमादित्यत्र नाव्याप्तिः।

पूर्वोक्तव्याप्तिसिद्धान्तलक्षणघटकाभावे प्रतियोगिवैयधिकरण्यानिवेशे अयं वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्यवृत्तिकसाध्यस्थले अग्रे वृक्षः कपिसंयोगी, मूलेने - त्याकारकप्रतीत्यैकस्मिन्नेव वृक्षे कपिसंयोगतदभावयोरेकाधिकरणवृत्तित्वेन पूर्वोक्तहेतु-तावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठाधेयता निरूपिताधिकरणता-वृत्तिकपिसंयोगाभावाख्यप्रतियोगिसमानाधिकरणात्यन्ताभावीयप्रतियोगितावच्छेदकत्वस्यैव वृक्षे सत्त्वेन तदनवच्छेदकत्वस्य चाभावेन च पूर्वोक्तव्याप्तिसिद्धान्तलक्षणस्याव्याप्यवृत्तिसाध्यकस्थले अयं वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिः प्रसज्यते। अतस्तद्वारणाय पूर्वोक्तव्याप्तिसिद्धान्तलक्षणघटकाभावे प्रतियोगिवैयधिकरण्यमिति विशेषणन्निवेशनीयम्। दत्ते च तादृग्विशेषणे पूर्वोक्तव्याप्तिलक्षणघटकाभावपदेन प्रतियोगिव्यधिकरणाभावस्यैव स्वीकर्तव्यतया तादृशव्यधिकरणधर्मावच्छिन्नकपिसंयोगाभावस्य पूर्वोक्ताव्याप्यवृत्तिकसाध्यस्थले अयं वृक्षः

कपिसंयोगी एतद्वृक्षत्वादित्यत्राभावेन घटाभावीयप्रतियोगितानवच्छेदकसाध्यसामानाधिकरण्यस्य पूर्वोक्ताव्याप्यवृत्तिकस्थले नाव्याप्तिर्लक्षणसमन्वयश्च।।

नन्वेवमेतादृशसिद्धान्तव्याप्तिलक्षणस्यापि पर्वतो वह्निमान् धूमात् इत्याकारकसद्धेतुस्थले पुनरव्याप्तिः प्रसज्यते। तथाहि -हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्तिप्रतियोगिव्यधिकरणो योऽत्यन्ताभाव इत्युक्ते पर्वते महानसीयवह्निर्नास्तीत्याकारकप्रतीतिसिद्धो महानसीयवह्न्यभावोऽत्र स्वीक्रियते। तादृशमहानसीयवह्न्यभावीयप्रतियोगितानवच्छेदकसाध्यतावच्छेदकवह्नित्वावच्छिन्नवह्निसामानाधिकरण्यस्य पर्वतेऽभावादुक्तदिशा पर्वतो वह्निमान् धूमादित्यत्र पुनरव्याप्तिः।

अतस्तद्दोषवारणाय पूर्वोक्तलक्षणघटकतादृशमहानसीयवह्नयभावाप्रतियोगितायां साध्यतावच्छेदकतदितरोभयधर्मानवच्छिन्नत्वन्निवेशनीयम्। दत्ते च तादृग्विशेषणे महानसीयवह्न्यभावीयप्रतियोगितायां साध्यतावच्छेदकवह्नित्वमहानसीयत्वोभयधर्मावच्छिन्नत्वस्यैव सत्त्वेन तदनवच्छिन्नत्वस्य चाभावेन पूर्वोक्तव्याप्तिसिद्धान्तलक्षणस्य पर्वतो वह्निमान् धूमादित्यत्र नाव्याप्तिः।

नन्वेवमपि पूर्वोक्तव्याप्तिसिद्धान्तलक्षणस्य पर्वतो वह्निमान्धूमादित्याकारकसद्धेतुस्थले पुनरव्याप्तिः प्रसज्यते। तथाहि हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्तिप्रतियोगिव्यधिकरणात्यन्ताभावपदेन वह्निघटोभयाभावस्वीकारे तादृशवह्निघटोभयाभावीयप्रतियोगितावच्छेदकस्यैव धूमाधिकरणे पर्वते सत्त्वेन प्रतियोगितानवच्छेदकत्वस्याभावेन पूर्वोक्ततादृशहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्तिप्रतियोगिवैयधिकरण्यावच्छिन्नाभावीयप्रतियोगितानवच्छेदकसाध्यसामान्याधिकरण्यस्य धूमेऽसत्त्वादुक्तदिशा पूर्वोक्तव्याप्तिसिद्धान्तलक्षणस्य पुनः पर्वतो वह्निमान्धूमादित्यत्राव्याप्तिः प्रसज्यते। अतस्तद्वारणाय पूर्वोक्तव्याप्तिलक्षणघटकाभावीयप्रतियोगितायां प्रतियोग्यधिकरणावृत्तित्वमिति विशेषणं निवेशनीयम्। दत्ते च तादृग्विशेषणे पूर्वोक्तस्थले पूर्वोक्तवह्निघटोभयाभावीयप्रतियोगित्वस्यैव वह्निघटद्वये सत्त्वेन तादृशपूर्वोक्तवह्निघटोभयाभावीयप्रतियोगितानवच्छेदकसाध्यसामानाधिकरण्यस्य धूमेऽभावादुक्तव्याप्तिसिद्धान्तलक्षणस्य पर्वतो वह्निमान् धूमादित्याकारकसद्धेतुस्थले नाव्याप्तिः। तथा च प्रकृतव्याप्तिसिद्धान्तलक्षणप्रकारश्चेत्थम्-हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरणता-

वद्वृत्तिप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्न प्रतियोग्यधिकरणावृत्ति-व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तद्वच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति।

नन्वेवमपि पूर्वोक्तव्याप्तिसिद्धान्तलक्षणघटकद्वितीयविशेषणान्तर्गतसाध्यनिष्ठाधेयतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमित्याकारकविशेषणदलानुपादाने कालिकसम्बन्धावच्छिन्न-वह्निनिष्ठप्रतियोगिताकोभयभावीयप्रतियोगितावच्छेदकवह्नित्वस्यैव वह्नित्वे सत्त्वेन तादृशवह्निरूपसाध्याधिकरणे पर्वते धूमेऽभावेनैतल्लक्षणस्य पर्वतो वह्निमान् धूमादित्याकारकसद्धेतुस्थले पुनरव्याप्तिः प्रसज्यते। अतस्तद्वारणाय पूर्वोक्तव्याप्तिसिद्धान्त-लक्षणघटकद्वितीयविशेषणान्तर्गतसाध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्व-मिति विशेषणन्निवेशनीयम्। दत्ते च तद्विशेषणे पर्वतो वह्निमान्धूमादित्यादौ पर्वते कालिकसम्बन्धावच्छिन्नप्रतियोगिता कवह्नयभावस्य, तादृशवन्यभावीय प्रतियोगितावच्छेदकस्य च सत्त्वेऽपि साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नवह्न्यभावस्याभावेन तादृशसंयोगसम्बन्धाव-च्छिन्नवह्नयभावीयप्रतियोगितानवच्छेदकसाध्यसामानाधिकरण्यस्य वन्यधिकरणे पर्वतादौ सत्त्वेनोक्तव्याप्तिसिद्धान्तलक्षणस्य पर्वतो वह्निमान्धूमादित्यत्राव्याप्तिर्वार्यते।

एवं पूर्वोक्तव्याप्तिसिद्धान्तलक्षणघटकपूर्वोक्ततादृशसाध्यनिष्ठाधेयतायां साध्यतावच्छेद-कावच्छिन्नत्वमिति विशेषणदानेन वह्निघटोभयाभावमादाय प्रसक्ताव्याप्तिर्वार्यते। तथा च हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठाधेयतानिरुपिताधिकरणतावद्वृत्ति-प्रतियोग्यधिकरणवृत्तिप्रतियोगिव्यधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकसाध्यतावच्छेदक-सम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठाधेयतानिरुपिताधिकरणताश्रयत्वं व्याप्ति-सिद्धान्तलक्षणं फलति।

नन्वेवमप्येतादृशव्याप्तिसिद्धान्तलक्षणस्यापि कालो घटवान् कालपरिमाणवत्त्वात् इत्यत्राव्याप्तिः प्रसज्यते। तथाहि – यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोग्यधिकरणावृत्त्यन्ताभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्न-साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्न साध्यनिष्ठा धेयतानिरुपिता-धिकरणतावद्वृत्तित्वं व्याप्तिरिति व्याप्तिसिद्धान्तस्वीकारे 'कालो घटवान् कालपरिमाणवत्त्वात्' इत्यत्र सर्वाधारः कालः इति प्रतीत्या कालस्य सर्वाधारत्वेन तादृशकालिकसम्बन्धावच्छिन्नवह्न्यभावाप्रतियोगितानवच्छेदकत्वस्याप्रसिदध्या तादृश-

ISSN-2321-6948

प्रतियोगिताकसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यस्याभावात् पूर्वोक्तव्याप्तिलक्षणस्य कालो घटवान् कालपरिमाणत्वात् इत्यत्राव्याप्तिः प्रसज्यते। अतस्तद्वारणाय यावत्पदघटितं व्याप्तिसिद्धान्तलक्षणन्निर्वचनीयम्। निष्कर्षे तु हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्तयो यत्सम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाः प्रतियोग्यसमानाधिकरणाः यावन्तोऽभावास्तत्प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तादृशसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकतदितरोभयधर्मानवच्छिन्नसाध्यनिष्ठाधेयता निरूपिताधिकरणताश्रयत्वं व्याप्तिरिति निर्दुष्टं व्याप्तिसिद्धान्तलक्षणमेव मूर्धन्यतया शिरोधार्यमिति रसगङ्गाधरस्य निगूढाशयः। एतावन्तमेतादृशमनितरसाधारणं मर्मगर्भवैदुष्यपूर्णं निगूढं व्याप्तिसिद्धान्तसमन्वयपूर्वकं साङ्गोपाङ्गमनुमानालङ्कारसिद्धान्तं पण्डितराजजगन्नाथोऽभिवर्णयामासेत्यलमतिविस्तरेणेति दिक्।

***

साहित्यविभागीयाचार्यः
केन्द्रीयसंस्कृतविश्वविद्यालयः
श्रीसदाशिवपरिसरः, पुरी (उत्कलाः)
कूचाङ्कः - ७५२ ००१ (चलभाषसंख्या- ८८९५१ २२३१२)

# धर्म-राजनीत्योरन्तःसम्बन्धः – एकं समीक्षणम्

**डा. सुज्ञानकुमारमाहान्तिः**
Central Sanskrit University,
Bhopal Campus, Bhopal, M.P.
PIN – 462043

धर्म-राजनीत्योरन्तःसम्बन्धस्यान्वेषणात्पूर्वं 'धर्म' इति पदेन परिभाषितस्य सिद्धान्तस्य परिभाषाविषये चिन्तनस्यापरिहार्यता नितान्तं सान्दर्भिकं प्रतीयते। धृ-धातोः "अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्[1]" इति उणादिसूत्र (1.139) बलात् मन्-प्रत्ययेन धर्म इति पदस्य निष्पत्तिर्भवति। ध्रियते लोकोऽनेनेति धर्मः इति धर्मपदस्य व्युत्पत्तिः। एतेन लोकं धारयतीति सिद्धान्तमनुसृत्य धर्म इति पदं परिभाषितम्। महाभारतस्यानुशीलनेन धर्मपदस्य परिभाषा इतोऽपि स्पष्टतरं प्रतीयते। तद्यथा –

*धारणात् धर्म इत्याहुः धर्मो धारयति प्रजाः।*
*यः स्याद् धारणसंयुक्तः स धर्म इति निश्चयः।।*[2]

एवं धारणक्रियापरत्वेन धर्मपदं व्याख्यातम्। वास्तवेन लोकस्य समाजस्य वा संरक्षकरूपेण धर्मः कीर्तितोऽस्ति। अत एव सदैव धर्मस्य रक्षा कर्तव्या। अन्यथा अरक्षितः धर्मः कथंकारं लोकं, समाजं, राष्ट्रं वा रक्षितुं शक्नुयात्। अत एव मनुस्मृतावपि धर्मस्य सिद्धान्त इतोऽपि स्पष्टतरं परिभाषितोऽस्ति -

*धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।*
*तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत् ॥*[3]

स एव धर्मः यः श्रेयसेऽपि स्यात् प्रेयसेऽपि स्यात्। न प्रेयोमात्रमार्गः क्वचित् श्रेयसेऽपि स्यात्। नापि श्रेयोमात्रमार्गस्तथा प्रेयसे सम्पद्येत। अत एव वैशेषिकदर्शने धर्मस्य सिद्धान्त इत्थं प्रतिपादितोऽस्ति-

---

[1] उणदिसूत्रं, 1.139
[2] महाभारत, कर्ण पर्व / महाभारत उद्योगपर्व (८६/५७)
[3] मनुस्मृति 8/15

"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः।"[1]

येन अभ्युदयेन सह निःश्रेयसोऽपि सिद्धिर्जायते स धर्म इति तात्पर्यम्।

- **राजनीतिः –**

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः[2]। अर्थात् – चतस्रो विद्याः – 1. आन्वीक्षिकी (दर्शनशास्त्रं) , 2. त्रयी (वेदत्रयी), 3. वार्ता (अर्थनीतिः), 4. दण्डनीतिश्च (राजनीतिः)। दण्डनीतिरेव राजनीतिरूपेणोक्ता। यथाह कौटिल्यः – धर्माधर्मौ त्रय्यामर्थानर्थौ वार्त्तायां नयानयौ दण्डनीत्यां बलाबले चैतासां हेतुभिरन्वीक्षमाणलोकस्य आन्वीक्षकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः। तस्य नीतिर्दण्डनीतिः; अलब्धलाभार्था, लब्धपरिरक्षणी, रक्षितविवर्धनी, वृद्धस्य तीर्थेषु प्रतिपादनी च[3]।

अलब्धस्यार्थस्य लाभो भवति, लब्धस्य परिरक्षणं, रक्षितस्य वर्धनं, तथा वृद्धस्यार्थस्य समुचिते विनियोगो दण्डेनैव भवति। मनुस्मृतावपि दण्डविधानमेव राज्ञः प्रथमं कर्तव्यमिति प्रतिपादितम् –

*स राजा पुरुषो दण्डः स नेता शासिता च सः।*
*चतुर्णां आश्रमाणां च धर्मस्य प्रतिभूः स्मृतः॥*
*दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।*
*दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः।।*
*समीक्ष्य स धृतः सम्यक्सर्वा रञ्जयति प्रजाः।*
*असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः।।*
*यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः।*
*शूले मत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः।।*[4]

परं राजा प्रजानां रक्षणायैव दण्डविधानं राजनीतेः प्रयोगं कुर्यात्। तदुक्तं –

*स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः।*
*वर्णानां आश्रमाणां च राजा सृष्टोऽभिरक्षिता।।*[5]

---

[1] (वै.दर्शनम् 1/1/2)
[2] कौटिलीयम् अर्थशास्त्रम्, 1.2.1
[3] तत्रैव, 1.2.20-22
[4] मनुस्मृतिः, 7.17-20
[5] तदेव, ७.३५

राजा प्रथमं स्वयं धर्मस्य पालनं कुर्यात्, ततः ब्राह्मणादीनां चतुर्णां वर्णानाम्, ब्रह्मचर्यादीनां च चतुर्णामाश्रमाणां रक्षणं कुर्यात्। यतो हि सुखप्राप्तिः धर्मादीना एव। धर्मं विहाय सुखप्राप्तिरसम्भवा। एवं धर्मार्थराज्यादीनामुत्तरोत्तराश्रयत्वं प्रतिपादितम्। परं राज्यम् इन्द्रियजयविनयादिद्वारैव सम्भवति। आचार्यचाणक्यप्रणीतसूत्राणि एतस्य नियामकत्वेन वर्तन्ते –

1. सुखस्य मूलं धर्मः।
2. धर्मस्य मूलमर्थः।
3. अर्थस्य मूलं राज्यम्।
4. राज्यमूलमिन्द्रियजयः।
5. इन्द्रियजयस्य मूलं विनयः।
6. विनयस्य मूलं वृद्धोपसेवा।
7 .वृद्धसेवाया विज्ञानम्।
8. विज्ञानेनात्मानं सम्पादयेत्।
9. सम्पादितात्मा जितात्मा भवति।
10. जितात्मा सर्वार्थैस्संयुज्येत।
11. अर्थसम्पत्प्रकृतिसम्पदं करोति।
12 .प्रकृतिसम्पदा ह्यनायकमपि राज्यं नीयते।

स्मृतिकारो मनुः हि जितेन्द्रियत्वं राज्ञः प्रथमो धर्म इति वदति। तद्यथा -

*इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम्।*
*जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः।।*[1]

अत एव धृतिः, क्षमा, दमः, अस्तेयं, शौचम्, इन्द्रियनिग्रहः, धीः, विद्या, सत्यम्, अक्रोधः इत्येते मानवसामान्यस्य दश गुणाः सन्ति येन मानवे मानवत्वं सम्पद्यते। एतैरेव गुणैः मानवसमाजस्य, राष्ट्रस्य, विश्वस्य च धारणं भवतीति इमे भगवता मनुना धर्मस्य लक्षणं निगदितम्-

*धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।*

[1] तदेव,७.४४

*धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥*[1]

एवं धर्मः लोकस्य संधारकरूपेण संरक्षकरूपेण च कथितः। परमधुना जिज्ञासा समुदेति लोके सामान्यतया कीदृशा आचारा व्यवहाराः धर्मपदेनाभिधीयन्ते ?

धर्मस्य नियमननिमित्तं समाजे राष्ट्रे लोके च तत्प्रणयननिमित्तं च मनु-याज्ञवल्क्य-नारद-पराशरादिभिः धर्मशास्त्राणि प्रणीतानि सन्ति यत्र धर्मशास्त्रस्य प्रमेयाः निरूपिताः सन्ति। धर्मशास्त्रे सामान्यतया विषयाः त्रिषु विभागेषु विभक्ताः। 1. **आचारः, 2. व्यवहारः, 3. प्रायश्चित्तञ्च** इति।

**1. आचारः**

आचारः नाम श्रुतिस्मृतिप्रोक्तं शास्त्रीयम् आचरणम्। अस्मिन् व्यक्तिजीवने, सामाजिकजीवने, गृहजीवने च अनुसरणीयाः नीतयः नियमाः, संस्काराश्च निरुपिताः। अत एव आचारः श्रेष्ठधर्मरूपेण उपवर्णितोऽस्ति स्मृतिशास्त्रेषु -

*आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च।*[2]

*आचारः परमो धर्मः सर्वेषामिति निश्चयः।*[3]

आचारयुक्तः सन्नेव सम्पूर्णफलं प्राप्नोति। तपसः आधारः आचारः एव भवति। सदाचारः एव धर्मस्य मूलम्। आचारेण आयुष्यम्, इष्टार्थसिद्ध्यादयश्च च लभ्यन्ते। सदाचारः एव अशुभं नाशयति च। दुराचारी लोके निन्दितः भवति, दुःखभाजनं सततव्याधिग्रस्तः अल्पायुः च भवति। धर्माचरणे निरता एवं चिन्तयन्ति, यत् सदाचारं विना वयं फलं न प्राप्नुमः, दुःखमयं जीवनं, दारिद्यञ्च बाधते इति। एतेषां प्रश्नानाम् उत्तरं मनुः एवं वदति-

*नाधर्मश्चरितो लोके सद्यः फलति गौरिव।*
*शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥*
*यदि नात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु।*
*न त्वेव तु कृतो धर्मः कर्तुर्भवति निष्फलम् ॥*
*अधर्मेणैधते तावत्ततो भद्राणि पश्यति।*

---

[1] तदेव, ६.९२

[2] तदेव, 1.108

[3] वसिष्ठस्मृतिः,6.1

*ततः सपत्नान् जयति समूलस्तु विनश्यति ॥*

आचारकाण्डे प्रमुखाः विषयाः वर्णधर्मः, आश्रमधर्मः, अनयोश्च सम्बद्धाः संस्काराः व्यवहाराश्च च निरूपिताः।

**वर्णधर्मः**

सर्वेषु धर्मशास्त्रग्रन्थेषु अस्याः वर्णव्यवस्थायाः निरुपणं कृतम् अस्ति। चत्वारो वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्र इति। "ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः। ऊरुस्तदस्य यद्वैश्यः पद्‌भ्यां शूद्रो अजायत" इति ऋग्वेदे अपि वर्णितम् अस्ति। वर्णविभजनस्य उद्देश्यं तु लोकस्य अभिवृद्धिः एव। उक्तं यथा-

*लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः।*
*ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत् ॥*[1]

**आश्रमधर्मः**

समाजस्य समुचितव्यवस्थायै धर्मशास्त्रे चात्वार आश्रमाः निरूपिताः सन्ति। ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-सन्यासाः चत्वारः आश्रमाः। आश्रमधर्माचरणम् उपनयनोत्तरमेव निर्दिष्टमिति।

**ब्रह्मचर्याश्रमः**

ब्रह्मचर्याश्रमः मुख्यः आदिमः आश्रमः। सद्गृहस्थः भवितुम् अस्य आश्रमस्य प्रामुख्यं वर्तते। ब्रह्मचर्याश्रमस्य केचन नियमाः यथा-

*षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम्।*
*तदर्धकं पादिकं वा ग्रहणान्तिकमेव वा ॥*
*वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।*
*अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥*[2]

**गृहस्थाश्रमः**

सकलाश्रमाणाम् आधारभूतोऽतिमुख्यश्चाश्रमो गृहस्थाश्रमः। अयं सकलाश्रमाणामाधारस्तम्भो भवति। अस्य आश्रमस्य वैशिष्ट्यमेवं निरूपितम्-

*गृहस्थ एव यजते गृहस्थस्तप्यते तपः।*

---

[1] मनुस्मृतिः,1.31
[2] तदेव, 3.1-2

*प्रददाति गृहस्थश्च तस्माच्छ्रेष्ठो गृहाश्रमी ॥*[1]

गृहस्थेन सन्ध्यादि षट् कर्माणि करणीयानि। गृहस्थेभ्यः कानिचन कर्तव्यानि निर्दिष्टानि सन्ति, तानि यज्ञा एव भवन्ति। यथा -

*अध्यापनं ब्रह्मयज्ञः, पितृयज्ञस्तु तर्पणम्।*
*होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥*[2]

**वानप्रस्थाश्रमः-**

देव-ऋणात्, ऋषि-ऋणात्, पितृ-ऋणात् च मुक्तो भूत्वा , एवं क्रमशः यजनयाजनम्, अध्ययनम्-अध्यापनम्, पुत्रप्रजननानन्तरं पौत्रस्य जननं च दृष्ट्वा जटाधारी भूत्वा आवसथाग्निना सह काननं प्रति गन्तव्यम्। वानप्रस्थाश्रमे वन्यफलादिकं भुक्त्वा जीवितव्यं, प्रतिनित्यं त्रिषवणम् (त्रिवारं तर्पणम्), त्रिसन्ध्याजपः, भूमिशयनञ्च कर्तव्यम्, आत्मसिद्धिं प्राप्तुं यत्नः कर्तव्यः। श्रुतेः, उपनिषदां चाध्ययनं निरन्तरतया भवेत्।

**सन्यासाश्रमः**

वानप्रस्थस्य सन्यासाश्रमस्य च भेदः तावान् नास्ति। वानप्रस्थाश्रमे जटाधारणं निर्दिष्टम्। सन्यासाश्रमे तु मुण्डनं कर्तव्यं भवति। अस्मिन् यतिनः आत्मसाधनार्थं सर्वदा यतमानाः भवेयुः। उक्तञ्च-

*वनेषु च विहृत्यैवं तृतीयं भागमायुषः।*
*चतुर्थमायुषो भागं त्यक्त्वा सङ्गान् परिव्रजेत् ॥*[3]

गौतमगृह्यसूत्रे केचन सन्यासाश्रमधर्माः पठिताः सन्ति। ते यथा-

*न कुट्यां नोदरे सङ्गो न चैले न त्रिपुष्करे।*
*नागारे नासने नान्ने यस्य वै मोक्षवित्तु सः ॥*
*अरण्यनित्यस्य जितेन्द्रियस्य सर्वेन्द्रियप्रीतिनिवर्तकस्य।*
*आध्यात्मचिन्तागतमानसस्य ध्रुवा ह्यसौवृत्तिरुपेक्षकस्य ॥*[4]

---

[1] विष्णुस्मृतिः 59.27
[2] मनुस्मृतिः, 3.70
[3] तदेव, 6.33
[4] गौतमगृह्यसूत्रम्

**संस्काराः**

संस्काराः सामान्यतया द्विधा विभक्ताः। जननपूर्वाः जननानन्तराणि च। मनुस्मृतौ षोडश संस्काराः उक्ताः सन्ति। यथा- गर्भादानम्, पुंसवनम्, सीमन्तोन्नयनम्, जातकर्म, नामकरणम्, निष्क्रमणम्, अन्नप्राशनम्, चूडाकरणम्, कर्णवेधः, विद्यारम्भः, उपनयनम्, वेदारम्भः, केशान्तः, समावर्तनम्, विवाहः, अन्तेष्टिः च। संस्काराणाम् उद्देश्यं निरूपितं मनुस्मृतौ। तद्यथा-

*वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।*
*कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥*
*गार्भैर्होमैर्जातकर्म चौडमौञ्जीनिबन्धनैः।*
*बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥*
*स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।*
*महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥*[1]

**2. व्यवहारः-**

स्मृत्युक्तेषु धर्मेषु व्यवहारभागः (आचारकाण्डेषु) प्रमुखः अस्ति। तत्र लौकिकालौकिकव्यवहाराः वर्णिताः सन्ति। राजधर्म एव व्यवहारधर्मः उच्यते। मनुस्मृतौ सप्तमे अष्टमे चाध्याये, याज्ञवल्क्यस्मृतौ अपि व्यवहारधर्मः निरूपितोऽस्ति। अस्मिन् व्यवहारकाण्डे प्रथमश्लोकः एवं विद्यते-

*व्यवहारान् नृपः पश्येत् विद्वद्भिः ब्राह्मणैः सह।*
*धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥*[2]

स्मृत्यनुसारं नृपः न्यायदानं कुर्यात्। अतः न्यायनिर्णयार्थं वेदधर्मशास्त्रपारङ्गतानाम्, सत्यवादिनाम्, निष्पक्षपातिनां विद्वज्जनानां च समूहः भवति स्म। तस्मिंश्च समूहे नृपाः, गौरवस्थकुटुम्बिनः, वृद्धवणिजः , धनिकाः च भवेयुः। नृपस्य अनुपस्थितौ कश्चित् न्यायाधीशः नृपेणैव नामितो भवति।

**3. प्रायश्चित्तम् -**

प्रायश्चित्तं नाम पश्चात्तापप्राप्तं मनः इति। अस्य वर्णनं एवं निरूपितम्-

---

[1] मनुस्मृतिः, 2.26-28
[2] याज्ञवल्क्यस्मृतिः

*प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते।*
*तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम् ॥*[1]

आत्मशुद्ध्यर्थम् उक्तानि सन्ति प्रायश्चित्तानि। अतः मनस्मृतौ, याज्ञवल्क्यस्मृतौ, गौतमस्य, बोधायनस्य, आपस्तम्भस्य, वसिष्ठधर्मसूत्रादिषु च प्रायश्चित्तस्य विषये निरुपितम् अस्ति। प्रायश्चित्तेषु दैहिकप्रायश्चित्तानि विहाय जपतपसादयः, कृच्छाः, अतिकृच्छाः, चान्द्रायणादीनि च प्रायश्चित्तानि कथितानि सन्ति। महापातकानां, उपपातकानां च वर्णनमस्ति। हननम्, अभक्ष्यभक्षणम्, अगम्यगमनादिषु विषयेषु स्पष्टतया निरूपणमस्ति।

**धर्मः साम्प्रदायिकता च –**

वास्तवेन अद्यत्वे धर्मं साम्प्रदायिकतया सह मेलयित्वा जनेषु भ्रान्तिरुत्पाद्यते। हिन्दुत्वं, शिक्खत्वम्, ईसाईत्म्, इस्लामत्वं चेत्यादयः विविधसम्प्रदायाः विविधविश्वासपरम्परामाधारीकृत्य प्रतिष्ठिताः सन्ति। विश्वासानुगुणं तत्र तत्र जनानां प्रवृत्तिः भवति। परन्तु धर्मः विश्वासाधारेण न प्रतिष्ठते। अत एव धृतिः, क्षमा, दमः, अस्तेयं, शौचम्, इन्द्रियनिग्रहः, धीः, विद्या, सत्यम्, अक्रोधः इत्येतानि शाश्वतमानवीयमूल्यानि एव धर्मपदेनोक्तानि सन्ति। इमानि सदैव मानवतया सह नियततया प्रतिबद्धानि सन्तीति एतानि सनातनधर्मस्य मौलिकतत्त्वानि सन्ति। एष एव सनातनधर्मः, मानवमात्रस्य धर्मः। न तत्र देशकालादिदृष्ट्या भेदो भवति। अत एव उक्तमस्ति –

*धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।*
*तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत् ॥*[2]

यदि वयं धर्मस्य पालनं न कुर्मः तदा धर्मोऽपि अस्माकं रक्षां न करिष्यति। सम्प्रदायविशेषे विश्वासो स्याद्वा न वा, तत्र नियमनं नास्ति, परं धर्मे विश्वासं विना गतिर्नास्ति।

एवमुपर्युक्तविवेचनैः ज्ञायते यद् राजनीतिः धर्मं विना न भवेदेव। धर्मविरहिता राजनीतिः सर्वथा परिहेया भवति। धर्म-राजनीत्योः अङ्गाङ्गिभावसम्बन्धः। परन्तु साम्प्रदायिकत्वं धर्मात् सर्वथा भिन्नम्। अतः साम्प्रदायिकत्वमुखावरणं परिहृत्य धर्मस्य

[1] अंगिरसस्मृतिः
[2] तदेव, 8.15

तत्त्वमवगन्तव्यम्। धर्मः शाश्वतानि मूल्यान्यवलम्ब्य प्रतिष्ठति। राजनीतिश्च प्रजापालनायैव उद्दिष्टेति कथं राजनीतिः धृति-क्षमादिशाश्वतमूल्यं विहाय सम्भवेत्? यथा ऊष्णत्वधर्मं विना अग्नेः सत्ता एव न भवति, तथा मानवस्य सत्तापि धर्मं विना न भवितुमर्हति। सम्प्रदायाः भिन्नभिन्नमार्गावलम्बिनो भवन्तु नाम, गम्यस्तु तत्रापि एक एव ईश्वरः। अत एव वेदे प्रतिपादितमस्ति –

*इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।*
*एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः॥*[1]

***

**Dr. Sugyan Kumar Mahanty**
Central Sanskrit University
Bhopal Campus, Bhopal, M.P., PIN – 462043
Email: mahantysugyankumar@gmail.com

[1] ऋग्वेदः, 1.164.46

# काव्यादर्शे श्लोकादर्शसन्दर्भः

**डॉ.राधावल्लभशर्मा,**
सहायकाचार्यः, साहित्यविभागे,
हरियाणासंस्कृतविद्यापीठम्
(नवदेहलीस्थकेन्द्रीय-संस्कृतविश्वविद्यालयेन सम्बद्धम्)
बघौला, पलवलम्, हरियाणा
ई-मेल-drrvshastri@gmail.com
Ph. no.-9805072781

भारतीयकाव्यशास्त्रपरम्परा नैरन्तर्येण गतिमती विचारवती च वर्तत इत्यत्रास्माकमाचार्याणां शास्त्रचिन्तनतत्पराणां मतिमतां भूयान्प्रयास एव मौलिभूतं हेतुरिति मनागपि न शङ्काकलङ्कः। परम्परायामेवास्यां कविशिरोमणिः करतलामलकीकृतालङ्कारशास्त्रः साहित्यार्थसुधासिन्धुर्दण्डी स्वसिद्धान्तपरामर्शेन विषयप्रस्तुतीकरणेनात्युत्कटकवित्वशक्त्या च सुतरां सुप्रसिद्ध इति तदीयरचनासम्पत्प्रमाणीकरोति। **कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः**वचनमदो वार्तामिमामुपर्युक्तामितोऽपि प्रबलीकरोति।

काव्यशास्त्रिणामादर्शभूतः काव्यादर्शो नामधेयो ग्रन्थो विद्वत्सु प्रसिद्धः प्रथितश्चेत्यत्र महाकवि-दण्डिन एव उद्योगयोगः। अयञ्च काव्यादर्श अलङ्कारशास्त्रे प्रविविक्षतां कृते अतीवोपकारकः सरस-मधुरया शैल्याऽलङ्कारशास्त्रीयतत्त्वनिवहप्रकाशश्चेति न तिरोहितं सुधियाम्। ग्रन्थेऽस्मिन् त्रयो विमर्शा विलसन्ति। प्रथमे विमर्शे तावद् गद्यस्वरूप-तद्भेदाः गुणस्वरूप-तद्भेदाश्च सुष्ठुरीत्या वर्णिताः। द्वितीये विमर्शे उपमादीनामलङ्काराणां विस्तरेण व्याख्यानमकारि। तृतीये च विमर्शे यमकमहायमकगोमूत्रिकासर्वतोभद्रप्रहेलिकाभेदकाव्यदोषाणाञ्च वर्णनं व्यधायि। काव्यादर्शेऽस्मिन् श्लोकसौन्दर्यमतितरां विच्छित्तिं धारयद् दण्डिप्रातिभं वैशद्येन चमत्करोति सहृदयसभ्यान्। अत्र श्लोको नाम अनुष्टुप्छन्दः। अवादि ध्वनिकारेण—

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥**[1]

महाकविना कालिदासेनापि किञ्चिदित्थमेव व्याख्यायि—

**निषादविद्धाण्डजदर्शनोत्थश्लोकत्वमापद्यत यस्य शोकः।**[2]

अनुष्टुब्छन्दसि कविना दण्डिना या चारुता प्रकटिता सा नितान्तं हृदयहारिणी, चेतःप्रसादिका, अभिनवभङ्गीनिवेशपेशलताशालिनी च वर्तते। तस्मादुच्यते-

**विना व्याकरणेनान्धो बधिरः कोशवर्जितः।**
**छन्दःशास्त्रं विना पङ्गुर्मुकस्तर्कविवर्जितः॥**[3]

अस्मिन्नेव सन्दर्भे पण्डितेन्द्रेण क्षेमेन्द्रेण किञ्चिदिदमवादि-

**अनुष्टप्छन्दसां भेदे कैश्चित्सामान्यलक्षणम्।**
**यदुक्तं पञ्चमं कुर्याल्लघु षष्ठं तथा गुरु॥**[4]

इह श्लोकनिबद्धानि कानिचन पद्यानि स्फुटीक्रियन्ते क्रमशः। मङ्गलाचरणे परम्परितरुप-कमाश्रित्य रमणीयो भावः प्रकटितः। तद्यथा—

**चतुर्मुखमुखाम्भोजवनहंसवधूर्मम।**
**मानसे रमता नित्यं सर्वशुक्ला सरस्वती॥**[5]

अत्र श्लोकमुखेनायमर्थः सङ्गतो भवति यद् हंसी हि कमलवनवासरसिका, अतः शारदाया हंसीत्वेन रुपणे ब्रह्ममुखानां कमलत्वेन रुपणमावश्यकम्। यथा- काचिद् हंसी कमलवने विहरति तथा ब्रह्मणो मुखेषु स्वच्छन्दविहारिणीयं वाणीति। सर्वशुक्ला इत्यनेन नितान्तनिर्दोषा इत्युक्तम्। अत्रानुष्टप्छन्दसश्चमत्कारः सर्वानतिशेते। यथा सकलदोषरहिता वेदरुपा सरस्वती हिरण्यगर्भमुखाम्भोजवासिनी तथा मम मानसे वर्तमाना सरस्वत्यपि शुद्धैव, न तु हालिकादिसाधारणजनमुखे विद्यमाना च्युतसंस्कृत्यादिदोषोपेतेति फलितार्थः। अत्र भगवन्मूर्तिभूतायां सरस्वत्यां कविनिष्ठो रतिभावो व्यङ्ग्यः। अस्मिन् अनादिविविधविचित्र-रचनाप्रपञ्चचारुतरे संसारे त्रिविधा वाच उपलभ्यन्ते— संस्कृताः, प्राकृताः देश्यश्च। तत्राद्या पाणिन्यादिभिरनुशिष्टा, द्वितीया वररुचिना कृतानुशासना, शिष्टा च वर्तते देवी वाक्। अत्र शिष्टानाम् अर्थात् पाणिन्यादिभिः व्युत्पादितानाम्, अनुशिष्टानाम् अर्थात् प्रकृतिप्रत्ययविभागादिभिः साधितानाम्, सर्वथा शिष्टानाम् अर्थात् केनापि प्रकारेण अनुशासनं न प्राप्तानां संस्कृतप्राकृतभिन्नानां देशभाषाणां वाचामनुग्रहेण प्राणिनां यात्राव्यवहारः प्रचलतीति। अत्र दण्डिनः तात्पर्यं भाषाव्यवहारेण वर्तते। एतादृशं गभीरं वर्णनमस्मिन् छन्दसि कृत्वा काव्यादर्शकारः स्वप्रतिभापाटवं सुष्ठुतया प्रस्तौति।

वस्तुतः कवयो भवन्ति वाण्युपासकाः। वाणीं विना काव्यसंसारो मृतायते। एतदेवाभिलक्ष्य सत्यमेव लक्षयामास कविबन्धुना सुबन्धुना—

**करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः।**
**पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी॥[6]**

शब्दस्वरूपं विवेचयता दण्डिना तथ्यमिदमित्थमभाणि—

**इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥[7]**

शब्दानां व्यवहारसाधनत्वमिह व्यतिरेकमुखेन प्रत्यपादि ग्रन्थकारेण। **आसंसारं न दीप्यते** इत्यत्र आङ् इत्यस्याभिव्यापकार्थे प्रयोगं विधाय काचिदपूर्वा विच्छित्तिः समुपस्थायि कविना। शब्दानां सुप्रयोगः कवित्वनिकषभूतः। यदि स्वरमात्रासन्दर्भसङ्केतादीनां दोषः कुत्रचित् स्यात्तर्हि कवित्वं संशया-स्पदमेव भविता। अमुमेव भावमित्थं प्रास्तौत्—

**गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः।**
**दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति॥[8]**

पद्यस्यास्यान्वयो विशिष्टरीत्या समपादि ग्रन्थकारेण। तद्यथा- सम्यक् प्रयुक्ता गौः बुधैः कामदुघा स्मर्यते। सैव गौः दुष्प्रयुक्ता सती प्रयोक्तुः गोत्वं शंसति। **गौर्गौः** इत्यत्र चमत्कारातिशयः द्योत्यते। दोषाणां सर्वथा परित्याग आवश्यकः काव्ये। वस्तुतो निर्दोषां सगुणां सरसां सालङ्कारां वाचं प्रयुञ्जानः कविः श्लाघ्यो भवति तदन्यो निन्द्यते लोकैः सर्वथा, तस्मात् अदोषवत्त्वादिधर्मोपेतायां वाचि यतितव्यम्, तादृशी वागेव च काव्यमिति। यथा शरीरे क्वचनाङ्गभेदेऽवस्थितेन श्वेतकुष्ठेन सुन्दरमपि शरीरं सौभाग्यहीनं जायते तद्वत् स्वल्पेन क्वचन पदांशे स्थितेन दोषेण काव्यमेव सकलमुपहसनीयं भवतीति वक्ति—

**तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन।**
**स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्॥[9]**

पद्येऽस्मिन् **श्वित्रेण** शब्दस्यास्य काचिदपूर्वा शोभाऽत्र कविना वर्णिता। दृष्टान्तालङ्कारस्येदं मनोरममुदाहरणम्। महाभाष्ये जगाद भगवान् पतञ्जलिः-

**यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद् व्यवहारकाले।**
**सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः।[10]**

साहित्यशास्त्रप्रयोजनमुत्तमरीत्या दृष्टान्तमुखेन च वर्णयता कविना गुणदोषविभागक्षमो जनः तदेव भवति यदा स साहित्यशास्त्रवित् स्यादिति। तदेव प्रोच्यते—

**गुणदोषानशास्त्रज्ञः कथं विभजते जनः।**

**किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु॥**[11]

प्रश्नशैल्या सर्वमप्येवमुपस्थायि ग्रन्थकर्त्रा।

व्यवहारज्ञानं काव्यरचनया सम्भवतीति निश्चप्रचम्। अतो व्यवहारज्ञानाय पूर्वसूरिभिर्निर्माणपद्धतिः विरचिता। साभिमानेनात्र प्रदर्श्यते भावोऽयम्—

**अतः पदानां व्युत्पत्तिमभिसन्धाय सूरयः।**
**वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम्॥**[12]

अत्र सूरयो निबबन्धुरिति तदुक्तीनामप्रमादसम्भावना, तया च तदनुसारिणो ममाप्युक्तेः सारवत्त्वमिति ध्वन्यते।

तर्हि का सा क्रियाविधिः इति जिज्ञासा जाते सति काव्यमेव क्रियाविधिर्भवति। अस्य काव्यस्य स्वरूपमित्थं प्रतिपाद्यते—

**तैः शरीरं च काव्यानामलङ्काराश्च दर्शिताः।**
**शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली॥**[13]

इष्टार्थः पदसमुदयं काव्यमिति। इष्टार्थयुतं पदमेव काव्यशरीराय न पर्याप्तमपि तु तेषां पदानां साकाङ्क्षत्वयोग्यत्वासत्तित्वञ्चापेक्षितमिति। इष्टार्थत्वञ्चात्र चमत्कृतियुक्तत्वमभिप्रेतम्। चमत्कारश्च लोकोत्तराह्लादः, आह्लादगतं लोकोत्तरत्वं च कविप्रतिभयोपस्थापितेनालौकिकसामग्रीविशेषेण सम्पादितः सुखत्वव्याप्योऽनुभवसाक्षिको जातिविशेषः। तादृशाह्लादं प्रति शब्दार्थानां हेतुत्वं व्यङ्ग्यविशेषद्धारेण दोषाभावोपस्कृतगुणालङ्कारकृतसौन्दर्येण च निष्पन्नं भवतीति। लोचनकारेणापि स्पष्टमवादि— कवनीयं काव्यमिति। कौति शब्दायते विमृशति रसभावानिति कविः तस्य कर्म काव्यमिति भट्टगोपालस्याभिप्रायः। गद्यस्वरूपमित्थमुवाच—अपादः पदसन्तानो गद्यम्। व्याख्यायति— पादो गणमात्रानियमितः पद्यतुरीयांशः तद्भिन्नोऽपादो गणमात्रानियमवर्जित इत्यर्थः।

समतागुणस्योदाहरणेष्वनुष्टुप्छटा नैसर्गिकी रसावहा स्फुटा च वर्तत इति। तस्मादुररीक्रियते क्षेमेन्द्रेण देशिकेन्द्रेण-

**आरम्भे सर्गबन्धस्य कथाविस्तरसंग्रहे।**
**शमोपदेशवृत्तान्ते सन्तः शंसत्यनुष्टुभम्॥**[14]

उदाहरणं यथा—

**कोकिलाऽऽलापवाचालो मामैति मलयानिलः।**[15]

अत्र मृदुबन्धेन प्रारब्धस्य सन्दर्भस्य तेनैव बन्धेन समापनम्।

**उच्छलच्छीकराच्छाच्छनिर्झराम्भकणोक्षितः।**
**चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः॥**[16]

अत्र प्रथमे तावद् विकटात्मकस्फुटबन्धेनोपक्रान्तस्य सन्दर्भस्य तेनैव समापनात्स्फुटबन्धविषया समतेति। द्वितीये तावत् प्रारम्भे स्फुटो बन्धश्चरमे च मृदुरिति मिश्रबन्धता विलोक्यते।

माधुर्यगुणलक्षणप्रसङ्गेऽपि श्लोकसौन्दर्यमतितरां शोभां पुष्णातीति प्रमाणत्वेनात्रोदाहरणं प्रस्तूयते—

**मधुरं रसवद् वाचि वस्तुन्यपि रसस्थितिः।**
**येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः॥**[17]

रसवद्वाक्यं मधुरमिति व्यवहारः। एतेन रसो माधुर्यमिति तयोरभेदः पर्यवस्यति। माधुर्यं नाम गुणः, गुणास्तावच्छब्धार्थनिष्ठतया साक्षात् परम्परया वा रसोपकारका भवन्ति।, न तु रसाभिन्नता गुणानां तत्कथमत्र माधुर्यस्य रसात्मकत्वमित्युच्यते? अस्येदं समाधानम्, वाचि शब्दे वस्तुनि अर्थे चापि रसस्थितिः व्यञ्जकतया सम्बन्धो भवति। अस्योदाहरणमप्यत्र चारुतया प्रदर्शितम्। अत्रोदाहरणे शब्दानां मसृणत्वमविकटाक्षरबन्धत्वञ्च सुतरां प्रभावशालि आकर्षकञ्चेति।

पदगतवृत्त्यनुप्रासमुदाहरन् कथयति कविरत्रेत्थम्—

**चारु चान्द्रमसं भीरु बिम्बं पश्यैतदम्बरे।**
**मन्मनो मन्मथाक्रान्तं निर्दयं हन्तुमुद्यतम्॥**[18]

कस्यचित्कामुकस्य कुपितां नायिकां प्रत्युक्तिरियम्। अत्र प्रथमे पादे चा,रु वर्णयोरावृत्त्या वृत्त्यनुप्रासः। द्वितीये च पादे मकारवकारयोरावृत्तिरिति। अस्मिन्नेवानुप्रासे विसर्गबाहुल्याद् बन्धपारुष्यहेतुत्वाच्च दोषो जायते कुत्रचित्। **अनुस्वारविसर्गौ तु पारुष्याय निरन्तरौ** इत्यनेन नयेन कुत्रचिच्चानुप्रासोऽयं न संभाव्यते। अनुप्रासस्य चमत्कारो विजातीयपुष्पसङ्कीर्णपुष्पमालेव भवतीति निष्कर्षः।

ओजोगुणस्योदाहरणमित्थं प्रस्तौति कविर्दण्डी—

**अस्तमस्तकपर्यस्तसमस्तार्कांशुसंस्तरा।**
**पीनस्तनस्थितातामकम्रवस्त्रेण वारुणी॥**[19]

पश्चिमाशाया मनोरमं वर्णनमिदम्। सन्ध्यासमये भास्करस्य रक्ताभाः किरणाः पश्चिमाचलशिखरे प्रसरन्ति, इत्थं मन्ये वारुणी दिशा नायिका पीनस्तनभागे रक्तं वस्त्रमिव धारयतीति। ओजोगुणस्य प्रभावोत्पादकं वर्णनमनुष्टप्छन्दसा विहितमत्र कविना नैपुण्येन।

उपमालङ्कारप्रसङ्गे उपमावाचकशब्दानां प्रयोगविषये महाकविना दण्डिना काचिदपूर्वा चातुरी प्रकटिता। चिन्तनमिदं सर्वथा मौलिकमभिनवञ्च वर्तत इति बुधबुद्धिः। यथा—

**इववद्वायथाशब्दाः समाननिभसन्निभाः।**
**तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः॥**
**प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः।**
**सदृक्सदृशसंवादिसजातीयानुवादिनः॥**
**प्रतिबिम्बप्रतिच्छन्दसरूपसमसम्मिताः।**
**सलक्षणसदृक्षाभसपक्षोपमितोपमाः॥**
**कल्पदेशीयदेश्यादिः प्रख्यप्रतिनिधी अपि।**
**सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिनः॥**
**समासश्च बहुव्रीहिः शशाङ्कवदनादिषु।**
**स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति॥**
**आक्रोशत्यवजानाति कदर्थयति निन्दति।**
**विडम्बयति सन्धत्ते हसतीर्ष्यत्यसूयति॥**
**तस्य मुष्णाति सौभाग्यं तस्य कान्तिः विलुम्पति।**
**तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति॥**
**तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते।**
**तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति॥**
**तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः।**
**उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः॥**[20]

अभिधालक्षणाव्यञ्जनाभिः अमी सादृश्यसूचकाः शब्दाः प्रकाशिता भवन्ति। एतेषु इव-वत् -यथादयः शब्दा अभिधया सादृश्यं बोधयन्ति, तुल्यादिशब्दाः सादृश्यविशिष्टेषु शक्ता भवन्ति अत एवार्थसादृश्यस्य प्रतीतिः एभिर्जायते। असूयतिनिषेधत्यादिशब्दाः सादृश्यस्य लक्षका, अनुकरोत्यादयः सादृश्यस्य व्यञ्जकाः सन्तीति विशेषः। इव, वत्, वा, यथा, समान, निभ, सन्निभ,

तुल्य, संकाश, नीकाश, प्रकाश,प्रतिरूपक, प्रतिपक्ष, प्रतिद्वन्द्वि, प्रत्यनीक, विरोधिन्, सदृक्, सदृश, संवादी, सजातीय, अनुवादी, प्रतिबिम्ब, प्रतिच्छन्द, सरूप, संमित, सम, सलक्षण, सदृक्ष,आभा, सपक्ष, उपमित, उपमा, कल्पप्रत्ययः, देश्यप्रत्ययः देशीय, प्रख्य, प्रतिनिधि, सवर्ण, तुलित, अन्यून, अनून, अहीन, बहुव्रीहिसमासः, कर्मधारयसमासः ,स्पर्धते, जयति, द्वेष्टि, द्रुह्यति, प्रतिगर्जति, आक्रोशति, अवजानाति, कदर्थयति, निन्दति, आडम्बयति, सन्धत्ते, हसति, ईर्ष्यति, असूयति, मुष्णाति, विलुम्पति, विगृह्णाति, अधिरोहति, धत्ते, विगाहते, तमन्वेति, तमनुबध्नाति, तच्छीलम्, तन्निषेधति, तस्यानुकरोतीत्यादयः शब्दाः सादृश्यवाचकाः।वैयाकरणसिद्धान्ते इवाद्याः शब्दा उपमायाः द्योतका एव सन्ति न वाचका निपातत्वादुपसर्गवत्। प्रोक्तञ्च भूषणे—

**द्योतकाः प्रादयो येन निपाताश्चादयस्तथा।**

**उपास्येते हरिहरौ लकारो दृश्यते यथा॥**[21]

तथाप्यालङ्कारिकाणां सिद्धान्ते इवादीनां वाचकत्वमेव। तद्बीजन्तु केषाञ्चिद्वैयाकरणानां मते क्वचिदेतेषां वाचकत्वमपि। तदुक्तञ्च हरिणा—

**निपाता द्योतकाः केचित्पृथगर्थाभिधायिनः।**

**आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः॥**[22]

अहो कवेरप्रतिमं पाण्डित्यम्। गभीरं तलस्पर्शिवैदुष्यञ्चात्र पदे पदे संलक्ष्यते काव्यादर्शकारस्य।

सविशेषणरूपकस्योदाहरणत्वेनायं श्लोकः समुदाहृतः—

**हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः।**

**जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः॥**[23]

अत्रानुष्टप्शोभा सार्थवती संभूता। गङ्गाया विष्णोः पादात्प्रसूतेर्धावल्याच्च ध्वजपटत्वारोप इति। अत्र शिरोलग्नेति विशेषणेन समग्रस्य युक्तस्य केतोः यदीदृशं रूपं सपताकध्वजरूपं भगवतश्चरणे तस्य सपताकध्वजस्य समर्पणात् विशेषणविशिष्टस्य पदार्थस्यारोपात् सविशेषणरूपकमेतत्। व्यतिरेकरूपकमित्थमुदाहरति—

**चन्द्रमाः पीयते देवैर्मया त्वन्मुखचन्द्रमाः।**

**असमग्रोऽप्यसौ शश्वदयमापूर्णमण्डलः॥**[24]

अत्र गौणमुख्यचन्द्रमसोः मुखविध्वोः सम्पूर्णमण्डलत्वासम्पूर्णमण्डलत्वाभ्यां वैधर्म्ययोगाद् व्यतिरेकरूपकमिदम्। सुरैः असम्पूर्णमण्डलोऽपि **असौ चन्द्रमाः सर्वदा पीयते** अर्थात् अयं चन्द्रः

कदाचिद् वर्धते कदाचिच्चापक्षीयते। **चन्द्रमाः पीयते** इत्यनेन सुधारसपानमत्र व्यज्यते। त्वन्मुखचन्द्रमास्तु पूर्णबिम्बो भवति। अभेदप्रतीतिपूर्वकभेदपर्यवसानं यत्र भवति तत्रायमलङ्कारः।

शब्दार्थयोरप्रतिमं सौन्दर्यं प्रत्याख्याति दण्डिनः प्रतिभापाटवमनुष्टब्वृत्तनिबद्धेनानेन पद्येन।

क्रियादीपकं यथा—

**मन्दो गन्धवहः क्षारो वह्निरिन्दुश्च जायते।**
**चर्चाचन्दनपातश्च शस्त्रपातः प्रवासिनाम्॥**[25]

अत्र सर्ववाक्यान्वयिनः **जायते** इति क्रियापदस्य मध्यगतत्वान्मध्यगतं क्रियादीपकमिदम्। श्लोकरमणीयतात्र गरीयसी। एतदेवाभिलक्ष्य महाकविक्षेमेन्द्रः प्रत्यपीपदिदमित्थम्—

**पुराणप्रतिबिम्बेषु प्रसन्नोपायवर्त्मसु।**
**उपदेशप्रधानेषु कुर्यात्सर्वेष्वनुष्टुभम्॥**
**नानावृत्तविशेषास्तु कवेः शस्तस्य शासनात्।**
**यान्ति प्रभोरिवात्यन्तमयोग्या अपि योग्यताम्॥**[26]

आशीर्वचनाक्षेपस्योदाहरणं यथा—

**गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः।**
**ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्॥**[27]

कीदृशीयं चारुता पद्यस्यास्य यद्बलाद् मनोऽत्रैव रमते। त्वयि गते मम त्वदायत्तजीविताया मरणमवश्यम्भावि, मरणात्परतश्च पुनर्जन्मप्रसङ्गे यत्र भवदास्थितिस्तत्रैव जन्मशासे, येन भवद्दर्शन-जन्या तृप्तिरासाद्यतेति भावार्थः।

भाग्यस्यानुल्लङ्घनीयत्वं विश्वव्यापि भवतीति अर्थान्तरन्यासमुखेनेत्थं ब्रूते—

**भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि।**
**पश्य गच्छत एवास्तं नियतिः केन लङ्घ्यते॥**[28]

भाग्यस्यातिक्रमणं केनापि कर्तुं न पार्यते। समर्थकार्थस्य विश्वव्यापित्वादयमर्थान्तरन्यास इति।

**पयोमुचः परीतापं हरन्त्येव शरीरिणाम्।**
**नन्वात्मलाभो महतां परदुःखोपशान्तये॥**[29]

अत्राप्यर्थान्तरन्यासरामणीयकमतिशयेन व्यज्यते।

विभावनाया उदाहरणे श्लोकचमत्कारो भूयान् दृश्यते। तद्यथा—

**अनञ्जितासिता दृष्टिर्भ्रूरनावर्जिता नता।**
**अरञ्जितोरुणश्चायमधरस्तव सुन्दरि॥**[30]

हे सुन्दरि! तव दृष्टिः अनाकलितकज्जला अपि श्यामा वर्तते। तव भ्रूः अनाकृष्टा अपि वक्रीभूता वर्तते, तवायमधरः रञ्जनद्रव्येणारक्तीकृतोऽपि रक्तकान्तिः विद्यते। अत्रासितत्वनतत्वारुणत्वरूपाणि कार्याणि अञ्जनावर्जनरञ्जनस्वरूपैः प्रसिद्धैः हेतुभिर्विना दर्शितानि स्वाभाविकत्वं व्यञ्जयन्ति।

अतिशयोक्त्यलङ्कारमित्थमुदाहरति ग्रन्थकारो दण्डी—

**मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः।**
**क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः॥**[31]

अत्र ज्योत्स्नायाः श्वेतत्वं मल्लिकापुष्पाद्यभिन्नतया वर्ण्यमानं समधिकश्वेततया प्रतीयते इत्यतिशयोक्तिः। अत्र चन्द्रिकाया वर्णनमेवाभीष्टम्, चन्द्रिकाया श्वेतत्वं मल्लिकाकुसुमचन्दनादीनां श्वेताभया सह मिलतीति कृत्वा चन्द्रिकाया एव प्रशंसाऽत्र विहिता वर्तते।

हेतुत्वलङ्कारस्यास्मिन्नुदाहरणे श्लोकमसृणत्वं प्रसादगुणवेष्टितं हृदयावर्जकं प्रीतिकरञ्च वर्तत इत्युदारणं प्रदर्श्यते—

**अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः।**
**उत्पादयति सर्वस्य प्रीतिं मलयमारुतः॥**[32]
**गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।**[33]

उदाहरणेऽस्मिन् ज्ञापकहेतुरलङ्कारो विद्यते। इहापि श्लोकरमणीयता लोकोत्तराह्लादजनक-ज्ञानगोचरतेति। अस्फुटो वाक्यविन्यासः, सुललिता, मधुरिमा, वर्णसंयोजनञ्चामीषां पद्यानां सातिशयं वैशिष्ट्यमिति।

इतोऽपि द्वित्राण्युदाहरणानि दीयन्ते-

**अनभ्यासेन विद्यानामसंसर्गेण धीमताम्।**
**अनिग्रहेण चाक्षाणां जायते व्यसनं नृणाम्॥**[34]

अत्र विद्याभ्यासादीनां प्राग्भावो व्यसनोत्पत्तिं प्रति हेतुरिति प्राग्भावरूपो हेत्वलङ्कारः। इह कपाले घटो भविष्यति, इह तन्तुषु पटो भविष्यतीति प्रत्ययसाक्षिकः उत्पत्तेः पूर्वं कार्यस्याभावो यः स प्रागभावः।

**गतः कामकथोन्मादो गलितो यौवनज्वरः।**

**क्षतो मोहश्च्युता तृष्णा कृतं पुण्याश्रमे मनः॥**[35]

अत्र कामकथादीनां पूर्वोत्पन्नानां ध्वंसाभावः पुण्याश्रमगमनं प्रति हेतुरिति। ध्वंसाभावरूपो हेत्वलङ्कारोऽत्र।

**वनान्यमूनि न गृहाण्येता नद्यो न योषितः।**
**मृगा इमे न दायादास्तम्भे नन्दति मानसम्॥**[36]

अत्र **अमूनि वनानि** स्वेष्टाशनादिविहाराण्यपि न गृहाणि अर्थाद्दुःखातिरेकप्रदातृगृहभिन्नानि इत्येवमादिरूपेण वनगृहादीनामन्योन्याभावो मानसनन्दनं प्रति हेतुरिति अन्योन्याभावरूपो हेत्वलङ्कारः।

**अत्यन्तमसदार्याणामनालोचितचेष्टितम्।**
**अतस्तेषां विवर्धन्ते सततं सर्वसम्पदः॥**[37]

अत्र अविमृश्यकारिताया अत्यन्ताभावः सर्वसम्पत्तिवृद्धिं प्रति हेतुरिति अत्यन्ताभावरूपो हेत्वलङ्कारः।

**उद्यानसहकाराणामनुद्भिन्ना न मञ्जरी।**
**देयः पथिकनारीणां सतिलः सलिलाञ्जलिः॥**[38]

अत्र चूतमञ्जरीणामुद्भेदाभावस्याभावो विरहिणीनां मरणहेतुत्वेनोपनिबद्ध इत्यभावाभावरूपो हेत्वलङ्कारः।

काव्यादर्शस्य तृतीयपरिच्छेदे यमकालङ्कारस्य साङ्गोपाङ्गवर्णनमकारि कविनेह। यमकालङ्कारनिरूपणे महाकविदण्डिनः कारयित्री भावयित्री च प्रतिभा दृश्येते। यमकालङ्कारस्याहत्य पञ्चदशाधिकत्रिशतानि भेदा भवन्ति।

पादचतुष्टयगतमव्यपेतमादिभागयमकमुदाहरतीत्थम्—

**रमणी रमणीया मे पाटलापाटलांशुका।**
**वारुणीवारुणीभूतसौरभा सौरभास्पदम्॥**[39]

अत्र **रमणी रमणी**, **पाटला पाटला**, **वारुणी वारुणी**, **सौरभा सौरभा** इत्येतेषु चतुर्ष्वपि चरणेष्वादिगताव्यपेतो यमकाऽलङ्कारो विद्यते।

वसन्ते नायिकादूती नायकं वक्ति—

**सालं सालम्बकलिकासालं सालं न वीक्षितुम्।**
**नालीनालीनबकुलानाली नालीकिनीरपि॥**[40]

सा अलं सालम्बम्बिकासालं सालं न वीक्षितुं न अलीन् आलीनबकुलान् आली नालीकिनीः अपि इति पदपाठः। अत्रापि यमकालङ्कारस्य सौन्दर्यं सहृदयहृदयानां प्रीतिदायकमिति।

महायमकस्येयं विच्छित्तिरत्रानुष्टुप्छन्दसा प्रकटिता दण्डिना—

**समानयासमानया समानयासमानया।**
**स मा न यासमानया समानयासमानया॥**[41]

समानया, असमानया, समानमासमानया, सः, मा, न, या, असमानया, समानय, असम, अनया इति पदच्छेदः।

केवलकण्ठ्यवर्णविन्यासादेकस्थाननियमोदाहरणमिदमत्रेत्थं प्रदर्श्यते—

**अगा गाङ्गाङ्गकाकाकगाहकाघककाकहा।**
**अहाहाङ्क खगाङ्कागकङ्कागखगकाकक॥**[42]

चतुर्वर्णनियममुदाहरतीत्थम्—

**रे रे रेरूरुरूरोरुगागोगोगाङ्गगागगुः।**
**किं केकाकाकुकः काको मा मामामाममामम॥**[43]

त्रिवर्णनियममुदाहरति—

**देवानां नन्दनो देवो नोदनो वेदनिन्दिनः।**
**दिवं दुदाव नादेन दाने दानवनन्दिनः॥**[44]

द्विवर्णनियमस्योदाहरणं यथा—

**सूरिः सुरासुरासारिसारः सारससारसाः।**
**ससार सरसीः सीरी ससूरूः स सुरारसी॥**[45]

एकवर्णनियममुदाहरति यथा—

**नूनं नुन्नानि नानेन नाननेनानननानि नः।**
**नानेना ननु नानूनेनैनेनानानिनो निनीः॥**[46]

अत्रेत्थमन्वयसरणिः— अनेन अननेन नः अननानि न नुन्नानि न, अनूनेन एनेन अनान्निनीः इनः ना अनेनाः न। अत्र केवलेन नकारेण निबन्धादेकवर्णनियमो बोध्यः।

इत्थं **शब्दार्थयोर्द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेदिति** भट्टनायकवाक्येनात्र शब्दार्थयोर्द्वयोरप्यपूर्ववस्तुनिर्माणक्षमया प्रज्ञया अलोकसामान्यं किमप्यनिर्वचनीयं वस्तुतत्त्वं सहृदयाभिलषणीयचमत्कारसाररसनिःष्यन्दमानमभिव्यक्तं कविपुङ्गवेन दण्डिना।

सत्यमेवोक्तं श्रीमदानन्दवर्धनाचार्यपादैः विषमबाणलीलायाम्—

**न च तेषां घटतेऽवधिः न च ते दृश्यन्ते कथमपि पुनरुक्ताः।**
**ये विभ्रमाः प्रियाणामर्था वा सुकविवाणीनाम्॥**[47]

इदञ्चादिवृत्तं मन्दामन्दमतीनां सर्वेषामपि हिताहितौपयिकबोधनक्षममनायासेनेति नात्र केषाञ्चिदपि शङ्काकणिकावसरः। तस्मादिदमवादि क्षेमेन्द्रेण पण्डितेन्द्रेण—

**शास्त्रं कुर्यात्प्रयत्नेन प्रसन्नार्थमनुष्टुभा।**
**येन सर्वोपकाराय याति सुस्पष्टसेतुताम्॥**[48]

**तथ्यसूत्राणि—**

1. ध्वन्यालोकः, 1/5
2. रघुवंशम्, 14/70
3. गुरुमुखादधीतम्
4. सुवृत्ततिलकम्-2/4
5.काव्यादर्शः-1/1
6. काव्यादर्शः- भूमिकाभागः
7. तत्रैव- 1/4
8. तत्रैव- 1/6
9. तत्रैव- 1/7
10. महाभाष्यम्-पश्पशाह्निकम्।
11. काव्यादर्शः-1/8
12. तत्रैव- 1/9
13. तत्रैव- 1/10
14. सुवत्ततिलकम्, 3/5
15. काव्यादर्शः-1/48
16. तत्रैव- 1/49
17. तत्रैव- 1/51
18. तत्रैव- 1/57
19. तत्रैव- 1/82
20. तत्रैव- 2/57-65
21. वैयाकरणभूषणसारः- निपातार्थविचारः
22. वाक्यपदीयम्
23. काव्यादर्शः-2/81
24. तत्रैव-2/90
25. तत्रैव-2/105
26. सुवृत्ततिलकम्- 3/9-10
27. काव्यादर्शः- 2/141
28. तत्रैव- 2/172
29. तत्रैव- 2/173
30. तत्रैव- 2/201
31. तत्रैव-2/215
32. तत्रैव- 2/236
33. तत्रैव- 2/244
34. तत्रैव- 2/247
35. तत्रैव- 2/248
36. तत्रैव- 2/249
37. तत्रैव- 2/250
38. तत्रैव- 2/251
39. तत्रैव- 3/18
40. तत्रैव- 3/34
41. तत्रैव- 3/71
42. तत्रैव- 3/91

43. तत्रैव- 3/92
44. तत्रैव- 3/93
45. तत्रैव- 3/94
46. तत्रैव- 3/95
47. **ण अ ताण घडइ ओही ण अ ते दीसन्ति कह वि पुनरुत्ता।
जे बिब्भमा पिआणं अत्था वा सुकइवाणीणम्॥** लोचनटीकायाम्
48.सुवृत्ततिलकम्- 3/6

**सन्दर्भग्रन्थसूचिः—**

1.काव्यादर्शः-आचार्यरामचन्द्रमिश्रः, चौखम्बाविद्याभवनम्, वाराणसी, 1958
2.काव्यादर्शः- पण्डितरङ्गाचार्यशास्त्री, भाण्डाकरप्राच्यविद्यामन्दिरमुद्रणालयः, पुण्यपत्तनम्, 1938
3.ध्वन्यालोकः- आचार्यजगन्नाथपाठकः, चौखम्बाविद्याभवनम्, वाराणसी, 2011
4.रघुवंशम्-वासुदेवशर्मा पणशीकरः, पाण्डुरङ्गजावजी, निर्णयसागरमुद्रणालयः, मुम्बई, सप्तमसंस्करणम्-1929
5. सुवृत्ततिलकम्-पण्डितब्रजमोहनझा, चौखम्बासंस्कतसीरिजऑफिस, वाराणसी, 1968
6. वृत्तरत्नाकरः-डॉ. आर्येन्द्रशर्मा, संस्कृतपरिषद्, उस्मानियाविश्वविद्यालयः, हैदराबाद, 1969
7. वैयाकरणभूषणसारः-कौण्डभट्टः, चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली,2017
8.वाक्यपदीयम्(ब्रह्मकाण्डम्)-भर्तृहरिः,चौखम्बा विद्याभवन, वाराणसी2006
9.महाभाष्यम्- पतञ्जलिः, चौखम्बा कृष्णदासअकादमी, वाराणसी,2008

***

 ISSN-2321-6948

# भवभूतेः रूपकेषु नारीचेतना

**डॉ. अनिलकुमारः**
**(साहित्यविभागः)**
श्रीरघुनाथकीर्तिपरिसरः, देवप्रयागः

संस्कृतविदुषामेका विस्तृतपरम्परा विद्यते यथा प्राचीनकाले तथैव वर्तमानकालेऽपि सा ज्ञायते एव। संस्कृतजगति एतादृशा एव विद्वांसो प्रो.जे.भानुमूर्तिमहोदयाः, ये खलु विद्यन्ते केन्द्रीयसंस्कृतविश्वविद्यालयस्य भोपालपरिसरस्य निदेशकाः सुरभारतीसेवकाः। अनेके ग्रन्था एतेषां प्रसिद्धास्सन्ति येषु शिवसूत्र-चारुचर्या-चित्रबन्धरामायणग्रन्थानां सम्पादनकार्यमेतैः कृतम्। शिक्षाशास्त्रे अधिगममनोविज्ञानम्, संस्कृतशिक्षणे मातृभाषाप्रभावश्चेति ग्रन्थद्वयं रचितम्। भाषाज्ञानदृष्ट्या संस्कृत-तेलगु-हिन्दी-आङ्ग्लादिषु समानाधिकारस्तेषां वर्तते। ते राष्ट्रियान्ताराष्ट्रियसङ्गोष्ठीषु नैकानि शोधपत्राणि प्रस्तुतवन्तः। प्रशासनकौशलेन सह वाक्पटुता, सत्यनिष्ठता, स्वाध्यायपरायणता, शास्त्रव्यसनता चैतेषां जीवनस्य मुख्यांशाः विद्यन्ते। प्रो.जे.भानुमूर्तिमहोदयानाम् अभिनन्दनग्रन्थनिर्माणं भवतीति श्रुत्वा मनसि महान् आनन्दः सञ्जातः।

**भानुवद्राजते येषां कान्तिश्च सुमनोहरा।**
**संस्कृते सततं तेषां क्रियतेऽत्राभिनन्दनम्।** (अनिलः)

एतेषाम् अभिनन्दनग्रन्थाय भवभूतेर्नाटकेषु नारीचेतनेति विषयमधिकृत्य मयाऽत्र किंचिदत्र विचार्यते- यद्यपि सन्ति बहवः संस्कृतसाहित्ये स्त्रीचिन्तनपरकाः काव्यग्रन्थाः, येषु स्त्रीणामुत्थानपक्षमवलम्बय व्यंग्यमाध्यमेन किमप्याक्षिपन्ति कवयः। कालिदासस्य, भारवेः, माघस्य, श्रीहर्षस्य, भवभूतेः, छज्जूरामशास्त्रिणः, विष्णुदत्तत्रिपाठिनः, रेवाप्रसादद्विवेदिनः, अभिराजराजेन्द्रमिश्रस्य च विषयेऽस्मिन् योगदानमस्माभिस्सर्वैर्नूनमेव दृग्गोचरीक्रियते। परञ्च भवभूतेः साहित्ये स्त्रीचिन्तनस्य सर्वे पक्षा यथा समुपस्थापिता दृश्यन्ते तथाभूतं चिन्तनमहं मन्ये नैव कुत्रपि संस्कृतसाहित्ये

अवलोक्यते। दोषद्रष्टा लोकस्तत्र दोषराहित्यं तथैवासम्भवं दृश्यते यथा काव्ये। स्त्रीणां विषये लोकस्य दृष्टिर्भिन्नैव विद्यते-

**सर्वथा व्यवहर्त्तव्यं कुतो ह्यवचनीयता।**

**यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः।।** (उत्त.च.1.5)

परञ्च भवभूतिस्तु 'दुर्जनो जनः' इत्यनेन संकेतयति यत्ते दुर्जनाः। स्त्रीणां चरित्रन्तु आजन्मनो पवित्रमतस्तासां नान्यतः शुद्धिमर्हति-

**उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।**

**तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः।।** (उत्त.च.1.13)

अत एव लोकम्प्रति निर्दिशति भवभूतिः -

**क्लिष्टो जनः कुलधनैरनुरञ्जनीय**

**स्तन्नो यदुक्तमशुभं न हि तत्क्षमं ते।**

**नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा**

**मूर्ध्नि स्थितिर्न चरणैरवताडनानि।।** (उत्त.च.1.14)

प्राकृतिकसौन्दर्यरूपस्य कुसुमस्य देवानां शिरसि स्थितिर्भवति न तु चरणयोः। स्त्रियाः महत्त्वं कथमप्यपाकर्तुं न शक्यते किमर्थमिति चेत्-

**इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो**

**रस्यावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।**

**अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः**

**किमस्या न प्रेयो यदि परमसह्यस्तु विरहः।।**(उत्त.च.1.38)

'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता' इति कदाचिदेवमेव प्रतिपादयितुमिच्छति भवभूतिरपि- 'त्वया जगत्पुण्यानि' इत्यनेन। यतोहि रामस्य मुखेन-'अपूर्वकर्मचण्डालमयि मुग्धे! विमुञ्च माम्' तात्कालिकसमाजे स्त्रीतिरस्कारस्य पश्चातापं कविः द्योतयति। तस्या विरहे विर्पयस्तो जीवलोकोऽवसितं च जीवितप्रयोजनम्। स्वजीवनस्यासहाय्ये समयेऽपि- 'नमो रघुकुलदेवताभ्यः' इत्यनेन स्त्री समाजस्य परम्परां चिन्तनं प्रकटयति। 'सीताविवासनपटोः करुणा कुतस्ते' वचनैरपि तथाभूत एव पश्चातापो व्यज्ञते। 'न

किंचिदपि कुर्वाणः सौख्यैर्दुःख्यान्यपोहति' एतादृशः स्त्रीसमाजो भवभूतेरादर्शभूतः। सा च करुणस्य मूर्तिः, प्रकृतिरूपा च- यत्र द्रुमा अपि मृगा अपि बान्धवो मे यानि प्रियासहचरश्चिरमध्यवात्सम्। ईश्वरमपि कदाचित्सैव सञ्जीवयतीति तमसामुखेन कविना सङ्केतितः - 'त्वमेव ननु कल्याणि सञ्जीवय जगत्पतिम्।' किमर्थमिति चेत्- 'प्रियस्पर्शो हि पाणिस्ते तत्रैष निरतो जनः'। दम्पत्योर्महत्त्वस्य स्नेहस्य च पराकाष्ठाया विषये-

**अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।**
**आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते।।** (उत्त.च.3.17)

इति प्रतिपादयता कविना गृहस्थे तस्या महत्त्वं कीदृशमिति प्रकटितम्। सैव पुरुषाय- 'त्वं जीवितं त्वमसि मे हृदयं द्वितीयं त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।' इत्यादिभिश्शब्दैर्द्योतिता भवभूतिना। तां विना संसारस्य दशा कीदृशी भविष्यतीत्यपि सूचयति-

**हा हा देवि! स्फुटति हृदयं ध्वंसते देहबन्धः**
**शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि।**
**सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा**
**विश्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि।।**(उत्त.च.3.38)

तामेव स्तौति जनकस्य मुखेन कविः-

**यया पूतम्मन्यो निधिरपि पवित्रस्य महसः**
**पतिस्ते पूर्वेषां खलु गुरूणां गुरुतमः।**
**त्रिलोकीमङ्गल्यामवनितललीनेन शिरसा**
**जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम्।।** (उत्त.च.4.10)

स्त्रीपुंसोः समभावः कवेरभीष्टः- 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः' इत्यनेन प्रतिभाति। स कुत्रचित्कालिदासमेवानुकरोति- पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति।' एतादृशेन वाक्येन। राजर्षिजनकस्य वचनं पुत्रीम्प्रति सञ्ज्ञातव्यवहाररोषं प्रकटयति-

**एतद्वैशसवज्रघोरपतनं शश्वन्ममोत्पश्यतः।**
**क्रोधस्य ज्वलितुं धगित्यवसरश्चापेन शापेन वा।।**(उत्त.च.4.25)

स्त्रियाः स्वप्रियभावः स्वगुणैरेव वर्धते- 'प्रियभावः स तु तया स्वगुणैरेव वर्धितः' अतः स्त्रीपुंसोः सत्यस्नेहं हृदयं परस्परं प्रीतियोगेन जानाति- हृदयं त्वेव जानाति प्रीतियोगं परस्परम्। महावीरचरिते अभिज्ञानशाकुन्तलमिवार्थो हि कन्या परकीय एवेति साम्यत्वेन स्वविचारान् प्रस्तौति पद्येनानेन कविः-

**कन्यारत्नमयोनिजन्म भवतामास्ते वयं चार्थिनो**
**रत्नं चेत्क्वचिदस्ति तत्परिणमत्यस्मासु शक्रादपि।**
**कन्यायाश्च परार्थतैव हि मता तस्याः प्रदानादहं**
**बन्धुर्वो भविता पुलस्त्यपुलहप्रष्ठश्च सम्बन्धिनः॥**(महा.च.1.30)

कन्याधनं तादृशं यत्कोऽपि जनो याचितुं शक्नोति कमपि-

**साधारण्यानिरातङ्ककन्यामन्योऽपि याचते।**
**किं पुनर्जगतां जेता प्रपौत्रः परमेष्ठिनः॥**(महा.च.1.31)

मानवः स्वदुष्कर्मणः फलमवश्यमेव भुङ्क्ते तादृशं लङ्काया वचसा यथार्थं ग्रन्थकारो द्योतयति- 'अथवा कोऽत्र भवतः उपालम्भः? आत्मन एव दुश्चरितमेतद्विपरिणमति। पुनश्च अलकाया अपि तथैव- एवं किलेयं लोकयात्रा।' शत्रोर्विषयेऽपि कर्माकर्मणोरेवाधार अलकामुखेनैव- 'यस्य रिपुः स गतः। तच्च गतम्। सम्प्रति तु निसर्गसुहृदस्माकं त्रिभुवनप्रसिद्धबन्धो दाशरथिः।' लोकमर्यादायाः पालनमनिवार्यमित्यपि तत्र ज्ञायते-

**पतिव्रतामयं ज्योतिर्ज्योतिषान्येन शोध्यते।**
**इदमाश्चर्यमथवा लोकस्थित्यनुवर्तनम्॥** (म.च.7.4)

कदाचित्कान्तासम्मिततयोपदेशयुजे भवतीत्यपि सङ्केतयति मन्दोदर्या माध्यमेन- 'कथमीदृशेऽपि रिपुपक्षाभियोगे संवृत्ते राजकार्यानपेक्षो लक्ष्यते महाराजदशकन्धर इति।' तत्रैव च 'निखिलवलीमुखचक्रानुगतसुग्रीवाग्रेसरः सह कनिष्ठो दाशरथी राम इति श्रूयते। महाराज! समुदायः खलु शघट्ठते।' एवं वारं वारं स्त्रियाः उद्बोधनं सदुपदेशश्च नित्यं पुरुषं प्रेरयति सन्मार्गं गन्तुम्। मालतीमाधवे स्त्रियाः सौन्दर्यमेवं प्रस्तौति कविः-

**सा रामणीयकनिधेरधिदेवता वा**
**सौन्दर्यसारसमुदायनिकेतनं वा।**

**तस्याः सखे! नियतमिन्दुकलामृणाल**
**ज्योत्स्नादिकारणमभून्मदनश्च वेधाः॥**(मा.मा.1.22)

परञ्च द्वितीयाङ्के तस्याः स्वकुलम्प्रत्यादरभावं मर्यादां च कथमपि नोलङ्घनीयमित्यपि प्रदर्शयति-

**ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी**
**दहतु मदनः किं वा मृत्योः परेण विधास्यतः।**
**मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया**
**कुलममलिनं न त्वेवायं जनो न च जीवितम्॥**(मा.मा.2.2)

स्त्रियाः सर्वाणि रूपाणि कवेरभीष्टानि कथमिति चेत्-

**प्रेयो मित्रं बन्धुता वा समग्रा**
**सर्वे कामा शेवधिर्जीवितं वा।**
**स्त्रीणां भर्ता धर्मदाराश्च पुंसामि-**
**त्यन्योन्यं वत्सयोर्ज्ञातमस्तु॥**(मा.मा.6.18)

प्राणान्तेऽपि भर्तुः स्मरणं सा कथमपि नैव विस्मरति, सैव विद्यते तस्याः स्नेहस्य पराकाष्ठा- 'हा देव माधव! परलोकगतोऽपि युष्माभिः स्मर्तव्योऽयं जनः। न खलु स उपरतो यस्य वल्लभः स्मरति।' कुत्रचित्क्रूरतापि तस्यां दृश्यते, परञ्च वस्तुतस्तन्नैवाभीष्टं कवेरभिमतम्। तस्या वीरतावचनम्- 'विरमतु परिकम्पः कातरे क्षत्रियासि' आधुनिकसमाजस्य स्त्रीपक्षं कथमपि परिपोषयति। सर्वगुणसम्पन्नायां स्त्रियां कामदेवस्य ब्रह्मणश्चोभयोरेवाभियोगो दृश्यते- 'तत्सङ्गमं प्रति सखे! न हि संशयोऽस्ति, यस्मिन्विधिश्च मदनश्च कृताभियोगः।' तां विना संसारस्य सौख्यं तुच्छमेव-'मम तु यदियं याता लोके विलोचनचन्द्रिका, नयनविषयं जन्मन्येकः स एव महोत्सवः। पिता स्वकन्यां प्रदानाय सर्वथा समर्थो भवतीति कामन्दकीमुखेन प्रतिपादयति-'प्रभवति निजस्य कन्यकाजनस्य देवः'। एवं भवभूतिना स्वचिन्तनं कुत्रचिद् अभिधेयेन कुत्रचिच्च व्यंग्येन प्रतिपादितमिति दिक्।

**सन्दर्भितग्रन्थाः-**

1. उत्तररामचरितम्, महाकविभवभूतिः, डा-रमाकान्तत्रिपाठी, चौखम्बासुरभारतीप्रकाशन, वाराणसी, 2005
2. महावीरचरितम्, महाकविभवभूतिः, आचार्यरामचन्द्रमिश्रः, चौखम्बा विद्याभवन, वाराणसी, 1968
3. मालतीमाधवम्, महाकविभवभूतिः, गंगासागरराय,चौखम्बा विद्याभवन, वाराणसी, 2002
4. भवभूति की काव्यभाषा का शैली(रीति) वैज्ञानिक अध्ययन, डा-ब्रजभूषण त्रिपाठी, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी, 1998
5. भवभूति के रुपकों की शास्त्रीय मीमांसा, दिलीप कुमार त्रिपाठी, प्रतिभा प्रकाशन, दिल्ली, 2015
6. संस्कृत साहित्य का समीक्षात्मक इतिहास, कपिलदेव द्विवेदी, विश्वविद्यालय प्रकाशन, वाराणसी, 2017
7. संस्कृतवाङ्मय का बृहद् इतिहास (काव्य खण्ड), बलदेवउपाध्याय, उत्तरप्रदेशसंस्कृतसंस्थान, लखनऊ

***

# लक्षणा तेन षड्-विधा

**डॉ.हरीश**
सह-आचार्या, संस्कृत-विभाग, किरोड़ीमल महाविद्यालय,
दिल्ली विश्वविद्यालय, दिल्ली – 110 007

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥**[1]

इस शोध-पत्र का मुख्य उद्देश्य आचार्य मम्मट रचित काव्यप्रकाश के आधार पर लक्षणा के स्वरुप एवं इसके भेदोपभेद का विवेचन प्रस्तुत करना है। स्वमत स्थापना के लिए साहित्य-शास्त्र के मर्मज्ञ विद्वानों व उनके ग्रन्थों के वाक्यों को उद्धृत किया गया है।

संस्कृत-साहित्य में शब्द से अर्थ-ग्रहण की प्रक्रिया हेतु 'व्यापार', 'शक्ति', 'वृत्ति' आदि पदों का प्रयोग किया गया है। काव्यशास्त्र में शब्द तीन प्रकार के हैं - 'वाचक', 'लाक्षणिक' एवं 'व्यञ्जक'। अर्थ भी तीन प्रकार के हैं - 'वाच्यार्थ', 'लक्ष्यार्थ' एवं 'व्यंग्यार्थ'। इन तीनों शब्दों से अर्थ-निष्पत्ति हेतु तीन प्रकार के व्यापार भी स्वीकार किये गये हैं - 'अभिधा व्यापार', 'लक्षणा व्यापार' एवं 'व्यञ्जना व्यापार'। आचार्य मम्मट भी इसी त्रिक् को स्वीकार करते हैं।

'अभिधा' एकमात्र संकेतितार्थ का ज्ञान कराती है जो कि श्रवण-समनन्तर होता है, अर्थात् यह संकेतितार्थ से निगडित है। लक्षणा के द्वारा संकेतितार्थ से भिन्नार्थ का ज्ञान होता है, जो कि स्वाभाविक (संकेतित) न होकर आरोपित होता है अर्थात् वक्ता अपनी स्वेच्छा से उस पद का संकेतितार्थ से भिन्नार्थ में प्रयोग करता है, जैसे - 'इयं गौः' का संकेतितार्थ 'गोत्व जाति से युक्त पशु विशेष' अर्थ होता है जबकि लक्षणा के द्वारा यदि स्त्री-जाति के लिये प्रयुक्त हो तो उसका अर्थ 'सरल' होता है, जो न तो स्वाभाविक है और न ही ईश्वरोद्भावित है। अभिधा स्वाभाविकी और ईश्वरोद्भाविका वृत्ति है परन्तु लक्षणा स्वाभाविकेतरा और ईश्वर-अनुद्भाविता-वृत्ति है। इस प्रकार, अभिधा शब्द-वृत्ति है व लक्षणा अर्थ-वृत्ति है।

**'लक्ष्यते ज्ञायते अभिधेयभिन्नोऽर्थः यया इति लक्षणा'**। जिस प्रकार अभिधा संकेतितार्थ से निगडित है, उसी प्रकार लक्षणा **'हेतुत्रय'** से निगडित है। एक के भी अभाव में लक्षणा कार्य नहीं

[1] काव्यप्रकाश :– प्रथमोल्लासः, कारिका.1

कर सकती । अर्थ-प्रतीति के लिए जहाँ अभिधा-शक्ति समाप्त होती है, वहीं लक्षणा-वृत्ति कार्य करती है - —

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया ॥**[1]

इस कारिका के प्रथम व तृतीयांश में लक्षणा के हेतुओं का विवेचन किया गया है, द्वितीयांश में लक्षणा का अर्थ और उसकी सीमा प्रतिपादित की गई है व चतुर्थांश में इस वृत्ति का नाम व अभिधा से अन्तर प्रतिपादित किया गया है । लक्षणा के तीन हेतु हैं — मुख्यार्थबाध, मुख्यार्थ-योग एवं रूढि अथवा प्रयोजन ।

**1. मुख्यार्थबाधः** — अभिधा के द्वारा प्रतिपादितार्थ के पश्चात् भी अर्थ का ज्ञान न होना, मुख्यार्थबाध कहलाता है, जो प्रत्यक्ष प्रमाण के द्वारा विरुद्ध होता है, अतः बाध का अर्थ 'अन्वय की अनुपपत्ति (प्रतीति न होना)' है —

**'अन्वयानुपपत्तिः लक्षणाबीजम्'** । जैसे - 'गङ्गायां घोषः' में गङ्गा पद में **'आधारोऽधिकरणम्'**[2] सूत्र से सप्तमी-विभक्ति है, जिसका अर्थ 'गङ्गा के प्रवाह में कुटिया' है । यहाँ अर्थ-ज्ञान में पूर्ण विघ्न-भित्ति है । कभी-कभी वक्ता के तात्पर्य में भिन्नता होने के कारण भी लक्षणा-शक्ति कार्य करती है, वहाँ अन्वय के स्थान पर तात्पर्य पद का प्रयोग किया जाता है, जैसे- **'काकेभ्यो दधि रक्ष्यताम्'** — यहाँ 'काकेभ्यः' पद जाति का बोधक न होकर, दधि-अपघातक तत्त्वों का बोधक होता है । यही वक्ता का तात्पर्य है, जिसे श्रोता को ग्रहण करना चाहिये ।

**2. मुख्यार्थ-योगः — योगः** पद का अर्थ **सम्बन्ध** है अर्थात् संकेतितार्थ के साथ लक्षणा द्वारा प्रतीत होने वाले अर्थ के साथ सम्बन्ध होना चाहिए, अन्यथा यदि केवल जल-प्रवाह अर्थ किया जाएगा तो वह जल-प्रवाह गङ्गा का न होकर, किसी भी नदी का हो जाएगा । अतः संकेतितार्थ के साथ लक्ष्यार्थ का सम्बन्ध होना आवश्यक है । यह सम्बन्ध पाँच प्रकार का है — सामीप्य-सम्बन्ध, सादृश्य-सम्बन्ध, समवाय-सम्बन्ध, वैपरीत्य-सम्बन्ध एवं कार्य-कारण-सम्बन्ध —

**अभिधेयेन सामीप्यात् सादृश्यात् समवायतः ।**
**वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा स्मृता ॥**

---

[1] काव्यप्रकाश :— द्वितीयोल्लासः, कारिका.9

[2] अष्टाध्यायी -— 1.4.45

**1) सामीप्य-सम्बन्ध — 'गङ्गायां घोषः'** में 'गङ्गा के प्रवाह में कुटिया' है, इस अर्थ की बाधा होने पर, **'गङ्गा-तट'** अर्थ लिया जाता है, यही सामीप्य-सम्बन्ध है।

**2) सादृश्य-सम्बन्ध** — यह समानता एकमात्र गुणगत होती है, इसे **'उपचार'** कहते हैं। 'उपचार' का अर्थ है — दो नितान्त-भिन्न पदार्थों में जाति-गत भिन्नता होने पर भी, **गुणगत सादृश्य** होने के कारण, दोनों वस्तुओं को एक साथ कहा जाता है, यथा, **चन्द्र-मुखम्** । गुणगत सादृश्य होने के कारण, इसे **गौणी लक्षणा** कहते हैं — **'गुणेभ्यः आगतत्वात् इति गौणी'** । गौणी लक्षणा को ही **'सोपचारा लक्षणा'** कहते हैं —

**यत्र-यत्र सादृश्य-सम्बन्धः अथवा उपचार-सम्बन्धः अथवा गुणगत-सम्बन्धः, तत्र-तत्र सोपचारा अथवा गौणी लक्षणा भवति । यत्र-यत्र सादृश्येतर-सम्बन्धः अथवा निरुपचार-सम्बन्धः, तत्र-तत्र शुद्धा लक्षणा भवति ।**

यथा, **गौर्वाहीकः** शब्द में, गौ पद का अर्थ बैल है, जो पशु-जाति का वाचक है — सास्नादिमत्वं गौः। वाहीक पद का अर्थ है — वाहीक (पञ्चनद अथवा पञ्जाब) प्रदेश का रहने वाला । दोनों में जातिगत समानता न होकर गुणगत समानता है। जिस प्रकार बैल जड़ और मूर्ख है, उसी प्रकार, वाहीक भी जड़ और मूर्ख है। मूर्खत्व और जड़त्व गुणगत समानताएँ हैं, अतः यहाँ **गौणी लक्षणा** है।

**3) समवाय-सम्बन्ध** — समवाय पद का अर्थ समूह या आधिक्य है। जहाँ समवाय, आधिक्य या समूह-प्रदर्शन करने की इच्छा हो, वहाँ व्यक्ति इसका अर्थ लेता है । यथा, **'कुन्ताः प्रविशन्ति'** — 'भाले प्रवेश कर रहे हैं' — इसे सुनकर अर्थ प्रतीति में बाधा उत्पन्न होती है क्योंकि कोई भी वस्तु स्वयमेव क्रिया नहीं कर सकती । वह क्रिया-युक्त तभी होगी जब चेतन का सम्बन्ध होगा । अतः सम्यगर्थावबोध हेतु **'धारिणः'** शब्द का ग्रहण कर, **'कुन्तधारिणः प्रविशन्ति'** अर्थ लिया जाता है।

**4) वैपरीत्य-सम्बन्ध** — जहाँ विधिपरक वाक्य का निषेधपरक एवं निषेधपरक वाक्य का विधिपरक अर्थ लिया जाता है। जैसे—

**उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।**
**विदधदीदृशमेव सदा सखे ! सुखितमास्स्व ततः शरदां शतम् ॥**

किसी कुटिल व्यक्ति के प्रति उसके सुहृन्मित्र की उक्ति है — हे मित्र ! तुमने मेरे प्रति जो उपकार किये हैं, उनका कहाँ तक वर्णन किया जाए ! तुमने अपना समस्त सौजन्य मुझ पर प्रकट कर दिया ! बस यूँ ही करते रहो व जीवनभर आनन्दित रहो ! यहाँ यद्यपि यही कहा जा रहा है कि आपने मेरा कल्याण किया

है, आप सुखी रहें व सौ वर्षों तक जीवित रहें, परन्तु इसका वास्तविक अर्थ ठीक विपरीत है कि आपने मेरा अपकार किया है, आप सदैव दुःखी रहें व मृत्यु को प्राप्त हों।

**5) कार्य-कारण-सम्बन्ध** — जहाँ अपने विलक्षण गुण के द्वारा किसी पदार्थ को अन्य का कारण स्वीकार किया जाए वह कार्य-कारण-सम्बन्ध है, यथा — **'आयुर्घृतम्'** — घी आयु है। यद्यपि घृत भी दुग्ध, दही सदृश आयुवर्धक है, परन्तु दुग्ध, दही आदि की अपेक्षा घृत में सर्वाधिक पुष्टि-वर्धक तत्व होने के कारण, इसे ही आयु का कारण कह दिया गया।

**3. रूढि** — जिस प्रकार सरिता के प्रवाह में लुढ़कते-लुढ़कते कोई पत्थर विशेष-आकृति ले लेता है, उसी प्रकार प्राचीन काल से चला आता हुआ कोई पद, अन्य अनेक अर्थों का परित्याग कर, एक विशेष अर्थ को ग्रहण कर लेता है, जो उस पद का ही वाच्यार्थ जैसा बन जाता है व उसके अन्यार्थों की प्रतीति श्रवण-समनन्तर नहीं होती, जैसे — कुशल, प्रवीण, ननद, मण्डप, द्विप, द्विरेफ आदि। इन शब्दों के वास्तविक अर्थ भिन्न होने पर भी, ये अन्यार्थ की प्रतीति कराते हैं, यथा —

**कुशलः (कुशान् लाति) —— रूढि अर्थ चतुर।**
**प्रवीणः (प्रकृष्टो वीणायाम्) —— रूढि अर्थ दक्ष।**
**ननद (न नन्दयति बहुकृतेऽपि) —— रूढि अर्थ ननद (पत्युः भगिनी)।**
**मण्डप (यत्र स्थित्वा मण्डः पीयते) —— रूढि अर्थ वितान, चँदोवा।**
**द्विप (द्वाभ्यां पिबति) —— रूढि अर्थ ब्राह्मण।**
**द्विरेफः (यत्र द्वौ रकारौ) —— रूढि अर्थ भ्रमर।**

**4. प्रयोजन** — जब व्यक्ति मुख्यार्थबाध का आश्रय लेकर ऐसे वाक्यों का प्रयोग करता है, जिसमें प्रयुक्त पद आपस में एक-दूसरे के अर्थ से समझौता नहीं करते हैं तो वहाँ उसका विशेष उद्देश्य या प्रयोजन होता है। ऐसे वाक्यों को साभिप्राय वचन कहा जाता है क्योंकि वह विदग्ध (विद्वान्) द्वारा उच्चरित वाक्य हैं, जैसे— **'गङ्गायां घोषः'**। यहाँ वक्ता लक्षणा का आश्रय लेकर **शैत्य और पावनत्व** की प्रतीति कराने के लिए इस प्रकार का प्रयोग करता है। शैत्य और पावनत्व की प्रतीति 'गङ्गा तटे घोषः' कहने से नहीं हो सकती।

## लक्षणा के भेदोपभेद

आचार्य विश्वनाथ ने शास्त्रीय पद्धति के अनुसार रूढि, प्रयोजन, गौणी तथा शुद्धा एवं पदगत व वाक्यगत आदि भेदक-तत्वों के आधार पर लक्षणा के कुल 80 भेदों का निरूपण किया है।

यह शास्त्र-सम्मत होते हुए भी व्यावहारिक नहीं। अतः मम्मटादि अन्य आचार्यों ने लक्षणा के मुख्य छः भेद किए हैं। आचार्य मम्मट के अनुसार लक्षणा के छह भेद इस प्रकार हैं —

1. उपादान-लक्षणा (यथा, कुन्ताः प्रविशन्ति)।
2. लक्षण-लक्षणा (यथा, गङ्गायां घोषः)।
3. सारोपा-शुद्धा-लक्षणा (आयुर्घृतम्)।
4. साध्यवसाना-शुद्धा-लक्षणा (आयुरेवेदम्)।
5. सारोपा-गौणी-लक्षणा (गौर्वाहीकः)।
6. साध्यवसाना-गौणी-लक्षणा (गौरयम्)।




**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।**

ISSN-2321-6948

**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥**[1]

**सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।**

**विषय्यन्तः कृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका ॥**[2]

**भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा ।**

**गौणौ शुद्धौ च विज्ञेयौ लक्षणा तेन षड्-विधा ॥**[3]

**1. उपादान लक्षणा —** उप+आ+दान — यह वह लक्षणा है जो अपनी सिध्दि के लिये ऐसे तत्व को खींच लेती है जिससे उसकी सिध्दि हो जाए । यही व्याकरण-सम्मतार्थ लेकर आचार्यों ने अपना लक्षण प्रस्तुत कि0या — **स्वसिद्धये पराक्षेपः —** अपने मुख्यार्थ की सत्ता (सिध्दि) के लिये अर्थात् मुख्यार्थ का अस्तित्व बना रहे। परन्तु यह अस्तित्व तभी रह सकता है जब **'पर'** अर्थात् ऐसे अर्थ को **'आक्षेप'** अर्थात् खींच ले जिससे उस मुख्यार्थ की सिध्दि हो जाए, अन्यथा वह व्यर्थ होता है, जैसे, **`कुन्ताः प्रविशन्ति'** । यहाँ **'कुन्त'** अपने वाच्यार्थ (निर्जीव वस्तु) प्रवेशन क्रिया को सिध्द करने के लिए **'धारिणः'** अर्थ को खींच (ग्रहण कर) लेता है, जिससे उसके अर्थ की सिध्दि हो जाती है । इसे **अजहल्लक्षणा** भी कहते हैं ।

**2. लक्षण-लक्षणा** — उपादान-लक्षणा के ठीक विपरीत लक्षण-लक्षणा होती है अर्थात् इसमें पद दूसरे के अर्थ की सिध्दि के लिए, अपने मुख्यार्थ का परित्याग कर देता है — **परार्थं स्वसमर्पणम्** । यथा, **गङ्गायां घोषः** — यहाँ गङ्गा पद अपने मुख्यार्थ, **`जल-प्रवाह'** अर्थ, का परित्याग कर **'तट'** की प्रतीति करा देता है क्योंकि गङ्गा में घोष की सिध्दि तट पर ही सिध्द हो सकती है, प्रवाह में नहीं । इसे **जहल्लक्षणा** भी कहते हैं ।

**3. सारोपा-शुद्धा-लक्षणा — आरोपेण सहिता सारोपा —** अर्थात् जहाँ उपमान और उपमेय — आरोप्यमान विषय और आरोपित विषय — दोनों का कथन किया जाए, वहाँ सारोपा-शुद्धा-लक्षणा होती है, जैसे, **आयुर्घृतम्** । यहाँ **कार्य-कारण-सम्बन्ध** के द्वारा **कार्य 'आयु'** व **कारण 'घृत'** का कथन किया गया है, अतः यह सारोपा-शुद्धा-लक्षणा है । यहाँ **रूपक अलङ्कार** की प्रतीति होती है ।

**4. साध्यवसाना-शुद्धा-लक्षणा — साध्यवसाना (अवसानेन सहिता)** एक की समाप्ति हो जाए । अर्थात् कार्य-कारण आदि दोनों का कथन न कर केवल कार्य का कथन किया जाए, जैसे, **आयुरेवेदम्** । यहाँ **अतिशयोक्ति अलङ्कार** की प्रतीति होती है ।

**5. सारोपा-गौणी-लक्षणा — गुणगत समानता** के आधार पर उपमान व उपमेय का प्रयोग एक साथ किया जाता है, यथा — **गौर्वाहीकः** ।

---

[1] काव्यप्रकाश :– द्वितीयोल्लासः, कारिका.10

[2] काव्यप्रकाश :– द्वितीयोल्लासः, कारिका.11

[3] काव्यप्रकाश :– द्वितीयोल्लासः, कारिका.12

**6. साध्यवसाना-गौणी-लक्षणा —** गुणगत समानता के आधार पर मात्र उपमान का ही प्रयोग किया जाए व उपमेय की समाप्ति हो, जैसे **— गौरयम्** । यहाँ जडत्व व मूर्खत्व के प्राचुर्य के कारण **उपमेय का ही अवसान** (लोप) कर दिया गया है।

इस प्रकार, सारांश रूप में, यह कथन युक्ति-युक्त है कि आचार्य मम्मट के द्वारा प्रतिपादित लक्षणा के भेदोपभेद अत्यन्त व्यावहारिक व बोधगम्य हैं।

**डॉ.हरीश**
**सह-आचार्या, संस्कृत-विभाग, किरोड़ीमल महाविद्यालय,**
**दिल्ली विश्वविद्यालय, दिल्ली — 110 007.**
Email : dr.ms.harish@gmail.com
Mobile : 9971570612, 8368612488.
Res. Address : C4-A/60-A, Janak Puri,
New Delhi — 110 058.

## परिशिष्ट
## सन्दर्भ-ग्रन्थ-सूची

1. **काव्यप्रकाश —— (आचार्य मम्मट)** आचार्य विश्वेश्वर सिद्धान्तशिरोमणि, ज्ञानमण्डल लिमिटेड, वाराणसी, 1960.
2. **साहित्य-दर्पण — (आचार्य विश्वनाथ)** डॉ. सत्यव्रत सिंह, चौखम्बा विद्याभवन, वाराणसी, 1982.
3. **अष्टाध्यायी-भाष्य-प्रथमावृत्ति** - पं. ब्रह्मदत्त जिज्ञासु, (भाग 1-3), रामलाल कपूर ट्रस्ट, बहालगढ़, सोनीपत, हरयाणा, 1989.

*****

 ISSN-2321-6948

# तात्पर्यार्थविमर्शः

**डॉ. मनमोहनतिवारी,**
सहयुक्त-आचार्यः, संस्कृतविभागः,
प्रो. राजेन्द्रसिंह(रज्जू भय्या)विश्वविद्यालयः
प्रयागराजः, उत्तरप्रदेशः

पदवाक्यप्रमाणविषये बहुभिः बहुश्रुतमस्माभिः। तत्र भवन्तः वाक्यार्थविचारप्रवीणाः मीमांसकाः पदार्थसंसर्गरूपं वाक्यार्थतात्पर्यतया वाच्यतामुखेन च बोधयन्तः सन्ति। अतो संसर्गः यत्र पदवृत्तिबोधस्य अविषयत्वात् वाक्यस्य तात्पर्या नाम्न्या वृत्त्या प्रतिपाद्यमानः प्रतीतिविषयकः भवति इति उच्यते। अयं तात्पर्यार्थः वाच्यलक्ष्यव्यङ्ग्यव्यतिरिक्तो पदसमूहगम्यः भवति। अतः अभिहितानां पदार्थानां अन्वयं संसर्ग वा बोधयन्ति इति अभिहितान्वयवादिनः कथ्यन्ते। गौरवात् पदानां पदार्थमात्रे शक्तिः न च पदार्थसंसर्गरूपे अर्थे अभिधायाः अप्रवृत्तेः शक्तिस्तत्र। अतः अभिहितान्वयवादमते पदार्थसंसर्गरूपः वाक्यार्थः एव तात्पर्यार्थः पदवृत्तिबोध-अविषयकः अपदार्थोऽपि वाच्यार्थविलक्षणशरीरः वाक्यार्थरूपेण बोधविषयको भवति।

अभिधया परस्परान्वितानाम् अर्थानाम् उपस्थितिं बोधं वा मन्वानः अन्विताभिधानवादिनः इति उच्यन्ते। वाच्य एव वाक्यार्थः इति अन्विताभिधानवादिनः। आकाङ्क्षायोग्यतासन्निधिवशाद्वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थः विशेषवपुः अपदार्थोऽपि वाक्यार्थ समुल्लसति इति अभिहितान्वयवादिनां मतम्।

आचार्यमम्मटोऽपि तात्पर्यार्थोऽपि केषुचित् इति सूत्रेण निर्देशं चकार। अत्र जिज्ञास्यते यत् तात्पर्यं तदर्थत्वं तत्परत्वं वा एकमेव वस्तुतत्त्वं भवति। उताहो पृथक्-वस्तुतत्त्वमिति स्यात्। तत्र तात्पर्यं तदर्थत्वं तत्परत्वं वा एकमेव वस्तु पृथक्-पृथक् पदोपादादपि समानप्रतीतिविषयकत्वादविशिष्टम्। तेषु सर्वेषु अर्थेषु अभिधैव व्यापारः। न च लक्षणा न वा व्यञ्जनेति। आचार्यमम्मटः स्वप्रणीते काव्यप्रकाशे शब्दार्थयोः स्वरूपं प्रतिपादयन् वाचकलाक्षणिकव्यञ्जकशब्दानां विभागं कृत्वा तेषां वाच्यलक्ष्यव्यङ्ग्यभूतान् अर्थान् प्रतिपाद्य तात्पर्यार्थमपि तात्पर्यार्थोऽपि केषुचित् इति सूत्रयाञ्चक्रे। पदसमूहगम्यः वाक्यार्थः वाच्यः तात्पर्यार्थोऽपि वा तात्पर्याख्यया वृत्त्या प्रतिपाद्यमानत्वात्। वाच्यतः भिन्नः तात्पर्याख्यया आहोस्वित् वाच्यरूप एव असौ तात्पर्यार्थः। तदर्थत्वं तत्परत्वं वा वाच्यतो अभिन्नः। वाच्यतावच्छेदकस्वीकारात्। यथा-

**तात्पर्याख्याशक्तिः**

स वाक्यार्थः परं प्रधानतया प्रतिपाद्यः येषां यानि तत्पराणि पदानि तेषां भावः तात्पर्यम् , तद्रूपा शक्तिः तात्पर्याख्या शक्तिरिति-

**तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।**
**तात्पर्यार्थं तदर्थं च वाक्यं तद्बोधकं परे॥**

साहित्यदर्पणः, द्वितीयपरिच्छेदः कारिका २०

उदाहरणं यथा - घटं करोति इत्यनेन घटवृत्तिकर्मत्वानुकूलाकृतिरूपः अर्थः बोध्यते अथवा घटमानय इत्यत्र घटनिष्ठकर्मतानिरूपकमानयनम् इति। अत्र घटशब्दस्य अभिधया घटरूपार्थोपस्थितिः जायते, अम् प्रत्ययस्य च कर्मतारूपोऽर्थः प्रतिपद्यते। आनय इति क्रियाशब्दस्य आनयनानुकूलो व्यापारः। अत्र वृत्तिता, निष्ठा, निरूपकता वा न कस्यचिद् शब्दस्य अर्थः अतः अपदार्थोऽपि वृत्तितातात्पर्यवशाद् अनयोः संसर्गविधया भासते इति स्पष्टम्। कुमारिलभट्टस्य अभिहितान्वयवादे अभिधया पदानां पदार्थोपस्थितिः जायते पदार्थानां सम्बन्धरूपवाक्यार्थोपस्थितिरपि वाक्यस्य तात्पर्याख्यया शक्त्या भवति। अतः तात्पर्यार्थः उच्यते। प्रभाकरनये तु अभिधया परस्परान्वितपदार्थोपस्थिति: जायते। अत: मतेऽस्मिन् पदार्थसंसर्गरूप: वाक्यार्थ; वाच्य एव भवति।

**वाच्य एव वाक्यार्थ: इति अन्विताभिधानवादिन:॥ काव्यप्रकाशे द्वि, उ.**

वस्तुत: आचार्य: मम्मट: काव्यप्रकाशस्य द्वितीयोल्लासे अभिहितान्वयवादं प्रतिपादयामास, पञ्चमोल्लासे तु अन्विताभिधानवादं विस्तरेण निरूपयामस्। येप्याहु: अन्विताभिधानवादिन: यत्, शक्तिग्रहणप्रक्रियायां तत्रस्थ: बालक: उत्तमवृद्धस्य शब्दान् प्रत्यक्षभूतेन श्रोत्रेन्द्रियेण श्रवणविषयीकरोति, तदनन्तरं गवानयनादिकार्यं चक्षुषा गोचरीकरोति तथा चेष्टारूपेण अनुमानेन मध्यमवृद्धस्य व्यवहारान् निश्चिनोति। यदयमेतदर्थविषयकज्ञानवान् ।

**शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति**
**श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया।**
**अन्यथाऽनुपपत्या तु बोधेच्छक्तिं द्वयात्मिकाम्।**
**अर्थापत्याऽवबोधेत सम्बन्धं त्रिप्रमाणकम्॥** का.प्र. ५.१,२

अन्विताभिधानवादिमते वाच्यवाचकभावसम्बन्धं प्रत्यक्ष- अनुमान-अर्थापत्तिप्रमाणै: बाल: अनुमिनोति। पश्चात् आवापोद्वापाभ्यां वाक्यान्तर्वर्ति पदार्थमपि मनसि धारयति।

 ISSN-2321-6948

# रसाः

**प्रिया चौहानः**

रसवादिनः आचार्याः रसं काव्यस्य 'आत्मा' इति मन्यन्ते। रसस्य महत्त्वमनुभूय भरतमुनिना लिखितम्- 'न हि रसादृते कश्चिदर्थः प्रवर्त्तते'।

कविराजजगन्नाथेन 'रसः' काव्यस्य सर्वस्वं वर्त्तते इति उद्घोषयता उक्तं- 'वाक्यं रसात्मकं काव्यम्' इति।

रसनिरुपणप्रसङ्गे पण्डितराजजगन्नाथः लिखति सहृदयानां हृदये विद्यमानवासनारुपस्थायिभावः एव विभावानुमान-संचारिभावैः अभिव्यक्तः सन् रसरुपेण परिणतः भवति। तदुच्यते साहित्यदर्पणे-

**विभावेनानुभावेन व्यक्तः संचारिणा तथा।**
**रसतामेति रत्यादिः स्थायी भावः सचेतसाम्।।**

विश्वनाथस्य रसविवेचनायां भट्टनायकस्य अभिनवगुप्तस्य च प्रभावः परिलक्ष्यते। विश्वनाथेन रसास्वादं वर्णयता उक्तम्- तमोगुणं रजोगुणं च अभिभूय सत्वगुणस्य आधिक्येन च रसस्य साक्षात्कारो भवति। सत्त्वोद्रेकस्थित्यामेव रसोऽनुभूयते। अतः असौ रसोऽलौकिकः, अखण्डः, स्वप्रकाशानन्दः, चिन्मयः, ब्रह्मानन्दसहोदरश्च भवति। लोकोत्तरचमत्कारप्राणः सन् अलौकिककविभावादित्वाद् अपि अयम् लौकिकसहृदयेभ्यो अलौकिकमानन्दं प्रददाति। अतोऽयम् अलौकिकः इति। तदुच्यते –

**सत्त्वोद्रेकादखण्डः स्वप्रकाशानन्दचिन्मयः।**
**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः।।**
**लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः।।**

आचार्यमम्मटकृतरसस्वरुपं यथा –

**कारणान्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः।।**
**विभावाः अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।**

**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः।।**

**रसभेदनिरूपणम् –**

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।**

**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृता।।**

सहृदयहृदये संस्काररूपेण विद्यमानाः स्थायिरत्यादिभावा विभावादिभिरेव रसरूपाणाभिव्यज्यन्ते। नाट्यशास्त्रस्य कारिकामेवात्र मम्मटः समुद्धृतवान्। भरतमुनिना नाट्येऽवस्थानुकरणत्वाद् अभिनयात्मकत्वाद्वाऽष्टौ रसाः स्वीकृताः। तत्र शान्तरसं विवृत्यापि सर्वविषयोपरतिरूपत्वाद् निवृत्तिप्रधानत्वाद्वा नाट्ये शान्तो नोररीकृतः। अभिनवगुप्तेन 'अष्टौ नाट्ये रसाः स्मृता' इत्युपलक्षणं सम्मत्य नागान्दनाटकादौ शान्तस्यैव प्राधान्यं वीक्ष्य च शान्तस्याप्यभिनेयत्वाद् गीतवाद्यविरोधत्वाच्च काव्ये नाट्ये च शान्तस्यापि प्रतिश्रवः मानितः। मम्मटेनापि 'शान्तोऽपि नवमो रसः' कारिकाया तद्वत्तत्सत्ता प्रतिष्ठापिता। प्राणिषु पुरुषार्थचतुष्ट्ये च कामस्यैव प्रामुख्यमिति मत्वा भरतेन शृङ्गारः प्रथमो रसः स्मृतः। यथा हि भोजराजः – 'शृङ्गारमेव रसनाद् रसमामनाम' इति। शृङ्गारस्यानुगमको हास्यो द्वितीयः, तत्प्रतिकूलत्वात् करुणः तृतीयः, करुणसम्बद्धाद् रौद्रश्चतुर्थः, तत्सम्बद्धाद् वीरः पञ्चमः, तद्विरोधत्वाद् भयानकः षष्ठः, तद्वद्विभावादिकारणत्वाद् बीभत्सः सप्तमः, तत्पश्चादष्टमोऽद्भूतो रसो वर्णितः। रूपगोस्वामिना भक्तिरसः कविराजविश्वनाथेन च वत्सलः कैश्चिच्च स्नेहोऽपि रसः इति स्वीकृतः। आचार्याभिनवगुप्तेन मम्मटेन चैतेषां भावध्वनावेवान्तर्भावः कृतः।

नवरसाणाम् स्थायीभावः, वर्णः, देवता च –

| रसः | स्थायीभावः | वर्णः | देवता |
|---|---|---|---|
| शृङ्गारः | रतिः | श्यामः | विष्णुः |
| हास्यः | हासः | शुक्लः | प्रमथः |
| करुणः | शोकः | कपोतः | यमराजः |
| रौद्रः | क्रोधः | लोहितः | रुद्रः |
| वीरः | उत्साहः | सुवर्णः | महेन्द्रः |
| भयानकः | भयम् | कृष्णः | यमराजः |
| बीभत्सः | जुगुप्सा | नीलः | महाकालः |
| अद्भुतः | विस्मयः | पीतः | गन्धर्वः |
| शान्तः | शमः | कुन्दपुष्पवत् | श्रीनारायणः |

# ज्योतिषशास्त्रदृष्ट्या रक्तचापरोगविचारः

**डॉ.भूपेन्द्र कुमार पाण्डेयः**
अं.सहायकाचार्यः, ज्योतिषविभागः
के.सं. वि.वि.भोपालपरिसरः

ज्योतिषशास्त्रं प्रत्यक्षशास्त्रमित्यनेनाभिधानेन विद्वद्भिः कीर्त्यते। तत्रापि फलितभागः मानवाय प्रत्यक्षमुपकरोति। मानवः बहुभिः कष्टैः त्रस्तः ज्योतिर्विदः शरणमागत्य स्वसंदेहान् नष्ट्वा आनन्दं सन्तोषं च लभते। शास्त्रस्यास्य गतिः सर्वष्वपि प्रश्नेषु स्पष्टतया विद्यते। तथैवाद्यत्वे मानवस्य मनसि शरीरे कार्यक्षेत्रे वा याः काश्चनपि समस्या जायन्ते तासां प्रत्यक्षीकरणे दर्पणवत् सहायं करोति शास्त्रमिदम्। तद्वदेव रोगज्ञानेऽपि शास्त्रमिदं दीपवत् मार्गदर्शनं करोति। रोगाणामुत्पत्तौ मूलकारणमस्माकं आहारविहारव्यवस्थैव। दूषिताहारविहारत्वादेव अधुना समाजः नितनूतनरोगैः संत्रस्तो जायते। प्रायशः बाल्यकालादेव जातक: रोगपीडितः भूत्वा जीवति खलु संसारेऽस्मिन्। तेषु रोगेष्वेव रक्तचापसंज्ञक: रोगः अन्येषां रोगाणां जनको भूत्वा सर्वान् पीडयति। सम्प्रति अस्य रोगस्य बाहुल्यं दृश्यते समाजे। अस्य द्वौ भेदौ चिकित्साविद्भिः कथितौ। प्रथमो निम्नरक्तचापोऽपरश्च उच्चरक्तचापः। ज्योतिषशास्त्रदृष्ट्या रोगस्यास्य कथं परिज्ञानं भवेदित्याकांक्षया प्रस्तूयते शोधपत्रमिदम्। रोगज्ञानाय ज्योतिषशास्त्रस्य वैशिष्टयम्

कः रोगः कदा व जायेत्। चिकित्साविधौ तु रोगप्राप्ते सत्येव परिज्ञानं भवति। परमत्र ज्योतिषशास्त्रे रोगसंक्रमणात् पूर्व क्वचिदपि जन्मनः पूर्वमपि रोगस्य परिज्ञानं भवति। नास्ति तादृशी काप्यन्या विधा यत्र यया वा एवं ज्ञानं लभते। शास्त्रमिदं न केवलं रोगस्य प्राप्तिं सूचयति अपितु क: रोगः भविष्यति, कदा तेन रोगेण जातको ग्रस्तो भविता इत्येतेषां प्रश्नानां समाधानाय उपकरोतीदं शास्त्रम्। अतएव अस्याध्ययनं महत्त्वपूर्ण भजते।। रोगज्ञानाय कारकतत्वानिफलितशास्त्रे जन्मकुण्डल्यां प्रश्नकुण्डल्यां वा रोगज्ञानाय षष्ठमः भावः प्रधानतमो भवति। यथोक्तं मन्त्रेश्वरेण

**रोगस्य ज्ञानमपि रोगभावस्थितैर्ग्रहैर्वा व्ययमृत्युसंस्थैः।**
**रोगेश्वरेणापि तदन्वितैर्वा द्वित्र्यादि सम्वादवशाद् वदन्तु ॥ फलदीपिका १४-०१**

भावोऽयं यत्रोगज्ञानाय षष्ठमः भावः प्रथमतया दृष्टव्यः। षष्ठे स्थितैः ग्रहैरपि रोगज्ञानं करणीयम्। षष्ठेशेन रोगः विचारणीयः। अष्टमस्थेन ग्रहेण रोगः ज्ञातव्यः। द्वादशस्थेन ग्रहेण रोगः

अवलोकनीयः। षष्ठेशेन सह स्थितेन ग्रहेण च रोगः चिन्तनीयः। एतैः सर्वैरपि सूचितेन रोगेणैव जातकः पीडितो भवति। रोगनिर्णयाय अधिकाधिकपरिस्थितीनां विचारः करणीयो भवति। रक्तचापरोगाकारकाः ज्योतिषशास्त्रे रक्तचापरोगस्य साक्षात् निदानं नैव प्राप्यते। परमपि सततनुसन्धानकारणादस्य रोगकारणमपि स्पष्टं जायते। ज्योतिषानुसारेण भौमः रक्तकारकः एवमेव विभिन्नरासायनिकतत्त्वैः रक्तसंचार नियन्त्रणकारकश्च कथितः। चंद्रः रसरक्तादीनां संचारकः। सूर्यः शरीरे तापकारकः, हृदये रक्तसंवाहकश्च। गुरुः वसाकारकश्च कथ्यते। अत एतेषां यथाधिक्यमशुभलक्षणं दृश्यते तथैवास्य रोगस्य प्रभावः शरीरे जायते। रक्तचापरोगकारकग्रहनक्षत्राणिशास्त्रे रक्तचापकारका: ये ग्रहादयः सन्ति तेऽत्र कथ्यन्ते। नक्षत्राणां प्रयोजनमिदं यदेतेषु नक्षत्रेषु पापग्रहाणां संचरणवशात् रोगस्य सूचना प्राप्यते। यथाह- मूल, पू.फा., उ.फा., शतभिषा, धनिष्ठायां 3 -4 चरणयोः, पू.भा. 1, 2, 3 चरणेषु पापग्रहाणां भुक्तिवशाद् रक्तचापपीडा भवति। मकरराशिः असामान्यरचापस्य निर्देशं करोति। अत्र एवं प्रतिभाति यदा मकरराशौ पापप्रभावो भवति तदा रोगोत्पत्तिर्जायते। यदा भौम: राहुसूर्यादिपापग्रहै: प्रभावितो भवति तदा जातक: उच्चरक्तचापपीडितो भवति। सूर्यग्रहः, चतुर्थभावश्च हृदयेन सम्बन्धितौ स्तः। हृदैव रक्तं सम्पूर्ण शरीरे नुद्यते। एवं ज्ञायते यत् रक्तकारकग्रहाणां पापयुतिर्भवति तदा रक्तचापेन सह हृदयपीडापि जायते। लग्ने पापग्रहाणां दुष्प्रभावादपि रोगप्राप्तिर्भवति तद्यथा

**सूर्यो भौमस्तथा राहुः शनिमूर्तौ यदा स्थितः।**
**सन्तापो रक्तपीडा च सौम्यः सर्वनिरोगता।**

रक्तचापकारकयोगाः पूर्वोक्तमेव रोगस्यास्य नाम्नैव उल्लेख: नैव प्राप्यते। परमपि अध्ययनानुसारेण ये योगाः प्राप्ताः ते क्रमशः प्रस्तूयन्ते

1- योगः - चतुर्थ नीचस्थो भौम: उच्चरचापं जनयति।

2- योगः कर्के क्षीणः पापयुतश्च चन्द्रः रक्तचापं सूचयति।

3- वृश्चिके भौमः रक्तचापेन पीडयति।

4- रविर्यदा हस्तगतः कुजो वा तदाऽस्थिभङ्गं विषजं भयञ्च।
करोतिदाहं ज्वलानाच्च चित्तं शुभेक्षिते त्वग्विरलत्वमेति।

योगविशेषणम्- तृतीये सूर्यभौमयोः स्थिति: दाहज्वलनञ्च जनयति। तापकारणादेव रोगपीडा भवति।

**अध्ययनेन प्राप्तयोगा:**

5- बलवान् भौमः उच्चरक्तचापेन पीडयति।

6- यदा भौमः लग्ने, द्वादशे, द्वितीये चतुर्थे वा भवति तदा उच्चरक्तचापो भवति।

7- भौमस्य सूर्येण राहुणा केतुना सह वा सम्बन्धः उच्चरक्तचापस्य सूचको भवति।

8- यदा भौमः राहुकेतुभ्याम् सह युतिं करोति तदा रक्तचापेन सह हृद्रोगस्यापि प्राप्तिर्भवति।

9- यदा भौमः पापैः प्रभावितो भवति तदा रक्तचापपीडा जायते।

10- चतुर्थेशस्य भौमेन सह युतिः रक्तचापं सूचयति।

11- उच्चस्थ:/स्वगृहस्थ: भौम: लग्ने, द्वादशे, द्वितीये चतुर्थ वा भूत्वा रक्तचापेन पीडयति।

12- पापपीडितः चंद्र: निम्नरक्तचापस्य कारको भवति।

13- प्रायशः शनिचंद्रयोः युतिकारणादपि निम्नरक्तचापः प्राप्तः।

14- राहुचंद्रयोः युतिरपि रक्तचापरोगं जनयति।

15- केतुचंद्रयोः युतिः रक्तचापं सूचयति।

16- चन्द्रस्य भौमेन सह युति: अथवा सूर्येण सह युतिः रक्तचापं जनयति।

17- चतुर्थ पापकर्तरी योगोऽपि रक्तचापं जनयति।

18- भौमस्य कथमपि दुर्बलता रक्तचापं जनयति।

जन्मतिथि: ०४-०३-१९५९, जन्मसमयः १०:४५ रात्रिः, रीवानगरम् अस्योदाहरणं पश्यामः -

बुधः राहुसूर्याभ्यां युतः। तत्र सूर्यो द्वादशेशोऽस्ति। अतः लग्नेशः पीडितः सन् रोगं जनयति। लग्नात् चन्द्राच्च चतुर्थ भौमशनिशुक्राः स्थिताः, शनिः रोगेशश्चास्ति। सूर्यात् चतुर्थेशः भौमः तस्मात् द्वादशे सूर्यबुधराहूणां युतिश्च वर्तते। नवांशे अपि चन्द्रः केतुयुतो वर्तते। निष्कर्षः- अत्र अष्टमेशभौमस्य षष्ठेशेन सम्बन्धवशात्, सूर्यराहुबुधानां युतिवशाच्च रोगस्योत्पत्ति कारणं स्पष्टमेवास्ति। फलत: जातक: अल्पवयसि एव रोगपीडितो जातः।

जन्मतिथि: ११-१०-१९८८, समयः सायम् ०६:३५, भोपालनगरम् अस्योदाहरणं पश्यामः -

अध्ययनम्रोगकारणपक्षे लग्नेशः भौमो द्वादशस्थः षष्ठस्थसूर्यबुधाभ्यां दृष्टः। सूर्यस्य गृहमपि पापप्रभावितमस्ति। लग्नात् चतुर्थेशः चन्द्रः नवांशे केतुयुतः। चन्द्रात् चतुर्थेशः शनिः तृतीयस्थः। सूर्यात् चतुर्थेशः गुरुः शनिशुक्रप्रभावयुतः नवांशे राहुप्रभावयुतश्चास्ति। निष्कर्षः- अत्र लग्नात् सूर्याच्चरोगकारणानि प्रत्यक्षतया स्पष्टानि। चतुर्थेशचन्द्रस्य च केतुना सह सम्बन्धः

रोगकारकः। परमत्र षष्ठेशो बुधः स्वगृहस्थो वर्तते अतः रोगपीडा सामान्येनैन प्राप्यते। फलतः इयं जातिका सामान्येन रक्तचापेन पीडिता अस्ति।

जन्मतिथि: १७.१२.१९५६ समयः - १०.५६ रात्रिः बरेलीनगरम् अस्योदाहरणं पश्यामः -

अत्र लग्नात् चतुर्थ बुधः चतुर्थेशश्च राहुभौमाभ्यां युतोऽस्ति। सूर्यात् चतुर्थ केतुः, चतुर्थशः शुक्र: वृश्चिकनवांशे सूर्ययुतो वर्तते। स्वगृहस्थो भौमः शनिराहुभ्यां युतोऽस्ति। निष्कर्षः- अत्र लग्नात् सूर्याच्च रोगप्राप्तिः भवति। भौमकारणादपि रोगपीडा दृश्यते। फलतः इयं जातिका उच्चरक्तचापरागेन पीडिता। शुक्र: उच्चस्थः अतः सामान्यपीडा एव प्रतिभाति। अन्यच्च

जन्मतिथिः १५.०१.१९६७ समयः - ०१.२३ दिवसे दिल्लीनगरम्, अस्योदाहरणं पश्यामः -

लग्ने राहोरुपस्थितिः, षष्ठस्थो भौमो वर्गोत्तमश्चास्ति। चन्द्राच्चतुर्थेशः शुक्रः सूर्येण सह तस्मात् द्वादशस्थो वर्तते। सूर्याच्चतुर्थ राहुः भौमगृहेऽस्ति। नवांशे चन्द्रकेत्वोः युतिरस्ति। निष्कर्षः- अत्र रोगपक्षे भौमराहुसूर्याणाम् उग्रग्रहाणां प्रभावोऽस्ति। अतोऽयं जातक: 1995 तः उच्चरक्तचापेन पीडितः जातः।

जन्मतिथि: १५.१२.१९६१ समयः - ०१.३० मध्याह्नकाले भोपालनगरम् अस्योदाहरणं पश्यामः -

अत्र लग्नाच्चंद्राच्चचतुर्थेशः बुधो भौमयुतः, षष्ठेशेन युतश्चास्ति। चन्द्राच्चतुर्थे अपि लग्नवदेव अस्ति। सूर्यात् चतुर्थेशः शनिः केतुयुतः। तत्र गुरुश्च नीचस्थोऽस्ति। निष्कर्षः- अत्र कर्कमकरयोरुपरि पापप्रभावः, उग्रग्रहाणां स्थितिरुच्चरचापरोगनिदाने स्पष्टैव।

अन्यच्च जन्मतिथि: १९.११.१९६६ समयः - ०२.३५, रात्रिकाले भोपालनगरम् अस्योदाहरणं पश्यामः -

चतुर्थेशो गुरुरुच्चस्थः। लग्नेशो बुधः केतुयुतः। चन्द्रात् चतुर्थशः भौमः द्वादशस्थः, अष्टमे भौमराशौ राहुः। सूर्यात् चतुर्थे शनिः तत्राष्टमेशभौमस्य सप्तमदृष्टिः। नवांशे लग्नेशः शनियुतः। निष्कर्षः- अत्र षष्ठेशः स्वगृहस्थोऽस्ति अतएव जातिका रक्तचापेन पीडिता सन् रोगे नियन्त्रणं करोति। परं भौमराह्वादिग्रहाणां दुष्प्रभावात् रोगकारणं स्पष्टम् भवति। अन्यदुदाहरणम्-

जन्मतिथि: २३.०७.१९५७ समयः - ०६.१५ सांयकाले रायसेननगम् -

लग्नात् चतुर्थेशः दशमस्थः। चन्द्रात् चतुर्थेशः सूर्यः, कर्के भौमेन सह स्थितः। सूर्यः पूर्ववत् तस्मात् चतुर्थ राहुरस्ति। निष्कर्षः- अत्र भौमस्य नीचत्वात् सूर्येण सह तस्य युतिरपि अतः उच्चरक्तचापपीडा जाता। परञ्च चतुर्थे पापप्रभावः नास्ति अतः रोगे नियन्त्रणं वर्तते। अन्यच्च

जन्मतिथि: ०३.०२.१९६८ समय: ०८.०४ प्रातःकाले भोपालनगरम् अस्योदाहरणं पश्यामः-

लग्ने बुधभौमयोः युतिः। चन्द्रस्य राहुशनिभ्यां सह युतिः। सूर्यात् चतुर्थेशः भौमः पूर्ववत्। नवांशेऽपि चतुर्थे राहुः। निष्कर्षः- अत्र रोगस्य हेतवः सुस्पष्टाः सन्ति। इयं जातिका निम्नरक्तचापेन पीडिता अस्ति। योगः

शनेः भौमः त्रिकस्थः भवेदथवा पापयुतः तदा रक्तचापः। योगविश्रूषणम्- अत्र शनेः त्रिकस्थ: अथवा पापयुतः भौमः रोगकारकः भवति अस्यां स्थितौ उभावपि परस्परं त्रिकस्थौ भवतः। तद्यथा-

**दायेशात्षष्ठरन्ध्र वा व्यये वा पापसंयुते।**
**गुह्यरोगो मूत्ररोगस्तापज्वरमथापि वा।**

अध्ययनेन एवमपि प्राप्यते यच्च यदा एतेषां परस्परं युतिश्चेदपि रोगो जायते।

जन्मतिथि: १३.०७.१९६७ समयः - ११.३१ प्रात:काले लखनऊनगरम् अस्योदाहरणं पश्यामः -

अत्र लग्ने शनेः प्रभावः, चतुर्थे सूर्यप्रभावः।चन्द्रात् चतुर्थे शनिदृष्टिः, परच चतुर्थेशः उच्चस्थः। सूर्याच्चतुर्थ चन्द्रः शनिप्रभावितः। केतुयुतो भौमः। नवांशेऽपि लग्ने केतुः भौमः स्वगृहस्थो वर्तते। निष्कर्षः- अत्र सूर्यशनिभौमप्रभावात् रोगपीडा जाता। फलतः जातकः 2010 तः रोगपीडितः अभवत्। तदानीं गुरोः महादशायां चन्द्रस्यान्तरमासीत्। भौमस्य अष्टमेत्वन मूत्रकृच्छ्रस्य वृषणरोगस्य वा प्रभावः ग्रन्थेषु प्राप्यते। अयं वृषणवृद्धिरोगेण पीडितश्चास्ति। अन्यच्च -

जन्मतिथि: ०४.०९.१९७५ समयः - ०७.१५ प्रात:काले जबलपुरम् अस्योदाहरणं पश्यामः -

अत्र लग्नेशः स्वराशौ उच्चस्थोऽस्ति अतएव रोगपीडा अधिका न भवितव्या। स्वगृहीचन्द्रः शनियुतः। चन्द्रात् चतुर्थेशः शुक्रः सूर्ययुतः। सूर्याच्चतुर्थ राहुभौमयोः प्रभावोऽपि रोगकारकः। निष्कर्षः- अत्र भौमः राहुणा दूषितः। शनिचन्द्रयोः युतिवशादयं निम्नरचापेन पीडितः। अन्यच्च -

जन्मतिथि: १२.०९.१९४४ समयः - ०४.४२ दिवसे Texas अस्योदाहरणं पश्यामः -

अत्र चतुर्थेशः गुरुः सूर्ययुतः चतुर्थे शत्रुस्थभौमस्य दृष्टिः। चन्द्रः राहुयुतोऽष्टमस्थः। सूर्यः धनुनवांशेऽस्ति। निष्कर्षः- अत्र लग्नचंद्रसूर्यादिस्थानेषु अग्निकारकाणां प्रभावो दृश्यते फलतः जातक: उच्चरचापेन पीडितः। योगः- चन्द्रभौमशनीनाम् एतेषां युतिः रक्तचापं जनयति। योगविश्रूषणम्-एतेषां पापग्रहाणां युतिः रोगं सूचयति। अत्र एवमप्यनुभूयते यच्च पापग्रहाणां युतिवशाद् मानसिककष्टमपि भवति।

ISSN-2321-6948

जन्मतिथि: १८.०१.१९५३ समयः - ०५.०० प्रात: नीमचनगरम् अस्योदाहरणं पश्यामः -

अत्र भौमशुक्रचंद्राणां युति तृतीये वर्तते। तत्र शुक्रः षष्ठेशः, चंद्रोऽष्टमेशश्च। द्वितीये राहुसूर्ययोरपि युतिः प्राप्यते। नवांशेऽपि चंद्रकेत्वोः युतिः। निष्कर्षः- भौमचंद्रयोः स्थितिवशाद् जातकोऽयं रक्तचापेन पीडितः। गुरोर्लग्ने नवमदृष्टिवशाद् रोगपीडा अधिका न भवति। सारांश:- रक्तचापरोगः अस्माकमसंतुलितदिनचर्यायाः दूषिताहारविहारदिकानां परिणामोऽस्ति। अस्य दुष्प्रभावात् हृद्पीडामानसिकपीडापक्षाघातमस्तिष्कापघातसदृशाः रोगा: जायन्ते। सम्प्रति चिकित्सकाः रोगप्रशमनाय प्रतिदिनमौषधिभक्षणार्थं निर्दिशन्ति। ज्योतिषशास्त्रदृष्ट्या रोगस्यास्य समाधानं भवितुमर्हति। तत्र रोगकारकस्य ग्रहस्य जपादिकं कृत्वा समाधानं कुर्यात्।।

***

# ज्यौतिषशास्त्रदृष्ट्या कालविवेचनम्

**डॉ. विन्ध्यनाथ मिश्र**
सहायक प्रोफेसर(ज्यौतिष)
राजकुमारी गणेश शर्मा संस्कृत
विद्यापीठ को. पटोरी दरभंगा(बिहार)

कालशब्दोच्चारणसमकालमेव जनानामवधानमुत्पत्तिप्रलयविषयेषु संसृज्यते। तत्र कालशब्दस्य व्युत्पादने कल् संख्याने इत्यस्माद्धातोः कर्तरि घञिप्रत्ययेन निष्पादयन्ति अभियुक्ताः। कलयति गणयति इत्यपि कालपरिभाषा भवति। तस्मात् कल् + घञ् इति स्थितौ घञावितौ उपधावृद्ध्या काल शब्दः निष्पन्नः।

कालो द्विधा एकश्च लोकसंहारकः, अन्यश्च कलनात्मकः (गणनात्मकः) इति तदुक्तं सूर्यसिद्धान्ते –

लोकानामन्तकृत कालः कालोऽन्यः कलनात्मकः[1]।
स द्विधा स्थूलसूक्ष्मत्वान्मूर्तश्चामूर्त उच्यते।।

लोकानां प्राणिनामन्तकृत् नाशकर्ता एकः कालो यमराजानुयायी प्रसिद्धः। "कालदण्डाद्यमो दण्डमिति" मारकण्डयपुराणान्तर्गत दुर्गासप्तशतिका वचनात् अन्यः कलनात्मको गणनात्मकः कालो ज्योतिषसिद्धान्ते किलेह प्रसिद्धः, स च स्थूल सूक्ष्मत्वात् मूर्तोऽमूर्तश्चोच्यते कथ्यते। स्थूलः कालो मूर्तः, सूक्ष्मश्चामूर्त इति क्रमेण कथ्यते। स्थूलसूक्ष्मकालमानपरिचयः –

प्राणादिः कथितोमूर्तस्त्रुट्याद्योऽमूर्तसंज्ञकः[2]।
षड्भिः प्राणैर्विनाडी स्यात् तत्षष्ट्या नाडिकास्मृता।।

स्वस्थपुरुषस्य श्वासोच्छ्वासान्तर्वर्ती कालः प्राणः , स च दशगुरुवर्णोच्चारणकालेन समो भवति। "गुर्वक्षरैःखेन्दुमितैरसु" रिति भास्करोक्तेः। प्राण आदिर्यस्य सप्राणादिर्विघटिकालो मूर्तः। अर्थात स्थूलत्वाद् व्यवहारे स च गणयितुं शक्यत इति भावः "सूच्याभिन्ने पद्मपत्रे त्रुटिरित्यभिधीयते" इति नारदोक्तेः" योक्ष्णोर्निमेषस्य खरामभागः स तत्परत्तच्छतभाग उक्ता त्रुटि" रिति भास्करोक्तेश्च स कालोऽति सूक्ष्मत्वान्नैव यन्त्रादिनोपलक्ष्यतेऽमूर्तत्वं तस्य युक्तमिति। अथ व्यवहारोपगित्वात् कालपरिभाषा कथ्यते। षड्भिः प्राणैरित्यादि षड्भिरसुभिरेका विनाडी विघटिका

भवति। तासां विघटिकानां षष्ट्या एका नाडिका स्मृता गणकैरिति। अङ्गुष्ठमूलगता कफवातपित्तद्यौतिका नाडी यावता कालेनैकरुपां गतिं वहति सः कालो नाडीसंज्ञः। एवं घटीयन्त्रेण यः कालः उत्पद्यते स घटी संज्ञो, दण्डयन्त्रेणोत्पन्नश्च दण्डाख्यः, एवं यन्त्रभेदेन नामभेदः। वस्तुतस्ते शब्दा एकयर्याया एव। उपसर्गेण धात्वर्थो बलादन्यत्रनीयते इत्यादिनात्र वि उपसर्गेण तत् षष्टिभागात्मकः कालो विघटिका भवतीति सर्वं ज्योतिर्विदामरोहितमेव।

एक अनादिरनन्तकालः महाकाल इति। तस्य कालस्य सृष्ट्यादौ प्रवृत्तिः। प्रवृत्तिर्नाम आदिः। प्रलये तदन्तः। ग्रथोक्तं भास्कराचार्येण अनादिरनन्तकालस्य प्रवृत्ति विषये –

लङ्कानगर्यामुदयाच्च भानोस्तस्यैव वारे प्रथमं बभूव[3]।
मघोः सितादेर्दिनमासवर्षयुगादिकानां युगपत् प्रवृत्तिः ॥
कालः पचतिभूतानि सर्वाण्येवसहात्मना ।
काले सपक्वस्तेनैव सहाव्यक्तंलयंब्रजेत॥

इति तत् कथमनाद्यनन्तः काल उच्यते। सत्यं योऽयं भगवान् मूर्तो व्यापकश्च कालस्तस्य प्राक्तनप्राकृतिकलयादनन्तरं व्यक्तिजनकानां सूर्यादिनामथवा , व्यक्तस्याव्यक्ते यद्वस्थानं स तस्य लय उच्यते। न त्वात्यन्तिकः प्रलयः कालस्यास्तीति। यत् तूक्तम्। काले स पक्वस्तेनैव सहाऽव्यक्ते लयं ब्रजेदिति। तत् तेनैवाव्यक्तावस्थानाभिप्रायेण। अतो युक्तमनाद्यनन्तत्वं तस्योक्तं। तस्याव्यक्तस्य कालस्य सृष्ट्यादौ व्यक्तिजनकानां भग्रहाणां प्रादुर्भावे सति कालस्य व्यक्तीनामपि दिनमासवर्षयुगादीनां युगपदेकहेलया प्रवृत्तिर्वभूव। एतदुक्तं भवति। चन्द्रार्कयोर्मेषादिस्थयोश्चैत्रस्य शुक्लपक्षादिः प्रतिपत्। अतो मघोः सितादेर्दिनानां सौरादिमासानां वर्षाणां युगाणां मन्वन्तराणां कल्पस्य च तदैव प्रवृत्तिः। अथोदयाच्च भानोः स चोदयः कस्मिन् देशे लङ्कानगर्याम् तथा तस्यैव वारे आदित्यवारे इत्यर्थः।

अनेन लङ्कायामर्धरात्रिकाले रविवासरे सृष्टिरुक्ता। तत एव कालगणना संयाता। अस्माकं ज्योतिषशास्त्रे मतद्वयं प्रचलति ब्राह्मं , सौरञ्च। ब्राह्मपक्षे विधिदिनादौ सृष्टिः, ततः कालगणना , सौरपक्षे तु विधिनाद्यनन्तरं सृष्टयादिः , ततः कालगणना। मतद्वयप्यार्षमेव। केचनाचार्याः सौरमतानुसारं ग्रहगणितादिकं कुर्वन्ति , केचन च ब्राह्ममतानुसारे। उभयोः पक्षयोः गणनात्मककालविषये एकैव परिभाषा। अयं हि सृष्ट्यादितः सृष्ट्यन्तं यावत् कलनात्मकः कालः महाकालस्य खण्डानात्मक इति। अस्यगणनात्मकस्य कालस्य मानानिनवविधानि कल्पितानि सन्ति। यथोक्तं सूर्यसिद्धान्ते –

ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा[4]।
सौरं च सावनं चान्द्रमार्क्षं मानानिवै नव।।

एषु चतुर्भिसौरचान्द्रार्क्षसावनैः जगति व्यवहारः प्रचलति। यथोक्तं तत्रैव –

चतुर्भिव्यवहारोऽत्र सौरचान्द्रार्क्षसावनैः[5]।
बार्हस्पत्येन षष्ट्यब्दं ज्ञेयं नान्यैस्तु नित्यशः।।

एवं ब्राह्मपक्षाविलम्बिना भास्कराचार्येणापि सिद्धान्तशिरोमणावुक्तम् –

एवं पृथग् मानवदैवजैवपैत्रार्क्षसौरेन्दवसावनानि[6]।
ब्राह्मं च काले नवमं प्रमाणं ग्रहास्तु साध्या मनुजैः स्वमानात्।।

एकः कल्पः ब्रह्मदिनं भवति। उक्तञ्च सूर्यसिद्धान्ते –

इत्थं युगसहस्रेण भूतसंहारकारकः[7]।
कल्पो ब्रह्ममहः प्रोक्तं शर्वरी तस्य तावती ।।

एवमेव ब्राह्मपक्षपोषको भास्करोप्याहस्याद्यगानां सहस्र दिनं वेधसः सोऽपिकल्पोद्युरात्रं तु कल्पद्वयम्। अत्र ब्राह्ममानविषये भास्कराचार्यमतम् –

खखाभ्रदन्तसागरैर्युगाग्नियुग्मभूगुणैः[8]।
क्रमेण सूर्यवत्सरैः कृतादयो युगाङ्घ्रयः।।
स्वसन्ध्यकातदंशकैर्निजार्कभागसंमितैः।
युताश्च तद्युतो युगं रदाब्धयोऽयुताहताः।।
मनुः क्षमानगैर्युगेन्दुभिश्च तैर्भवेत्।
दिनं सरेजजन्मनो निशा च तत्प्रमाणिका।। इत्यादिः

<u>दिव्यमानम्</u> – दिव्यं दिनं मानवैकवर्षमितं भवति। 360 सौरदिनानि =1 सौरवर्षाणि = 1 दिव्यदिनम्।360 दिव्यदिनानि =1 दिव्यवर्षम्। एवमेव सर्वं ज्ञेयम्। एतत् देवानां कृते भवति। यदुक्तं सूर्यसिद्धान्ते भूगोलाध्याये –

सुरासुराणामन्योन्यमहोरात्रं विपर्ययात्[9]।
यत्प्रोक्तं तद् भवेद् दिव्यं भानोर्भगणपूरणात्।।

<u>अथ पैत्रमानमत्रोपस्थाप्यते</u> – यथा उक्तं सूर्यसिद्धान्ते पैत्र्यमानप्रतिपादनावसरे –

"पैत्र्यं मासेन भवति" अर्थात् पित्र्यादिनं एकचान्द्रमासतुल्यं भवति। मयासुरकृतप्रश्नोत्तरे यथा भगवानसूर्यः पनराहपितरः राशिगाः पक्षम्। अर्थात् पितृणां कृते पञ्चदशतिथ्यात्मकं दिनं

पञ्चदशतिथ्यात्मिका च रजनी भवति। द्वयोर्मेलनेन एकचान्द्रमासमितमहोरात्रं भवति। अस्मिन् विषये भास्करोप्येवमाह सिद्धान्तशिरोमणौ –

विधूर्ध्वभागे पितरो वसन्तः सुधादीधितिमामनन्ति[10]।
पश्यन्ति तेऽर्कं निजमस्तकोर्ध्वे दर्शे यतोस्ताद् द्युदलं तदेषाम्।।
भार्धान्तरत्वान्न विधोरधस्थं तस्मान्निशीथः खलुपौर्णमस्याम्।
कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्तमेत्यर्थ एव सिद्धम्।।

अत्रायमाशयो यत् विधोश्चन्द्रस्य उर्ध्वभागे वसन्तः पितरः सुधादीधितं चन्द्रं स्वाधः आमनन्ति। ते अमान्ते सूर्यं निजमस्तकोर्ध्वे पश्यन्ति। यतः स्वोपरि सूर्यं दर्शनात् अमान्ते किलार्धकालः पितृणाम्। एवं पूर्णान्ते पितृणां स्वाधो याम्योत्तरवृत्ते रवेः स्थित्या पूर्णिमान्ते निशार्धकालः तेषाम्। पूर्णान्ते चन्द्रात् सूर्यस्य षड्भान्तरे स्थितिर्भवत्येष नियमः। यत् अमान्ते द्युदलं पूर्णं निशार्धमिति हेतोः , कृष्णपक्षदले पितृणां कृते रवेरुदयःशुक्लपक्षदले चास्तम्। अर्थात् कृष्णपक्षे सार्धसप्तम्यां सूर्योदयकालः शुक्लपक्षे सार्धसप्तम्यांसूर्यास्तकाल इति भास्कराचार्यस्याभिप्रायः

अथ प्राजापत्यमानम् -

मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम्[11]।
न तत्र द्युनिशोर्भेदो ब्राह्मं कल्पःप्रकीर्तितम्।।

इति सूर्यसिद्धान्तोक्तेः मनेः कालमेव प्राजापत्यसंज्ञया बोध्यते। न तत्र दिननिशोर्भेदः।

अथ बार्हस्पत्यमानम्

सूर्यसिद्धान्ते – वैशाखादिषु कृष्णे च योगात् पञ्चदशे तिथौ[12]।
कार्तिकादीनि वर्षाणि गुरोरस्तोदयात् तथा।।

अत्र भास्कराचार्यः- बृहस्पतेर्मध्यमराशिभोगात् संवत्सरं सांहितिकाः वदन्ति।अर्थात् गुरोः एकराशि भोगकालः एकगुरुवर्षमानं भवति।

अथ सौरकालमानम् –

रविभगणभोगकालःएकं सौरवर्षम्। अर्थात् रवेः द्वादशराशि भोगकालः एकसौरवर्षम्। ततः एक राशिभोगकालःएकः सौरमासः। एवं रवेरेकरंशभोगकालः एकं सौरदिनम्। 360 सौरदिनानि =1 सौरवर्षः।

अथ सावनकालमानम् –

एकसूर्योदयात् द्वितीयसूर्योदयपर्यन्तमेकं सावनदिनं भवति। तदेव वासर संज्ञा लोके प्रचलति। एवं कस्यापि ग्रहस्य उदयद्वयान्तरं सावनदिनम्।लोके सावनदिनस्य व्यवहारो भवति।

सूर्यसिद्धान्ते यथा – "उदयादुदयं भानोर्भूमिसावनवासरः[13]" अत्र भास्कराचार्यः-

इनोदयद्वयान्तरं तदर्कसावनं दिनम्[14]।
तदेव मेदिनीदिनं भवासरस्तु भभ्रमः।।

अथ चान्द्रकालमानम् –

सूर्येन्दुसंगमोदर्शः अमा वा। अमान्ते रवीन्दुराश्याद्यवयवेन तुल्यौ भवतः। एवं भूतायाः एकस्याः युतेः तयोः अपरयुक्तिकालं कालं यावत् एकश्चान्द्रमासो भवति। ग्रथोक्तं भास्कराचार्येण –

"रवीन्द्वोर्युतेः संयुतिर्यावदन्या विधोर्मास एतच्च पैत्रं द्युरात्रम्"।

अथ नाक्षत्रकालमानम्-

नाक्षत्रदिनविषये सौरोक्तपद्यम् –

भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते[15]।
नक्षत्रनाम्ना मास्तुज्ञेयाः पर्वान्तयोगतः।।
कार्तिकादिषु संयोगे कृतिकादि द्वयं द्वयम्।
अन्त्योपान्त्योपञ्चमश्च त्रिधा मासत्रयं स्मृतम्।।

नित्यं प्रवहवायुना भचक्रस्य एकं भ्रमणं यद् भवति तदेव नाक्षत्रदिनमुच्यते। नक्षत्राणां गतेरभावात् सर्वे भभ्रमास्तुल्याः(षष्टिघटिकात्मकाः) एव। अथैकनाक्षत्राहोरात्रगतं सावनात्मककालं गणितवलाद्विगण्य ततो यद्येकनाक्षत्राहोरात्रान्तर्गतेन सावनात्मकेनैतावता-कालेनैको भभ्रमः (नाक्षत्रदिनम्) तदा युगसावनदिनैः क इति युगीयभभ्रमाः भवेयुः।

**सन्दर्भानुक्रमः-**

1. सू.सि.मध्यमाधिकारे श्लो0 10
2. सू.सि. मध्यमाधिकारे श्लो0 11
3. सि.शि.मध्यमाधिकारे श्लो0 15
4. सू.शि.मानाध्याये श्लो0 1
5. सू. सि. मानाध्याये श्लो0 2
6. सि.शि. मध्यमाधिकारे श्लो0 32

ISSN-2321-6948

7. सू.सि.मध्यमाधिकारे श्लो0 20
8. सि.शि. मध्यमाधिकारे श्लो0 21
9. सू.सि. भूगोलाध्याये श्लो0 4
10. सि.शि.गोलाध्याये श्लो0 13-14
11. सू.सि.मानाध्याये श्लो0 21
12. सू.सि.मानाध्याये श्लो0 17
13. सू.सि.मध्यमाधिकारे श्लो0 36
14. सि. शि.मध्यमाधिकारे श्लो0 20
15. सू.सि.मानाध्याये श्लो016

***

# एकविंशशतके संस्कृतगद्यसाहित्ये ज्योतिषं पर्यावरणचिन्तनञ्च

रक्षा भारद्वाजः (शोधच्छात्रा)
केन्द्रीयसंस्कृतविश्वविद्यालयः, भोपालपरिसरः(म.प्र)

अस्माकं देशे पर्यावरणचेतना नाद्यतनीया। आवैदिक- वाङ्मयात् लौकिकसाहित्यपर्यन्तं प्रवृत्तरेखा परिलक्ष्यते। भारतीयजीवने प्रकृतिः देवतुल्या। तत्र ये नगाः, नद्यः, पादपाः, पशवः पक्षिणः, उरगा अन्ये च सर्वे देवतावत् पूज्याः। तेषां संरक्षणं धर्मवद् विहितमिति व्यज्यते।अस्मान् परितः सन्ति यानि कान्यपि प्रकृतेरुपादानानि तानि सर्वाणि सन्ति पर्यावरणक्षेत्रे। उपरिगमनमण्डलं, मध्ये पृथिवीतलम् अधश्चाण्विजलं तत्र सर्वे प्राणधारिणिवनेषु ग्रामेषु वा ये जन्तवो हिंसा वाहिंसा वा। धरिण्यां जलं भूमेरध उपरि वा सर्वत्र तटेषु वा। एतत् सर्वमस्माकं करणीयं कर्तव्यम्। लोकमंगलहेतोरस्माकं पूर्वजैरेतद् अनुभूतम्। पर्यावरणसंरक्षाः प्रयासास्तैर्विहिताः। संस्कृतम् एतत् परिलक्ष्यते। संस्कृतवाङ्मये दृश्यते लौकिके च तत्रापि दृश्यकाव्ये श्रव्यकाव्ये च गद्ये वा पद्ये वा।

प्रकृतेर्ये प्रमुखघटकास्ते सर्वे भारतीयसंस्कृतौ देववत् पूज्याः। पर्यावरणसंरक्षणे तेषां महत्त्वं सविशेषम्। गङ्गायमुनाप्रभृतयः सरितो मातृवत्पूजनीयाः। भूमिसिंचनक्षेत्रे महती तासां भूमिका। सुकरं तेन कृषिकर्म। तासां संरक्षणेन जीवनं जनानां सुखसमन्वितम्। हिमवत्प्रभृतयः पर्वता अपि प्रकृतिघटकाः। पर्यावरणसंरक्षणे तेषां महत्त्वं प्रकृष्टम्। राष्ट्रियतां रक्षन्ति गिरयः। तेनाभ्यन्तरे पर्यावरणे याति समताम्। तोयं काष्ठमौषधञ्च यच्छन्ति नगाः। अतो रक्षणीयास्ते।

वनानामपि महत्त्वं महद्वर्तते। तत्र वृक्षा वारि निरुन्धन्ति भूम्यन्तरे। वारयन्ति ते भूमिक्षरणाम्। काष्ठेन्धनकष्टमपि समाधीयते। वनेषु सन्ति नैकविधा जन्तवः सौम्याः क्रूराश्च। जीवो जीवस्य भोजनमिति न्यायेनैको हिंस्रः पशुर्जन्तुर्वा यथाऽहिरण्यं जीवमत्ति यथाऽऽरंबुधः कृषकाणां क्षेत्रं प्रविश्य सत्यं खादति विनाशयति वा। एवं पर्यावरणसमतुल्यता संरक्ष्यते। अनेनैव कारणेन भारते देशे नद्यः सम्पूज्यन्ते, नगाः सम्पूज्यन्ते, द्रुमाः सम्पूज्यन्ते जन्तवश्चापि सौम्या धेनुप्रभृतयो हिंसा वोरगादयः।

पर्यावरणचेतना संहितासाहित्ये प्रतिपादिता। वैदिकवाङ्मये याऽपि देवताविषयक प्रकल्पना, प्राधान्येन सा प्रकृतिघटकावमब्यैव। यथा पृथिवी, सूर्यः, वायुः, पर्जन्य उपाश्चेह्यादीनां प्रकल्पना। तत्र प्रभाते लोकं स्वप्रकाशेन पूरयन्त्याः समन्ततः पर्यावरणञ्चालोकेन समलंकुर्वत्यास्तमोहन्त्र्या उषस आगमनस्य ऋग्वेदे प्रशस्ततमवर्णनं प्राप्यते।

ज्योतिषशास्त्रेऽपि पर्यावरणसंरक्षणमभिव्यंजितम्-

उक्तञ्च पाणिनिशिक्षायाम्-

**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥**
**पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥**[1]

षडङ्गेषु ज्योतिषस्य महत्त्वम् अत्यधिकम्। 'ज्योतिषां सूर्यादिग्रहाणां बोधकं शास्त्रं ज्योतिषशास्त्रम्।[2] शास्त्रेऽस्मिन् सौरमण्डलस्य स्वरूपं रहस्यं च, खगोलस्य स्वरूपं, पृथिव्याः आकारः, चन्द्रस्य परिकल्पना, ग्रहविषयकसिद्धान्ताः, वेधशालायन्त्राणि, नक्षत्रमण्डलानि, आकाशगङ्गादयश्च विविच्यन्ते। अस्मिन् हि शास्त्रे ग्रहनक्षत्रादीनां गतिस्थितिसञ्चारानुसारं पृथिव्या उपरि सम्भावितशुभाशुभफलानां निर्देशाः क्रियन्ते। कर्मप्रधानेऽस्मिन् संसारे कदा कथं च कि कर्म सम्पादनीयमिति कार्यकर्मफलज्ञानं विज्ञानमिदमेव प्रददाति। ज्योतिर्विज्ञाने ऋतुविज्ञानं वास्तुविज्ञानं, सामुद्रिकविज्ञानं, जातकफलकथनं, कृषिविज्ञानं, व्यक्ताव्यक्तगणितविद्या, वृक्षायुर्वेदः, ग्रहचिकित्सा, भूकम्पः, उत्पातः, खगोलभूगोलदृग्गोलविज्ञानानि | रत्नविज्ञानादिबहुविधविषयाः विद्यन्ते।

साम्प्रतं तथ्यमिदं प्रायः सर्वैरेव ज्ञायते यत् सौरमण्डले अनेके ग्रहाः, नक्षत्राणि, तारामण्डलम्, आकाशगङ्गा, पृथिवी, जलं, वायु, आकाशादितत्वानि विद्यन्ते। सर्वेषु एतेषु तत्त्वेषु घर्षणम् आकर्षणञ्च सततं प्रचलति। एतत्फलस्वरुपं नानाविधाः विस्फोटाः काले काले जायन्ते एतेषां सुस्पष्टप्रभावा मनुष्याणां जीवजन्तूनां वनस्पतीनां पर्यावरणस्य चोपरि परिलक्ष्यन्ते। ज्योतिषशास्त्रं सर्वेषाम् एतेषां सूक्ष्माध्ययनं विधाय मानवजीवनं सुखमयम् निरामयं च कर्तुम् इच्छति। वस्तुतः ज्योतिषशास्त्रेषु प्रतिपादितानां सिद्धान्तानां समन्वयः यदि आधुनिकविज्ञानेन सह भवेत् तर्हि सर्व लोकः आनन्देन जीवेत।

रामायणमहाभारतयो भूतानुकम्पा प्रशस्ता। प्रकृतिं प्रति प्रेमश्चापि प्रशस्तम्। सत्वहिंसाविरोधेऽव रामायणरचनाऽऽधारः। यत्र महाकविः क्रौञ्चवधं वीक्ष्य तत्क्षणमेव स्वविरोधं प्रकटीकरोति।

[1] पाणिनीयशिक्षायाम्

[2] भारतीय ज्योतिष

**मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।। इति।।**

रामायणे रामकथाया विकासोऽधिकाशंतः वनानां पवित्रप्रशान्तपर्यावरणे सम्भूतः। अनेकेषां दुष्टराक्षसानां दलनं वनेष्वेव। श्रेष्ठमुनीनां तपस्या वनेष्वेव संजाता। दुष्टराक्षसरावणस्य वधयोजना वने एव निर्मिता। सीतानिष्कासनजीवनं वाल्मीकेः शान्तवने एव व्यतीतम्। कुशलवयोर्जन्मतयोः परिपालनञ्च वाल्मीकेराश्रमे प्रशान्तपर्यावरणे एव। वाल्मीकेः प्रशस्तपर्यावरणस्य प्रकल्पनानिम्नांकिते पद्य आश्रमवर्णने वर्तते —

**शरण्यं सर्वभूतानां सुसम्भृष्टाजिरं तथा। मृगैर्बहुभिराकीर्णं पक्षिसंघैः समावृतम्।।**[1]

लौकिकसंस्कृतकाव्यान्तर्गते महाकविकालिदास-प्रणीतेऽभिज्ञानशकुन्तले नाटके कविना पादपसंरक्षणं प्रतिपादितं पुष्पाणि प्रत्युनुकम्पाभावश्च। पद्यमिदम् : -

**पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या,**
**नादत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम्।**
**आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः,**
**सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्।।**[2]

एतेन वर्णनेन वृक्षपुष्पाणां संरक्षणमभिव्यंजितम्। कालिदासकृतिष्वाश्रमपरिसरेषु मृगयाऽपि वर्जिता। राजाऽप्याश्रमशान्तिभङ्गनाक्षमत। आश्रमेषु वायुमण्डलं यज्ञधूमेन प्रदूषणमुक्तं पवित्रं सुरभितञ्चासीत्। विक्रमोर्वशीयेनाटकेऽप्याश्रमे सत्वानुकम्पाऽऽश्रमं परितः पर्यावरणसंरक्षा च निरुपिता। पंचमेऽङ्के राजपूतोराश्रमविपरीतमाचारणं ज्ञात्वाऽऽचार्यच्यवनस्तमाश्रमान्निष्कासितवान्। भास-शूद्रक - भवभूति प्रणीतेषु नाटकेष्वपि प्राणिरक्षणमभिव्यक्तम्। पर्यावरणसंरक्षा वाप्यभिव्यक्ता उत्तररामचरिते प्रथमे पद्यमिदं तपोवनं परितः प्रशान्तिं, पर्यावरणपवित्रताञ्च सूचयति

**एतानि तानि गिरिनिर्झरिणी तेषु, वैसानसाश्रिततरुणि तपोवनानि।**
**येष्वातिथेयपरमा यमिनो भजन्ते, नीवारमुष्टिपचना गृहिणी गृहाणि।।**[3]

[1] वाल्मीकिरामायणे अरण्यकाण्डे १ -3
[2] आभि० ४-९
[3] उत्तररामचरितम्

एवं च महाकाव्येष्वपि पर्यावरणचेतना अभिव्यक्ता। रघुवशे प्रथमे सर्गे वसिष्ठाश्रमवर्णनं महाकवेः पर्यावरणचेतनामेव द्योतयति

**सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम्।**
**विश्वासाय विहंगानामालवालाम्बुपायिनाम्।।**[1]

एवं कुमारसम्भवेऽपि पर्यावरणसंरक्षणमभिव्यंजितम्। हिमादिवर्णनप्रसंगे प्रथमे सर्गे तत्र पर्यावरणपावित्र्यं प्रकल्पितम्। तत्रत्यं वायुवर्णनम् -

**भागीरथी निर्झरसीकराणां बोढा मुहुः कम्पितदेवदासः।**
**यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः।।**[2]

आचार्यराधावल्लभत्रिपाठिना रचितं रुमीपञ्चदशी इत्यस्य आरम्भः भारतीयवृक्षेण जातः। प्रकृतेः चित्रणे प्रकृतिप्रेमी हृदयं कथनम् अनिवार्यं वर्तते, तस्य अभावे प्रकृतिचित्रणम् सम्भवं नास्ति। मुल्लानसरुद्दीन इत्यस्य कथा अमरत्वं प्राप्तुं यस्मिन् वृक्षस्य उपालम्भनं नीत्वा जाबालिमुनेः मुखात् शरीरम् एव वृक्षस्य संज्ञया अभिहितं कृतम्।

**“ततः समग्रेऽपि राज्ये भारतीयवृक्षम् अधिकृत्य कर्णाकर्णिकया किंवदन्त्यः स्यन्दन्ते स्म। क्रमात् राजानमपि एताः किंवदन्त्यः उपसृताः। भारतीयवृक्षविषये राज्ञः कौतुकं जातम्।**
**स आदिशत् - प्रेष्यतां दूतः भारतं प्रति। स तत्र गत्वा एतादृशस्य वृक्षस्य फलानि अस्माकं कृते आनयतु इति”।**[3] **तथा "स वृक्षः कुत्र वर्तते यस्य फलं भक्षयित्वा नरः वार्धक्येन बाधितो न भवेत्, न वा म्रियते?**[4]**”** तथा " **जाबालिर्मुनिः करुणापूरिताभ्यां नयाभ्यां तं पश्यन्** अवदत् **वत्स, एतादृशः वृक्षः वस्तुतो न भवति। इदं शरीरमेवैतादृशः वृक्षः अथवा सूर्यः, पवनः, चन्द्रः एतेऽपि तादृशा वृक्षाः। संसार एव एतादृशो वृक्षः। एनं वयं नामभेदैः विविधं वर्णयामः। नामभेदात् भेदवुद्धिर्भवति। तत्वं तु एकमेव। स च वृक्षः बहिर्भ्रमणेन अन्वेष्टुं न शक्यते , स तु मनुष्यस्य अन्तः वर्तते”।**[5]तथा च ‘लघु हरितं च द्विपम्’ शीर्षकेन लिखितकथायां प्रकृतिचित्रणं प्रस्तुतम्। यथा- **“इयं धेनु वर्तते मनुष्य जीवः। लघु हरितं च द्वीपम् अस्ति इयं धारित्रि। जीवो वर्ते गृहनुः। स स्वगृहनुतया सर्वा सम्प्तिमात्मसात् कर्तुं चेष्टते। यावत् प्राप्तं तावतोऽधिकं मे स्यादिति**

---

[1] रघुवंशे 1-15
[2] कुमारसंभवे
[3] रूमी पञ्चदशी पृ.1
[4] रूमी पञ्चदशी पृ.1
[5] रूमी पञ्चदशी पृ.2

**चिन्तयति। जीवः चिन्तया दीनः कृशश्च भवति , आशीर्वचोभिः पुष्टिं च प्राप्नोति"।**[1] न केवलं प्रकृति वर्णनस्य अपितु प्रकृतिसंरक्षणस्य संदेशम् अपि दीयते- **"तस्य एत व्रतम्- कदापि वृक्षेभ्यः फलं न त्रोटयिष्यामि, फलस्य सङ्ग्रहाय न कदापि कमपि वृक्षं धूनयिष्यामि न कदापि मत्कृति केनचित् आनीतानि चित्वा दीयमानानि वा फलानि स्वीकरिष्यामीति"।**[2]

सागरस्य विषये प्रो. त्रिपाठिना लिखितम् **"सागरः स्वफेनिलेऽगादेऽम्बुराशौ अद्भुतां कामपि सृष्टि गोपयित्वा स्थितः। तत्र मत्स्य — झष - तिमि - मिमिंगल नकप्रभृतयः सहस्त्रविधा जलजन्तवः तानि तानि दुर्लभ - बहुमूल्य - रत्नानि, विचित्राश्च वनस्पतयो विलसन्ति। वैज्ञानिकानां कृते अन्वेषणस्य अकृष्टक्षेत्रं विपुलमसौ सागरः समुपस्थापयति। सृष्टेः स्वारस्यम् अन्येयैव दृशा विलोकयतां कवीना कृते तु सागरः प्राणमयः पुरुष एव"।**[3]

एवं प्रकारेण केरलराज्यस्य वर्षायाः सौन्दर्यस्य वर्णनम् अतिशयेन कृतम्। यथा

**"वहिर्विर्षाः देवो ............................वर्षति।**

**मेघा नभसस्तलान्नीचैरवनताः। कृष्णां मेघाः। केरलेषु वर्षायाः का कथा। एतत् तु सलिलनिधौ सौहित्यकरणम् , हरीतिम्मि हरीतिम्न आधानम् आप्लवने पुनराप्लवनम्"।**[4]

स्वर्गस्य कथां बालकं विशाखं वदन् गङ्गायाः वर्णनं करोति- **"गङ्गा नदी तु स्वर्गात् विनिः सृता। अनन्तरं या अन्तरिक्षे ततः परं भूलोके प्रवहति। वयं गंगायाः भूलोकस्य स्त्रोतः यावत् समागताः। ततः परमवश्यं स्वर्गः स्यात्। विभिन्नाः पादपाः नानाविधानि पुष्पाणि। तेषां नामानि शान्तिशीलो जानाति। पादयोरधः हिमालयस्य शीतलाः शिलाः, उपरि विततं गगनम्। परितो देवदारू वृक्षाः"।**[5] तथा च अन्यत्र स्थले हिमालये विशाखेन सह प्रकृतेः चित्रणम कृतम्

**"एकदा सायङ्काले नभो निर्मलमदृश्यत। प्रसन्नः पवनः आकाशादवतीर्य मुखं परामृशति, स्कन्धौ संवाहयति | शान्तः स्थिरो गुहापरिसरः। वृक्षा अपि निष्कम्पं स्थिताः। अस्तङ्गच्छतो दिनकरस्य किरणाः स्वर्णिमंस्नस्तरं निर्मान्ति स्म"।**[6]

---

1 रूमी पञ्चदशी पृ.7

2 रूमी पञ्चदशी पृ.10

3 संस्कृत-निबन्ध-कलिका पृ.18

4 आत्मनाऽऽत्मानम् पृ,37

5 अन्यच्च पृ. 158

6 अन्यच्च पृ. 160

**त्रिपाठीवर्यः हिमालयक्षेत्रस्य वर्णने तत्र प्रकृतेः परिवर्तनशीलस्य स्थितेः वर्णनम्- "कर्कशकटुविरावैरतिभीषणं रवं विमुञ्चन्तो प्रबलैरासारैर्वर्षितुमारब्धवन्तो मेघाः। हिमालयोऽपि कम्पते स्मेति प्रतिभाति। प्रस्तराः पर्वताग्रात् स्खलन्ति स्म,निपतन्ति च स्म। मेघानां गर्जनं, प्रस्तणां च भ्रंशः प्रभञ्जनस्य च उत्कट उग्रो श्रवणभैरवो रवः - एते सर्वे शब्दा मिलित्वा कर्मापि कोलहलं कुतपं विरचयन्ति स्म "।**[1]

एतेन स्पष्टं भवति यद् वैदिकवाङ्मयाद् आरभ्य लौकिककाव्यपर्यन्तं सर्वत्र पर्यावरणचेतना परिलक्ष्यते तत्संरक्षणप्रवृत्तिश्च। आधुनिके युगेऽपि तच्चेतनाऽपरिहार्या। किन्तु हन्त सम्प्रति पर्यावरणसंरक्षणम्प्रति परिलक्ष्यत औदासीन्यम्। तत्परिणामा अपि लोकेनानुभूयन्ते। अतो न कोऽपि विकल्पोऽस्ति पर्यावरणसंरक्षाविषये, लोककल्याण-मभीष्टञ्चेत्। तत्कृतेऽनुकार्या संस्कृतवाङ्मयेऽभिव्यक्ता पर्यावरणचेतना।

**संदर्भग्रन्थाः-**


- अर्वाचीन संस्कृत साहित्य (दशा एवं दिशा)- ड़ॉ मञ्जुलता शर्मा, प्रथम संस्करण 2004, परिमल पब्लिकेशन्स 27/28 शक्तिनगर, दिल्ली 110007।
- आधुनिकसंस्कृतसाहित्येतिहासः –देवर्षिकलानाथ शास्त्री, नूतन संस्करण 2010 ,जगदीश संस्कृत पुस्तकालय ,जयपुर 302001।
- अन्यच्च(उपन्यासः)-प्रो.राधावल्लभत्रिपाठी, 2011,संस्कृतभारती,नवदेहली।
- उत्तररामचरितम्-कपिलदेव द्विवेदी,2009,इलाहाबाद
- रूमी पञ्चदशी- प्रो.राधावल्लभत्रिपाठी, संस्कृतभारती,नवदेहली।
- लौकिक संस्कृतसाहित्य का इतिहास-डॉ.जयकृष्ण प्रसाद खण्डेवाल, प्रथम संस्करण2002


[1] अन्यच्च पृ. 166

ISSN-2321-6948

# भारतीयदर्शनेषु मनस्स्वरूपविवेचनम्

**प्रो. एम्. चन्द्रशेखरः**
**आचार्यः,**
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
**लखनऊपरिसरः, लखनऊ**

**येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम्।**
**येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु[1]॥**

येन जगति समेऽपि व्यवहाराः सम्पाद्यन्ते, येन ज्ञानेच्छासुखादयः प्रवर्तन्ते, यत्र चागते सति दोषे जनाः विक्षिप्तोन्मत्तप्रमत्ताः, अपगते च सद्विचारज्ञानशीलविचक्षणाः विवेकसम्पन्नाः भवन्ति **तन्मनः** इति जेगीयते।

तच्च मनः भारतीयदर्शनेषु शास्त्रेषु च विभिन्नदृष्ट्या कथमुपवर्णितमिति यथामति विविच्यते-

श्रुतिस्मृतिपुराणदर्शनकाव्यनाट्यसाहित्यकलापेषु प्रतिदिनमनुष्ठीयमानव्यवहारेषु चोद्देश्यत्वेन मनसो भूरिश उल्लेखो सम्प्राप्यते। प्रायशः सर्वैरपि दार्शनिकैः तत्त्वविद्भिश्चायं पदार्थविशेषः उद्देश्यलक्षणपरीक्षामाध्यमेन वाग्व्यवहारविषयीकृत एव। तद्यथा-

- **सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्**[2]।
- **चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्**[3]।
- **मनोदुर्निग्रहं परम्**[4]।
- **मनसः काममाकूतिं वाचः सत्यमशीमहि**[5]।
- **मन एव मनुष्याणां कारणं बन्धमोक्षयोः**[6]।
- **पृथिव्यप्तेजोवाय्ववाकाशकालदिगात्ममनांसि नवैव**[7]।
- **आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्**[8]। इति।

**''इन्द्रियाणां मनसश्चास्मि भूतानामस्मि चेतना''** (श्रीमद्भगवद्गीता, अध्याय: 10/22)

इत्यादि श्रुतिस्मृतिदर्शनवचनैः मनः बहुषु स्थलेषु प्रतिपादितमस्ति। दर्शनेषु विशिष्य न्यायदर्शने परिगणितेषु द्वादशविधप्रमेयेष्विदमन्यतमं राजते।

अत्रेदं चिन्त्यं यन्मनो नाम किं, किमिदमणुर्विभुर्वा, सर्वशरीरव्यापि एकदेशवर्ति वा, इन्द्रियमनिन्द्रयं वा, द्रव्यमद्रव्यं वा, नित्यमनित्यं वा, परिच्छिन्नमपरिच्छिन्नं वा? इति।

अत्रादौ मनस्स्वरूपं ततः तत्परिमाणादिकं प्रपञ्चयिष्यते।

तत्र तावन्नैयायिकैः घटपटादिबाह्यवस्तुप्रत्यक्षे यथा चक्षुरादीनि इन्द्रियाण्यपेक्ष्यन्ते तथैव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नादीनां प्रत्यक्षार्थं मनः अपेक्ष्यत इति साधितम्। एतत्साहाय्येनैव

सकलान्यपीन्द्रियाणि विषयानवगच्छन्ति, एतस्यानवधाने तु जातेऽपि इन्द्रियार्थसन्निकर्षे **"पश्यन्नपि न च पश्यति"** इतिवत् ज्ञानं नैव सञ्जायते। एवम् एतन्माध्यमेनैव सुखादीनामुपलब्धिः, तदुक्तं भाषापरिच्छेदे-

**''साक्षात्कारे सुखादीनां करणं मन उच्यते''**[9]।

**''सुखाद्युपलब्धिसाधनमिन्द्रियं मनः''** इत्यन्नम्भट्टेन, **'स्पर्शरहितत्वे सति क्रियावत्त्वम्'** इति तर्कदीपिकाकारेण, **''मनस्त्वजातिमत्वमिति''** तर्कभाषायां च केशवमिश्रैः निगदितम्।

यदि मनो न स्वीक्रियते चेत्, तर्हि ज्ञानेच्छादीनामुत्पत्तिरपि न स्याद्यतः पुरीतन्नामकनाडीप्रदेशात् बहिः शरीरावच्छेदेन यदा आत्ममनसोः संयोगः तदानीमेवात्मगुणानामुत्पत्तिः सञ्जायतेऽतो मनोऽपरिहार्यमिति।

किञ्च, अतीन्द्रियत्वादेवास्य प्रत्यक्षं न जायतेऽपि तु अनुमानेनानुमीयते तत्स्वरुपमेवम्- **''सुखादिकं चक्षुरादिभिन्नेन्द्रियग्राह्यं चक्षुराद्यभावेऽपि ग्राह्यत्वात् कुठारभिन्नवह्निजन्यपाकक्रियावत्''** इति।

सांख्यदर्शने मनो नाम इन्द्रियाणां नियन्त्रकं, ज्ञानेन्द्रियकर्मेन्द्रिययोः कार्यसम्पादकत्वात् अस्योभयेन्द्रियत्वेन व्यवहारः। लक्षणन्तु सङ्कल्पविकल्पात्मकत्वे सति मनस्त्वजातिमत्वमिति तदुक्तमीश्वरकृष्णेन-

**''उभयात्मकमत्र मनः सङ्कल्पमिन्द्रियञ्च साधर्म्यात्।**[10]
**गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च।।**

अत्रेदमाशङ्क्यते- यदचेतनं मनः कथं सङ्कल्पविकल्पात्मकं चेतनकार्यं कर्तुं समर्थः स्यात्? यथा तप्तायः पिण्ड: वह्निना भिन्न: सन्नपि वह्निसंयोगाद् अग्निमत्पिण्डः इति व्यवह्रियते तथैवाचेतनं मनोऽपि चेतनपुरुषस्य संयोगाद् चेतनगुणैर्युक्तं चेतनवत् प्रतीयते। यद्यपि तत्त्वतः वीक्ष्यमाणे सांख्ययोगयोः न पार्थक्यं तथापि मनस्सवरुपविषये तावत् उभयोः मतभेदो विद्यते, तत्परिमाणादिविषयेऽसहमतिः, अचेतनाभौतिकानित्यत्वविषये च सहमतिः इत्यनयोः निष्कर्षः।

मीमांसकमते तावत्, तार्किकसिद्धान्तानुकूलसुखदुःखादिप्रत्यक्षकरणत्वेन अन्तरिन्द्रिय-रुपेण च मनः अभ्युपगम्यते। उक्तञ्च प्रभाकरेण प्रकरणपञ्चिकायाम्-

**''मनसोऽभ्युपगमे सकलात्मगुणोदय एव प्रमाणम्। बुद्धिसुखदुःखेच्छाद्वेष-प्रयत्नादृष्टसंस्काराणां नवानामपि वैशेषिकगुणानां मनः संयोगेनैवोत्पत्तेरिति''**।

तत्र प्रभाकरमते आत्ममनसोः संयोगः ज्ञानस्य असमवायिकारणं, आत्मा च समवायिकारणमिति, उभयोः संयोगः आत्मनः प्रयत्नेन पूर्वजन्मोत्पन्नादृष्टेन वा संभवति, आत्मनि स्वविशेषगुणनां ज्ञानं मनसैव जायते, इदमेव बाह्यकरणचक्षुश्श्रोत्रप्रभृतिव्यापारेऽपि कारणीभूतम्।

भाट्टमतेऽपि सुखादिसाक्षात्कारकरणत्वेन इन्द्रियत्वेन च मनसः सिद्धिः, तदुक्तं श्लोकवार्तिके-

**"मनसस्त्विन्द्रियत्वेन, प्रत्यक्षा धीः सुखादिषु।**
**मनसा सम्प्रयुक्तो हि, तानात्मा प्रतिपद्यते"।।**[11] इति

अद्वैतवेदान्तरीत्या मनः अन्तःकरणरुपमेव, मनबुद्धिचित्ताहङ्कारादिनाम्ना व्यवह्रियमाणः अन्तःकरण एव वृत्तिभेदेन सुखदुःखबन्धमोक्षादीनां हेतुः सञ्जायते। वस्तुतः अन्तःकरणमेव संशये सति मनः, निश्चये सति बुद्धिः, गर्वे सत्यहङ्कारः, स्मरणे सति चित्तमिति रुपेण व्यपदिश्यते। तदुक्तं भगवत्पादैः ब्रह्मसूत्रशाङ्करभाष्ये-

**"वृत्तिभेदेन मनोबुद्ध्यहङ्कारचित्तव्यपदेशभाजनमन्तःकरणमेव सुखदुःख-बन्धमोक्षादिसर्वव्यवहाराणां व्यवहारमात्रस्यैवान्तःकरणवृत्तिविशेषजन्यत्वादित्यद्वैत-वेदान्तिनः प्राहुः"**[12] इति।

एतन्मते अहमहमित्याकारिकया वृत्त्या संशयनिश्चयादिधर्मभूतस्य मनसः प्रत्यक्षञ्जायते। केचन वेदन्तिनः मनसः इन्द्रियत्वं न सहन्त इति ब्रह्मसूत्रभाष्ये संसूचितम्, परञ्च तेऽपि तस्य करणत्वपक्षे सममेव।

वस्तुतस्तु वेदान्तिमते अन्तःकरणरुपमेव मनः इति सुस्थिरः सिद्धान्तः।

विशिष्टाद्वैतवादिरामानुजमते मनः सांख्यवत् न उभयेन्द्रियमपितु पञ्चज्ञानेन्द्रियवत् ज्ञानेन्द्रियमेव, स्मृत्यादीनां कारणत्वेन तस्येन्द्रियत्वम्। एक एव मनः वृत्तिभेदेन बुद्धिचित्ताहङ्कारादिनाम्ना लोके व्यपदिश्यत इति श्रीमद्रामानुजीयानां राद्धान्तः।

चार्वाकमते तावत्, शरीरातिरिक्तः नास्ति कश्चन आत्मपदार्थः तथैव मनोऽपि नातिरिक्तं किमपि।

जैनदर्शने मनः स्वीक्रियते परन्तु तस्य इन्द्रियत्वेन नास्ति व्यवहारः, सकलान्यपि बाह्येन्द्रियाणि स्वस्वविषयकग्राहकत्वेन इन्द्रियपदेनोच्यन्ते परञ्च मनसः सर्वार्थग्राहकत्वेऽपि नेन्द्रियव्यवहार इति जैनसिद्धान्तः। एतन्मते द्विविधं मनः, द्रव्यमनः, भावमनश्च। तत्र कर्मसङ्घातादुत्पद्यते यन्मनः तद्द्रव्यमनः, यच्चेतनापरपर्यायभूतं तद्भावमन इति। वस्तुतः विचार्यमाणे जैनदर्शनेन मनसः इन्द्रियत्वं विखण्ड्य द्वैविध्यञ्च प्रतिपाद्य तत्स्वरुपमस्पष्टं गौरवं च विहितम्।

बौद्धदर्शनेऽपि देहबुद्ध्यातिरिक्तत्वेन मनः कल्प्यते, परिगणितेषु द्वादशविधायतनेषु इदमन्योन्यतमं स्थानं बिभर्ति। तदुक्तम्-

**ज्ञानेन्द्रियाणि पञ्चैव, तथा कर्मेन्द्रियाणि च।**
**मनो बुद्धिरिति प्रोक्तं, द्वादशायतनं बुधैः।।**[13]

अत्रेदं चिन्तनीयं यदेतन्मते तत्वज्ञानाद्यतिरिक्तं मनः न किञ्चिदन्यत्। तदुक्तं तत्वसङ्ग्रहे-

**"षण्णामनन्तरोद्भूतप्रत्ययो यो हि तन्मनः" इति।**

मानसिकप्रक्रियाणां समूह एव मनः इति बौद्धचिन्तनम्। तत्र मनसि उद्देश्यपरं वस्तुपरञ्चेति भेदेन तत्त्वद्वयं विद्यते। उद्देश्यपरं मनः चित्तं, विज्ञानमिति संज्ञया व्यवह्रियते। वस्तुपरं तु चेतना, वेदनासंज्ञासंस्कारमानसिकप्रक्रियायुक्तं च भवति।

विचिन्त्यमाने बौद्धदृष्ट्या मानसिकप्रक्रियाणां मिश्रणमेव मनः इति बौद्धानामन्तरङ्गम्।

एतावता सङ्क्षेपेण दर्शनेषु मनस्स्वरूपं प्रतिपादितम्, सम्प्रति मनसः परिमाणप्रभेदादिविषये विचार्यते-

नैयायिकमते मनोऽणुरेव, यतः यदि मनसः विभुत्वं स्यात्तर्हि व्यापकत्वेन प्रथमं तावत् विभुद्वयस्य संयोग एव न स्यात्, फलतः किञ्चिदपि ज्ञानं नोत्पद्येत, परन्तु लोके नैवमवलोक्यते, ज्ञानं क्रमशः उत्पद्यतेऽतः मनो न विभुरिति न्यायनयः।

तदेवोक्तं भाषापरिच्छेदे-

**''अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते''**।[14] इति।

न्यायमते प्रतिशरीरे एक एव मनः स्वीक्रियते। ननु मनसः एकत्वाभ्युपगमे एककालावच्छेदेन बहूनि कार्याणि कथमुत्पद्यन्ते इति वाच्यं चेत्, तन्न, एकं सदपि मनः अतिद्रुतगतिमत्वात् बहुविधं कार्यं साधयति।

तत्र बहुविधकार्येषु मिथः पौर्वापर्यभावः कल्प्यते, यथा शतपत्रभेदने पौर्वापर्यभावः कालभेदश्च न प्रतीयेते परञ्च प्रथमचरमपत्रयोर्मध्ये भेदनकाले पञ्चाशत् क्षणानां व्यवधानं भवति तथैवात्रापि बोध्यम्। अतो मनो एक एव। तदुक्तम् अन्नम्भट्टेन तर्कसङ्ग्रहे-

**''सुखाद्युपलब्धिसाधनमिन्द्रियं मनः, तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यञ्च''** इति। एतेन मनसः नित्यत्वं प्रतिपादितमेव।

सांख्यदृष्ट्या ज्ञानेन्द्रियकर्मेन्द्रियमनसाञ्चोत्पत्तिः सात्त्विकाहङ्काराद् भवति। अतः कार्यत्वाद् मनः अनित्यं, प्रकृतिपुरुषयोरन्यत्सर्वमनित्यमिति निर्देशात्। परिमाणदृष्ट्या तु सांख्यैः मनसः सङ्कोचविकासशालित्वान्मध्यमपरिमाणं निरूपितम्।

योगदर्शने तावत् सांख्यदर्शनवन्न मनसो मध्यमपरिमाणमपितु विभुपरिमाणवन्मन इति निष्कर्षः। विभुपरिमाणस्वीकारे सति प्रतिजीवः सर्वज्ञः स्यादिति न शङ्कनीयः यतः प्रतिशरीरवृत्तिमनसः प्रवृत्तिः अदृष्टवशाद् विशिष्टविषय एव भवति, अतो न सर्वज्ञत्वापत्तिः। उक्तञ्च व्यासभाष्ये-

**''वृत्तिरेवास्य विभुः सङ्कोचविकासिनीत्याचार्यः तच्च धर्मादिनिमित्तापेक्षमिति''**।

आचार्यविज्ञानभिक्षुणापि योगवार्तिके मनसो विभुत्वमित्थं प्रतिपादितम्-

**''धर्माधर्मवासनाश्रयतया प्रतिपुरुषमन्तःकरणं नित्यम्। तच्च नाणु सम्भवति, योगिनां सर्वावच्छेदेन एकदा अखिलसाक्षात्कारसंभवात्। नाप्यन्तःकरणं मध्यमपरिमाणं प्रलये विनाशेन अदृष्टाद्याधारतानुपपत्तेः, अतः परिशेषतो अन्तःकरणं विभु एव सिद्ध्यति।''** इति।

वाचस्पतिमिश्रेणापि तत्त्ववैशारद्यां निगदितम्-

**''मनसः कार्यत्वात् परिच्छिन्नत्वेऽपि गगनमण्डलवत् त्रैलोक्यव्यापित्वात् गगनादिव्यापित्वमेव मनोविभुत्वम्''**[15] इति। एतेन मनसः नित्यत्वं प्रतिपादितम्।

मीमांसकप्रवरप्रभाकरमतानुसारेण मनः अणुपरिमाणवद् भवति, यदि मनः विभुः स्यात्तर्हि उभयो: संयोग एव न स्यात्, किमपि ज्ञानञ्च नोत्पद्येत, अतः मनोऽणुरेव, अणुत्वात् नित्यत्वमपि। तदेवोक्तम्-

**''मनश्चान्तः शरीरं परमाणुपरिमाणम्। तत् खलु द्रव्यभूतं संयोगगुणभागितयेष्यते''**।[16] इति। भाट्टानुसारेण नेदमणुरपितु विभुः इति।

उक्तञ्च मानमेयोदये-

**''मनस्तु विभु तद्देहे च कार्यावहमिति।''** [17]

इदं तादृशं द्रव्यं यदात्मवत्स्पर्शशून्यं आत्माकाशवत् विभुः विद्यते परञ्च मनसः विभुत्वे तस्य यदा इन्द्रियेण सह सन्निकर्षः तदा ज्ञानमिति वक्तुं न शक्यते यत् विभुत्वात् तस्य सर्वत्र संयोगः स्वत एव सिद्धो भवति।

अद्वैतवेदान्तमते तु **''तन्मनोऽकुरुत''** **''एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च''** इति श्रुत्या मनसः अनित्यत्वं, परिच्छन्नत्वं च प्रतिष्ठापितं सहैव मनसः भौतिकत्वमपि साधितम्।

रामानुजदर्शनेऽपि अन्तरिन्द्रियं परिच्छिन्नं मन एक एव। तदुक्तम्-

**''रामानुजीयानां वेदान्तिनां मते एकमेवान्तःकरणं मनः, तच्चान्तरिन्द्रियं सांख्यमतं तदेव सात्विकाहङ्कारोपादानकं परिच्छिन्नं च''**[18] इति।

एतेन संक्षेपेणैवात्र भारतीयदर्शनेषु मनस्स्वरूपं, मनसः परिमाणप्रभेदादयश्च विवेचिता इत्यवधेयं विद्वद्भिः।

**।।इति शम्।।**

**सन्दर्भाः -**


1. यजुर्वेदः-शिवसङ्कल्पसूक्तम्।
2. ऋग्वेदः।
3. श्रीमद्भगवद्गीता- 6/34
4. तत्रैव।
5. श्रीसूक्तम्।
6. विष्णुपुराणम्- 6/7
7. तर्कसङ्ग्रहः।

8. न्यायसूत्रम्- 1/9
9. न्यायसिद्धान्तकारिकावली।
10. सांख्यकारिका।
11. श्लोकवार्तिकात्- 4/83
12. ब्रह्मसूत्रशाङ्करभाष्यम्।
13. तत्वसङ्ग्रहः (आचार्यशान्तरक्षितः)।
14. न्यायसिद्धान्तकारिकावली।
15. तत्त्ववैशारदी- 4/10
16. प्रभाकरमीमांसा- प्र.प./पृ.सं. 332
17. मानमेयोदयः-पृ.सं. 9
18. ब्रह्मसूत्रभाष्यम्- 4/23

******

 ISSN-2321-6948

# वैदिकशिक्षायाः उपादेयता – आधुनिकशिक्षाव्यवस्थासन्दर्भे

**प्रो. अशोककुमारकछवाहः**

आचार्यः, शिक्षाशास्त्रविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः, भोपालपरिसरः

प्राचीनभारतीयशिक्षायाः स्तरोऽयं प्रथमः । अस्मिन् स्तरे धर्मस्य स्थानं महत्त्वपूर्णमासीत्। धर्मस्य अर्थः अद्यत्वे यथा प्रचलति ततोऽपि अधिकविस्तृततया शिक्षायाः अर्थः गृह्यते स्म तदा । धर्मस्य । धर्मस्य संवर्धनाय साहित्यादीनां नियमानां नीतीनां वेदोपनिषदां संरचना कृता। प्राचीनभारतीयशिक्षा अध्ययनस्य दृष्ट्या डॉ. अल्टेकर-महोदयेन चतुर्धा विभाजिता –

1. प्रारम्भतः 1000 क्रिस्टोः पूर्व- वैदिककालः।
2. 1000 क्रिस्टोः पूर्वतः 200 क्रिस्टोः पूर्व - उपनिषत्कालः।
3. 200 क्रिस्टोः पूर्वतः 500 क्रिस्टोः पूर्व- धर्मशास्त्रकालः।
4. 500 क्रिस्टोः पूर्वतः 1200 क्रिस्टोः पूर्व- पुराणकालः।

यस्मिन् समये यस्याधिकरचना कृता तदाधारेण एते विभागाः । वैदिककालस्य विषये अद्यापि महान मतभेदः विद्वत्सु वरीवर्ति। वैदिककालस्य कालनिरूपणविषये पण्डितानां मतभेदः अद्यापि दृश्यते। अधः केषाञ्चन विदुषां वैदिककालनिरूपणं प्रदत्तम् -

1. मैक्समूलर-महोदयेन निर्धारितः ऋग्वैदिककालखण्डः 1000 क्रिस्टोः पूर्वतः 1200 क्रिस्टो पूर्व यावत्।
2. विण्टरनित्समहोदयेन स्वीकृतः ऋग्वैदिकरचनाकालः 4500 क्रिस्टोः पूर्वतः 6000 क्रिस्टोः पर्व यावत्। वेबरमहोदयेन स्वीकृतः ऋग्वैदिकरचनाकालः 1200 क्रिस्टोः पूर्वतः 1500 क्रिस्टोः पूर्व यावत् ।
3. बालगङ्गाधरतिलकमहोदयेन स्वीकृतः ऋग्वैदिकरचनाकालः 4000 क्रिस्टोः पूर्वम् । तिलकस्य मतमिदं जैकोबी-महोदयेनापि अङ्गीकृतम्।

**वैदिककालीनशिक्षा**

वैदिककालिकशिक्षायाः मूलन्तु वेदाः एव आसन् । वेदाधारिता शिक्षा दीयते स्म । प्राचीनभारतीयशिक्षायाः शैक्षिकसंरचना वैदिककालस्य शिक्षामुद्दीशति।

**वैदिककालीनशिक्षायाः उद्देश्यानि** -जीवनस्य सर्वाङ्गीणविकासेन मोक्षप्राप्तिः वैदिककालस्य शिक्षायाः मुख्यमुद्देश्यमासीत्। एतादृशेन शिक्षाव्यवस्था अपि सज्जीकृता बभूव । शिक्षोद्देश्येषु प्रधानानि भवन्ति -

1. व्यक्तित्वस्य तथा च सर्वाङ्गीणविकासः
2. मोक्षप्राप्तिः
3. जीवनस्य शिक्षा
4. सामाजिककुशलतायाः शिक्षा
5. संस्कृतेः संरक्षणशिक्षा
6. चरित्रनिर्माणम्

**1. व्यक्तित्वस्य तथा च सर्वागीणविकासः**

वैदिकशिक्षायाः उद्देश्यमासीत् व्यक्तेः व्यक्तित्वस्य सर्वाङ्गीणविकाससाधनम् । शिक्षायाः आदर्शः व्यक्तेः शारीरिक-मानसिक-आध्यात्मिकविकासे आसीत् । आत्मसंयमस्य आत्मसम्मानस्य च पाठः आचार्यैः पाठ्यते स्म।

**2. मोक्षप्राप्तिः**

वैदिकशिक्षायाः मुख्यमुद्देश्यमासीत् जीवन पवित्रीकृत्य मोक्षप्राप्तिः। एतत् उद्देश्यमाधारीकृत्यैव तत्कालीनशिक्षायाः सम्पूर्णपाठ्यक्रमः निर्मितः । जीवनस्य चत्वारः पुरुषार्थाः भवन्ति - धर्मः, अर्थः, कामः तथा च मोक्षः इति। एतेषां चतुर्णां सिद्धये वैदिककालीनशिक्षा प्रचलति स्म। मोक्षप्राप्तये धर्मसाधनम्, अर्थसङ्ग्रहः, कामप्राप्तिः तदनन्तरमेव मोक्षप्राप्तिः वैदिककालीनशिक्षायाः उद्देश्यमासीत्।

**3. जीवनस्य शिक्षा**

वैदिककालीनशिक्षा ज्ञानस्य शिक्षायाः अतिरिक्ततया जीवनस्य शिक्षामपि ददाति स्म। अध्ययनकाले विद्यार्थिभ्यः स्वावलम्बनस्य शिक्षा अपि दीयते स्म । जीवनस्य समयः आश्रमव्यवस्थया व्यभजत । जीवनयापनस्य प्रक्रियात्वेन चतुराश्रमस्य व्यवस्था कृता । जन्मनः पञ्चविंशतिं वर्षाणि पर्यन्तं ब्रह्मचार्याश्रमः। पञ्चविंशतितः पञ्चाशत्पर्यन्तं गार्हस्थाश्रमः । पञ्चाशत्तः पञ्चसप्ततिं पर्यन्तं वाणप्रस्थाश्रमः । अन्तिमपञ्चसप्ततितः वृद्धावस्थां यावत संन्यासाश्रमः । एवमेव आश्रमानुगुणं जीवनयापनस्य शिक्षा दीयते स्म।

**4. सामादिककुशलतायाः शिक्षा**

वैदिककाले शिष्याः मानसिकशिक्षया साकं सामाजिककुशलतायाः शिक्षामपि प्राप्नुवन्ति स्म । गुरोः आश्रम एव विद्यार्थिनः श्रमस्य महत्त्वम् अवगत्य समाजोपयोगिकार्येषु साहाय्यं कुर्वन्ति स्म । स्वस्मै स्वल्पं समाजाय सर्वस्वम् इत्येतादृश्यः धारणाः छात्राणां मनसि अग्रस्थानं भजन्ति स्म।

**5. संस्कृतेः संरक्षणशिक्षा**

वैदिककालीनशिक्षकाः वेदस्य रटनं कारयन्ति स्म ।अस्मात् वैदिकज्ञानस्य लोपः न जातः । अतः तत्कालिकी या वैदिकसंस्कृतिः आसीत् सा अद्यापि आंशिकरूपेण सुरक्षिता दरीदृश्यते । एवमेव संस्कृतेः सुरक्षा अपि तत्कालीनशिक्षायाः उद्देश्यमासीत्।

**6. चरित्रस्य निर्माणम्**

वैदिकयुगे छात्राणां कृते चरित्रनिर्माणस्य शिक्षा दीयते स्म । छात्राः सदाचारपूर्णजीवनेन विद्याध्ययनं कुर्वन्ति स्म ।ते स्वगुरुभ्यः प्रेरिताः बभूवुः ।गुरोः जीवनशैली तथा च जीवनमेव छात्राणां कृते प्रेरणाप्रदमासीत् । मातृदेवो भव, पितृदेवो भव इत्येतानि सर्वाणि अपि शिष्यचरित्रनिर्माणायैव आसन् । एतस्यायोजनमेवम्प्रकारेणासन् यत् प्रत्येकमपि छात्रस्य दृष्टिः जीवनस्य कृते उच्चस्तरीया भवेत् ।अतः चरित्रनिर्माणाय विभिन्नानां स्तुतीनां नियमानाञ्च प्रकल्पनं कृतम्।

**'असतो मा सद्गमय तमसो मा ज्योतिर्गमयमृत्योर्मा अमृतं गमय'**

इत्यादीना माध्यमेन छात्रेषु चरित्रविकासस्य धारा प्रचलन्ती आसीत्। स्वस्मै स्वल्पं समाजाय सर्वस्वम् इत्यादीनां माध्यमेन सामाजिकचरित्रविकासाय माध्यमेन सामाजिकचरित्रविकासाय प्रयत्नः विदधीत। एवं प्रकारेण वैदिकशिक्षायाः चर्चितानामुद्देश्यानां विश्लेषणं कर्तुं शक्यते यत् वैदिकशिक्षा एकमुखी नासीत्। एषा तु बहुमुखी प्रक्रिया आसीत्। ए. एस्. अल्टेकर्-महोदयेन स्पष्टमभिहितं यत् - ईश्वरशक्तिः, धार्मिकभावना, चरित्रनिर्माणम्, व्यक्तित्वस्य विकासः, नागरिक-सामाजिककर्तव्यपालन, सामाजिककुशलतायाः प्रोन्नति तथा च राष्ट्रियसंस्कृतेः संरक्षणं प्रसारश्च प्राचीनभारतीयशिक्षायाः उद्देश्यानि आसन इति ।

**वैदिककालीनशिक्षायाः विशेषताः**

प्राचीनभारतीयशिक्षायाः अर्थात् वैदिकशिक्षायाः काश्चन विशेषताः बभूवुः ।ताः भवन्ति ।

| | | |
|---|---|---|
| 1. गुरुकुलप्रणाली | 2. उपनयनसंस्कारः | 3. ब्रह्मचर्यपालनम् |
| 4. गुरुसेवा | 5. सदाचरणयुतानां प्रवेशः | 6. वैयक्तिकशिक्षा |
| 7. भौतिकशिक्षा | 8. अध्ययनकालः | 9.व्यावहारिकशिक्षा |
| 10. शिक्षणविधिः | 11. शिक्षावृत्तिः | 12.मूल्याकनम्/परीक्षा |

**1. गुरुकुलप्रणाली**

प्राचीनभारतीयशिक्षायाः प्रख्यातक्षेत्रमासीत् गुरुकुलप्रणाली । छात्रः बाल्यकाले एव गुरोः प्रति गत्वा गुरोः परिचर्यायाम् अध्ययनं चक्रुः । गुरुकुलानि ग्रामेभ्यः नगरेभ्यश्च दूरे भवन्ति स्म।

ग्रामेभ्यः नगरेभ्यश्च दूरे आदर्शवातावरणे गुरुकुलेषु शिक्षणव्यवस्था चलति स्म। गुरुः तथा च गुरुपत्नी पितृ-मातृवत् छात्रान्/शिष्यान् पालयतः स्म । शिष्याः अपि पितृ-मातृवत् गुरुसेवां कृत्वा विद्याध्ययनं कुर्वन्ति स्म।

**2. उपनयनसंस्कारः**

वैदिककाले छात्राणां विद्याध्ययनस्य औपचारिकप्रारम्भः संस्कारेण बभूव। यस्य संस्कारस्य नाम उपनयनसंस्कारः। उपनयनमित्यस्य शाब्दिकार्थः भवति समीपनयनम् इति। गुरोः समीपनयनम् इति। उपनयनसंस्कारानन्तरं बालकः ब्रह्मचर्याश्रमं प्रविशति । ब्रह्मचर्याश्रमं प्रवेशानन्तरं ब्रह्मचारी इत्यनेनोच्यते ब्राह्मण-क्षत्रीय-वैश्यवर्णानां कृते एतस्यावश्यकता आसीत् । अतः वर्णत्रयं द्विजः इत्युच्यते । द्विजः अर्थात् यस्य वारद्वयं जन्म भवति स द्विजोच्यते । उक्तञ्च मनुना-

"जन्मना जायते शुद्रः संस्कारात् द्विजोच्यते ।" इति शूद्रं विहाय अपरस्य वर्णत्रयस्य कृते उपनयनसंस्कारः आसीत् । उपनयनस्य समयविषये मुहूर्तचिन्तामणौ एवमुक्तम् -

**विप्राणां व्रतबन्धनं निगदितं गर्भाज्जने वाष्टमे**
**वर्षे वाऽप्यथा पञ्चमे क्षितिभुजां षष्ठे तथैकादशे।**
**वैश्यानां पुनरष्टमेऽप्यथ पुनः स्याद् द्वादशे वत्सरे**
**कालेऽथ द्विगुणे गते निगदिते गौणे तदाहुर्बुधाः॥**

अर्थात् ब्राह्मणानां गर्भात् जन्मनः वा अष्टमे पञ्चमे वा वत्सरे उपनयनसंस्कार: कर्तव्यः। क्षत्रियाणां षष्ठे एकादशे वा वत्सरे वैश्यानाम् अष्टमे द्वादशे वा वत्सरे अयं संस्कार: करणीयः।

**3. ब्रह्मचर्यपालनम्**

गुरोः आश्रमे केवलम् अविवाहितच्छात्राः एव प्रवेशार्हाः तथा च सम्पूर्णाध्ययनावधिं यावत् ब्रह्मचर्य पालनीयम् आसीत्। विवाहितच्छात्राणां प्रवेशः आश्रमे नासीत्। इन्द्रियनिग्रहः, सात्विकजीवनं ब्रह्मध्यानं कर्तव्यनिष्ठश्च एतेषामुपरि विशेषबलं प्रदत्तमासीत् वैदिककाले।

**4. गुरुसेवा**

वैदिककाले गुरुसेवायाः तथा च गुरुभक्तेः प्रधानता आसीत् । छात्राः आश्रमस्य सर्वविधमपि कार्य स्वयं कुर्वन्ति स्म । गुरोः आज्ञापालनं छात्राः कायेन मनसा वाचा धनेन च कुर्वन्ति स्म । गुरुराज्ञायाः पालनं ये न कुर्वन्ति स्म तेषां कृते कठोरदण्डः दीयते स्म । शिष्याः श्रद्धया भक्तिना च गुरुपूजाम् ईश्वरवत् कुर्वन्ति स्म।

**5. सदाचारयुतानां प्रवेशः**

गुरुकुले प्रवेशः सदाचारस्य आधारेण भवति स्म । सदाचारयुतानां तथा च उच्चचरित्रयुतां प्रवेशस्तत्र भवति स्म न तु नीचचरित्रयुतानाम्।

**6. वैयक्तिकशिक्षा**

वैदिकशिक्षा सामुहिकापेक्षया अधिकवैयक्तिकी आसीत् । प्रत्येकं छात्रस्य कृते वैयक्तिकम् अवधानमासीत्। व्यक्तेः शारीरिक-मानसिक-आध्यात्मिकविकासं कृत्वा शाश्वतसत्यस्य साक्षात्करणमेव वैदिककालस्य शिक्षायाः परमलक्ष्यमासीत्।

**7. भौतिकशिक्षा**

वैदिकशिक्षायां यद्यपि धर्मदर्शनयोः प्राधान्यमासीत् तथापि साधारणजनेभ्यः लौकिकशिक्षा अर्थात् शस्त्रविद्या, चिकित्साविद्या चेतेषां ज्ञानं प्रदीयते स्म।

**8. अध्ययनकालः दिनचर्या च**

गुरुकुले चतुर्विंशतिवर्षाणामध्येता "वसुः", षड्विंत्रशत् वर्षाणामध्येता "रुद्रः" तथा च अष्टचत्वारिंशत्वर्षाणामध्येता "आदित्यः" इत्यनेन उच्यते स्म।

दिनचर्या अतीव कठोरनीतिपूर्णा आसीत् । छात्रगणः ब्राह्ममुहूर्ते उत्थाय शौचस्नानादीनि नित्यकार्याणि संसाध्य यज्ञ-सन्ध्यादीनि कार्याणि कुर्वन्ति स्म । अध्ययनस्य अङ्गत्वेन पशुचारणं छात्राणां कृते अनिवार्यम् आसीत् । वर्षाकाले यदा गगणः मेघाच्छन्नः भवति स्म तदा शिक्षणकार्य स्थगयति स्म।

**9. व्यवहारिकशिक्षा**

धर्मदर्शनयोः शिक्षया साकं छात्राः जीवनोपयोगिशिक्षा प्राप्नुवन् । गुरोः आश्रमः छात्रजीवनस्य प्रयोगशाला आसीत् । छात्राः गुरोः गवां चारणाय वनं गत्वा पशुपालनशिक्षा प्राप्नुवन्ति स्म । तथा च गुरोः कृषिक्षेत्रम् अवलोक्य कृषिविद्यायां नैपुण्यं प्राप्नुवन्ति स्म।

**10. शिक्षणविधयः**

पुस्तकानाम् अभावकारणात् श्रवण-मनन-निदिध्यासनादीनामुपरि बलं प्रयच्छति स्म। गुरुमुखात् श्रुत्वा कण्ठस्थीकृत्य तस्य मननेन पुनः चर्चायाः आवश्यकता आसीत् । वैदिककाले छात्राणां कृते प्रत्यक्षरूपेण ज्ञानं दीयते स्म । शिक्षकस्य स्थान प्रमुखमासीत् । प्रश्नोत्तरविधिः कथा, अन्योक्तिः, व्याख्यान, वादविवादः क्रियात्मकविध्यादीनां प्रयोगः क्रियते स्म । मुख्यरूपेण तपः तथा

च श्रुति इत्यनेन विधिद्वयं प्रति प्रचलति स्म । तपविधौ स्वयं चिन्तनं तथा च आत्मानुभूतिज्ञानं प्राप्नुवन्ति स्म छात्रा। श्रुतौ छात्राः श्रुत्वा ज्ञानं प्राप्नुवन्ति स्म।

**11. भिक्षावृत्तिः**

स्वस्य तथा च गुरोः पोषणाय छात्राः भिक्षाटनं चक्रुः । वैदिककाले भिक्षावृत्तिः न निन्द्यते । अनया छात्रेषु विनम्रता तथा च सामाजिकभावना जायते स्म।

**12. मूल्याङ्कनम्/परीक्षा**

गुरुः सर्वदैव शिष्याणां मूल्याङ्कनं करोति स्म । किन्तु अन्तिममूल्याङ्कनपरीक्षा गुरुकुले नासीत्। गुरुः यदा छात्राणामुपरि सन्तुष्टो भवति स्म तदैव छात्राणां समाजं प्रत्यागमनाय आज्ञापयति स्म ।जीवन कृते शिक्षा दीयते स्म, अतः प्रकृतपरीक्षा जीवनयापनमेव इति ।

एवमितोऽपि काश्चन विशेषताः मुख्यतया दृश्यन्ते स्म । तास्तु- 1. पाठ्यक्रमः, 2. गरु.। शिष्यसम्बन्धः, 3. नारी शिक्षा, 4. शिक्षाप्रणाली च।

**1. पाठ्यक्रमः**

वैदिककालस्य पाठ्यक्रमः अथवा पाठ्यविषयः एकाग्रकरणाय तथा च समन्वयसाधनाय बभूव। पराविद्यायाः अन्तर्गतत्वेन वेदाः तथा च तेषां समीक्षा वैदिकपाठ्यक्रमस्य मुख्याङ्गमासीत्। शिक्षायाः माध्यमस्तु संस्कृतभाषा आसीत् । वेदाङ्गनाम् अवगमनाय तर्कशास्त्रस्य विशेषज्ञानं दीयते स्म ।

**2. गुरुशिष्यसम्बन्धः**

वैदिककाले गुरुशिष्ययोर्मध्ये मधुरसम्बन्धः तथा च आत्मिकसम्बन्धः आसीत्। गुरोः स्थान अत्यन्तं महत्त्वपूर्ण सम्माननीयञ्चासीत् । गुरुकुले पारिवारिकवातावरणमित्यतः गुरुः पितृमातृवत् व्यवहरति स्म । छात्राः गुरोः आज्ञां चिरं पालयन्ति स्म। गुरुशिष्ययोः पितृ-पुत्रवत् सम्बन्धः आसीत्। समाजे गुरोः स्थानं ब्रह्मवत् आसीदित्यस्य प्रमाण मन्त्रेऽस्मिन् प्राप्यते -

**गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुदेवो महेश्वरः।।**
**गुरुस्साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः॥** इति।

**3. नारीशिक्षा**

वैदिककाले स्त्रियः पुरुषाणां पूरकरुपेण गण्यन्ते स्म ।अस्मिन् काले विद्याध्ययने महिलानां पूर्णाधिकारः आसीत्। अधिकांशतः मातृपितृभ्याम् अथवा कुलपुरोहितद्वारा अध्ययनकार्यस्य प्रारम्भ कृतरासीत् । एतादृशीषु मैत्रेयी, गार्गी, कात्यायनी इत्यादीनां नारीणां विवरणं प्राप्यते।

**4. शिक्षाप्रणाली**

वैदिककाले सामान्यतः परीक्षा औपचारिकरूपेण न भवति स्म । गुरुः प्रतिदिनं छात्राणां दोषान् न्यूनताश्च असूचयत् । गुरुः असन्तुष्टः भवति चेत् अग्रे पाठ न पाठयति स्म । विद्वत्सभायां राजसभायाञ्च छात्राः स्वविद्वत्त्वं प्रमाणयन्ति स्म।

**वैदिककालीनशिक्षायाः प्रमुखबिन्दवः**

1. शिक्षायाः प्रारम्भस्य समुचितसमयः पञ्चवर्षाणि यावत् ।
2. गुरुः सर्वोच्चादर्शयुक्तः आसीत्।
3. सर्वेषां कृते शिक्षाप्राप्तये अवसरः आसीत् ।
4. व्यक्तित्वविकासाय शिक्षा दीयते स्म।
5. शीलनिर्माणाय शिक्षा दीयते स्म।
6. ब्राह्ममुहर्ते जागरणीयं छात्रैः।
7. नित्यपूजनव्यवस्था तथा च सन्ध्याचरणं करणीयम्।
8. सत्यकथनं, सर्वेषां प्रति प्रेमभावः, पूर्णशिक्षा इत्यादीनां प्रतिष्ठा आसीत्।
9. मनोवैज्ञानिकशिक्षापद्धतयः आसन् । मौखिकं मननं चिन्तनञ्च शिक्षायाः मुख्यविधयः आसन् । शिक्षायाः माध्यमः संस्कृतमासीत्।
10. अध्ययनसमाप्त्यनन्तरं समावर्तनसंस्कारः भवति स्म।
11. भौतिकशिक्षायाः व्यवस्था आसीत्।

एवमेव वैदिककालीनशिक्षा मानवहिताय समाजहिताय राष्ट्रहिताय च प्रचलन्ती आसीत्।

***

# भारतीयवाङ्मये गुरुः

**डॉ. बि.वेङ्कट लक्ष्मीनारायणः,**
सहायकाचार्यः, शिक्षाविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः,
अगरतला, त्रिपुरा

वेदाः हि अस्माकं प्राणस्वरूपाः। एते मानवमात्राणां कृते ज्ञानकोषाः। वेदे हि सर्वादौ विश्वकल्याणभावना उद्घोषिता। सम्पूर्णजगति धर्म-ज्ञान-विज्ञान-आचार-नियमादीनां विस्तारकं वेदज्ञानं जीवोद्धारणायैव प्रवर्तितम्। वेदाः खलु सर्वशास्त्राणामाकाराः। यतो हि मनुष्याणामुपभोगायै वेदं चराचरात्मकं जगत् परमेश्वरेण सृष्टमिति सर्वविदितम्। किन्तु भोग्यप्रपञ्चस्य स्वरूपस्वभावादिविषयकं तत्वज्ञानमन्तपेण तद्भोगः मनुष्याणां नष्टायैव भवति न तु लाभाय। तस्मात् परमकारुणिकेन परमात्मना जगतः स्वरूपस्वभावादिप्रतिपादकानि सर्वाण्यपि शास्त्राणि सृष्ट्यादौ एव वेदेषु उपदिष्टानीति मनीषिणामभिमतम्। यथा चोक्तं स्मृतिकारेण याज्ञवल्क्येन -

**न वेदशास्त्रादन्यत्तु किञ्चिच्छास्त्रं हि विद्यते।**
**निस्सृतं सर्वशास्त्रं तु वेदशास्त्रात्सनातनात्।।**

मनुना च प्रतिपादितम् -

**पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।**
**अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः।।**[1]

सर्वशास्त्रैः सह वेदेषु शिक्षा सम्बद्धाः अनेके विषयाः संचर्चिताः सन्ति।

**का नाम शिक्षा –** सामान्यतः व्यवहारिके जगति सर्वेऽपि जीवाः प्राणिनो वा निजसमाजसकाशात् शिक्षाम् अर्जयन्ति। वैदिकपरम्परायां शिक्षा इति शब्दः वेदाङ्गवाचकस्तु अस्ति एव, पुनश्च विद्यायाः प्राप्तौ, ज्ञानस्यार्जने च साधनं भवति। वेदानुसारं विद्यया अमृतत्वं प्राप्यते -’विद्ययाऽमृतमश्नुते।’ शिक्षा हि आत्मोत्कर्षणस्य साधनमस्ति। शिक्ष्-विद्योपादाने इत्यस्मात् धातोः ‘गुरोश्च हलः’ इति सूत्रेण अ प्रत्यये तथा स्त्रीत्वे टाप् विहिते सति निष्पन्नोऽयं शिक्षा शब्दः। अस्यार्थः भवति यत्

1. मनुस्मृतिः – 12-94

विद्याग्रहणम्, ज्ञानार्जनम्, शिक्षणम्, अध्ययनम्, विद्यादानमित्यादयः।शिक्ष्यते विद्योपादीयतेनयेति शिक्षा। अर्थात् प्राणिभिः येन साधनेन ज्ञानोपार्जनं क्रियते सैव शिक्षा।

**शिक्षाशब्दस्यार्थः —** अधिगमनम्, अध्ययनम्, ज्ञानाभिग्रहणम् एवञ्च कार्यसम्पादनार्थं स्थिता योग्यता। अनधिगत विषयस्य अधिगमः तथा अधिगतविषयस्य अभ्यास एव शिक्षा। शिक्षा मानवस्य सर्वाङ्गीणविकासस्य आधाररूपेण स्वीक्रियते। इयं मानवगतायाः उदात्तगुणानां जागरणे उद्दीपकरुपेण सहायिका भवति। शिक्षया विभूषितो जनः सर्वदा सच्चारित्र्ययुक्तः, नम्रः, उदारः, अनुशासितः, शान्तप्रियः, सहिष्णुः, कर्तव्यनिष्ठश्च भवति। ऋग्वेदानुसारं शिक्षा याऽस्माकमिच्छां कामनां वा पूरयति -'शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे'इति।

शिक्षा तु यदा कदापि यत्र कुत्रापि प्रदातुं शक्यते। न हि तस्याः स्थानकालादयः स्यात्। अत्राभिप्रायः - शिक्षाग्रहणं प्रदानं च सर्वदैव योग्यकार्यमिति - शिक्षेयमिन्महयते दिवे दिवे। इति।

वैदिकयुगे प्रकृतज्ञानस्य अन्वेषणाय गुरुमुखी शिक्षायाः व्यवस्था प्रकल्पिता। यतो हि प्रकृतज्ञानाहरणे गुरोः प्रयोजनीयता अनस्वीकरणीया वर्तते। तस्मादेव कारणात् वैदिकयुगे गुरोः सम्मानमाधिक्येन परिलक्ष्यते। गुरोः आचार्यस्य वा परमेच्छासीत् यत् तस्य शिष्याः प्रत्यहम् अधिकाधिकज्ञानग्रहणेन प्रकाशिताः स्युः इति -

**बृहस्पते सवितर्वर्धयैनं ज्योतयैनं महते सौभगाय।**
**संशितं चित्संतरं सं शिशाधि विश्व एनमनु मदन्तु देवाः।।**[1]

शिष्यैः ज्ञानपरम्परारक्षणमेव शिक्षकस्य मूलध्येयमासीत्। वैदिककालिकाचार्येषु गृत्समदः, विश्वामित्रः, वामदेवः, अत्रिः, भरद्वाजः, वशिष्टः, गौतमः, जमदग्निः, शुनश्शेपः, कश्यपः, कण्वः, बृहस्पतिश्चेत्यादयः प्रसिद्धाः आचार्याः आसन्। ते आचार्यास्तु महामानवाः, कर्मठाः, कृतभूरिपरिश्रमाः, सर्वथा आदर्शरुपाश्च परिलक्ष्यन्ते। इमे छात्राणाम् उपनयनसंस्कारं सम्पाद्य वेदशिक्षां प्रददाति स्म -

**स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।**
**उपनीय दद्धेदमाचार्यः स उधाहृतः।।**[2]

शिक्षकस्य पर्यायत्वेन आचार्यः, गुरुः, उपाध्यायः, अध्यापकश्चेति शब्दाः प्रयुज्यन्ते। शिक्षकपदस्य पर्यायत्वेन स्थितेषु प्रत्येकं शब्देषु सार्थकता अस्ति। यथा -

1अथर्ववेदः 7-16
2याज्ञवल्कस्मृतिः 1-34

**आचार्यः -** आचारं ग्राहयतीति आचार्यः।आचार्यः ब्रह्मचारिणे सदाचरणश्च शिक्षां प्रदाय तस्य जितेद्रियत्वं पोषयति। यथा - 'आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते।'[1]

**उपनीय च वै शिष्यं वेदमध्यापयेद्द्विजः।**
**सकल्पं सरहस्यं च तमाचार्यं विदुर्बुधाः।।**[2]

आचार्यः शिष्येभ्यः आचारविषयकज्ञानं प्रयच्छति अथवा स्वजीवने पालितैः आचारैः तेभ्यः मार्गदर्शनं कारयति, तस्मादेव कारणात् स आचार्य इत्युच्यते।

**गुरुः -** गिरति अज्ञानान्धकारम् इति गुरुः। यः स्वज्ञानैः शिष्यस्य अज्ञानान्धकारं नाशयति सः गुरु इति पदेनाभिदीयते। गुरुस्तु त्रिदेवानां प्रतीकत्वेन तथा परब्रह्मरुपेण आख्यायते। यथोच्यते –

**गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।**
**गुरुः साक्षात् परं ब्रह्मा तस्मै श्रीगुरवे नमः।।** इति

**उपाध्यायः -**यः वृत्यर्थं शिक्षणं विदधाति स्म सः उपाध्याय इति। स कस्यापि वेदस्य भागं वेदाङ्गं वा शिक्षयति स्म। यथा - **यस्त्वेनमल्पेनाध्यापयेत् तमुपाध्यायकमेदेशं वा।** इति

भरतमुनेरनुसारम् आचार्यस्य सम्बोधनार्थमुपयुज्यते उपाध्यायः -

उपाध्यायेति चाचार्यं वृद्धं तातेति चैव हि। इति

**अध्यापकः -**अधि-इ-णिच्-ण्वुल्इत्यनेन निष्पन्नोऽयं शब्दः। यः अध्यापनं, पाठनं वा करोति सः अध्यापकः।

**शिक्षकस्य गुणाः -**शिक्षकाणां गुणकर्तव्यादिविषये सुष्ठु वर्णनं वैदिकवाङ्मये संलक्ष्यते। ऋग्वेदस्य एकस्मिन् मन्त्रे शिक्षकः अग्निरुपेण स्तुतः तस्य सप्तगुणाश्च एव वर्णिताः। मन्त्रो यथा -

**वेधाअदृप्तोअग्निर्विजानन्नूधर्नगोनांस्वाद्मापितूनाम्॥**[3]इति।

1. वेधस् -शिष्याणां चरित्रनिर्माता।
2. अदृप्तः - अभिमानरहितः।
3. अग्निः - अग्निवत् तेजस्वी।
4. विजानन् - विविधविषयाणां विज्ञाता।
5. ऊधर्नगोनाम् - ज्ञानरूपदुग्धप्रदाता।

---

1अथर्ववेदः – 11-5-17
2स्कान्दपुराणम् – 4-53
3ऋग्वेदः सूक्तं 1.69.3

6. स्वाद्मा पितूनाम् - शिक्षाविषये मधुरत्वम्।
7. पिता पुत्र सन् - पितृवत् समादरणीय इति।

आचार्येण ब्रह्मचर्यव्रतं पालनीयम्। यथा -**आचार्यो ब्रह्मचारी।** अथर्ववेदे तु आचार्यं 'वाचस्पते', 'वसोष्पते' इत्युच्यते। अत्र वाचस्पति इत्यस्यारथो भवति वाणीनां स्वामी तथा विविधविषयेषु विज्ञः। वसोष्पतिः नाम वसुरर्थात् वाय्वग्न्यादीनां पञ्चतत्त्वानां गुणधर्माणां ज्ञाता स्यात्। एवञ्च आचार्यस्य तृतीयनेत्ररूपेण स्वीक्रियते ज्ञानं येन तस्यान्तर्ज्योतिः प्रकाश्यते - 'तृतीयेन ज्योतिषा सं विशस्व' इति। आचार्यस्य कृते एतदपि निर्देशितं यत् स स्वस्येन्द्रियाणामुपरि संयमनं रक्षेत्। यथा - **अक्षान् अहो नह्यतनोत् सोम्याः।** इति।

आचार्यः सर्वदा मननशीलः स्यात् तस्य जीवनञ्च वैदिकशिक्षानुकूलं वर्तयेत् –'मन्त्रश्रुत्यं चरामसि' इति। शिक्षकस्तु 'ज्ञानवान्' इति विशेषणेनापि अभिधीयते। सर्वेषु विषयेषु तस्य सम्यक् ज्ञानं स्यादिति काम्यते। शिक्षकस्य गुणविषये कथितं यत् - स सुदक्षः सुप्रज्ञश्च भवेत्–'सुदक्षो दक्षैः क्रतुनासि सुक्रतुरग्ने कविः काव्येनासि विश्ववित्।' यतो अदक्षः शिक्षकः समुचितपाठदानं कर्तुम् अनर्हः। शिक्षके अदक्षे सति छात्राणां विकासो नैव सम्भवति। तस्मात् शिक्षकः सदा दक्षो, योग्यः, ज्ञानवान् च भवेदिति। शिष्याः कर्मपटवः स्युः। कार्येषु तेषामभिरुचिवर्धनेन उच्चशिक्षाप्रदानेन च सर्वक्षेत्रे ते सुदक्षाः भवेयुः इत्यस्मिन् विषयेऽपि शिक्षकेण ध्यानं देयम्। यथा –**इमां धियंशिक्षमाणस्य देव क्रतुं दक्ष वरुण सं शिशाधि।**[1] इति।

अनुशासनहीनेन शैक्षिकपरिवेशो नश्यते। तस्मात् शिक्षकस्य कर्तव्यं भवति छात्राणां कृते कठोनानुशासनविधानम्।वेदादिशास्त्राध्ययनपुरःसरं तत्रत्यानां गूढरहस्यानां व्याख्यानमाध्यमेन छात्रान् प्रबुद्धकरणमाचार्याणां कर्तव्यमिति। यथा - 'विद्वान् पदस्य गुह्या न वोचत्' इति। वाणीषु संयमनं तथा जितेन्द्रियत्वं सुदक्षशिक्षकस्यान्यतम गुणो विद्यते। अतः सर्वभावेन छात्रान् सुयोग्यकरणं शिक्षकस्य प्रमुखकर्तव्यमिति ऋग्वेदे निहितम्। यथा -

**शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे। यदहं गोपतिः स्याम्।**[2] इति

1ऋग्वेदः सूक्तं 8.42.3
2ऋग्वेदः सूक्तं 8.14.2

छात्राः उपकृताः भवन्ति चेदेव शिक्षकोऽपि समादरणीयो भविष्यति। तथा च छात्राणां मनःस्थितमज्ञानं दूरीकृत्य शिक्षक अतिथिवत् पूजनीयो भवति समादारञ्च प्राप्नोति इत्यपि प्रतिपादितम्। यथा - 'मार्जाल्यो मृज्यते स्वे दमूनाः कविप्रशस्तो अतिथि शिवो नः'[1] इति।

एवं रीत्यावैदिकवाङ्मये शिक्षकाणां स्थानमत्यन्तप्रभावि आसीत्। गुरुं विना ज्ञानं प्राप्तुं न शक्यते। गुरुः न केवलं शैक्षिकाधिगमाय अपि च आध्यात्मिक-आधिदैविक-आधिभौतिकाभिवृद्ध्यर्थं परिश्रममकरोत्। अतः वैदिकवाङ्मये गुरोः महत्त्वमधिकं दरीदृश्यते।

**उपयुक्तग्रन्थसूची**

1. वैदिकवाङ्मयविवेचनम् – डॉ.कृष्णलालः – जे.पि.पब्लिकेशन् हउस् – दिल्ली.
2. भारतीय संस्कृति – डॉ.प्रीति प्रभा गोयल, राजस्थानी ग्रन्थगार, जोधपूर.
3. डा. लोकमान्यमिश्रः – पुरातनीशिक्षा, मृगाक्षीप्रकाशनम्, लखनौ, २००४.
4. श्रीकरपात्रस्वामी - वेदस्वरुपविमर्शः,भक्तिसुधासाहित्यपरिषदाप्रकाशनम्, १४५, काटन्स्ट्रीट्, कलकत्ता – ७, २०२६.
5. Sri GummaVeeranna – BharatiyaSamskruthithathvam, Pottisriramulu Telugu University Publications, Hyderabad, 2008.

***

1ऋग्वेदः वैदिकस्वरविरहितः मण्डलं 5.001.08

ISSN-2321-6948

# आपस्तम्बधर्मसूत्रानुसारं गुरुकुलशिक्षाव्यवस्था

**डॉ. मनोजकुमारसाहुः**
सहायकाचार्यः,धर्मशास्त्रविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः
जयपुरपरिसरः, राजस्थानम्

मानवः शतं वर्षाणि जीवति। तस्य समग्रमायुः भागचतुष्टयेन विभज्य प्रत्येकमेकैकेनाश्रमेण विभज्यते। तत्र प्रथमे भागे पञ्चविंशतिवर्षाणि यावत् ब्रह्मचर्याश्रमस्य कल्पना क्रियते। तथैव द्वितीयभागे पञ्चाशत् वर्षाणि यावत् गृहस्थाश्रमस्य , पञ्चसप्तति वर्षाणि यावत् वनप्रस्थाश्रमस्य तथा अन्तिमे शतं वर्षाणि यावत् सन्यासाश्रमस्य कल्पनाः क्रियन्ते। सनातनधर्मपरम्परानुसारं ब्रह्मचर्याश्रमैव गुरुकुलशिक्षाव्यवस्था अनुष्ठीयते। उपनयनसंस्कारेण संस्कृतो भूत्वा ब्रह्मचारी गुरुगृहे पठितुं योग्यः भवति। उपनयनस्य कालाः यथा वर्णानुसारं जन्मतः गर्भतः वा ब्राह्मणस्य अष्टमे वर्षे , क्षत्रियस्यैकादशवर्षे तथा वैश्यस्य द्वादशवर्षे अनुष्ठीयते। शूद्रस्योपनयनं नानुष्ठीयते। अपि च कन्यानां कृते उपनयनस्य व्यवस्था नास्ति। गुरुः शिष्यं महाव्याहृतिपूर्वकमुपनीय वेदमध्यापयेत् शौचाचारांश्च शिक्षयेत्। यथोक्तमस्ति याज्ञवल्क्यस्मृतौ-

**गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।**
**राज्ञामेकादेशे सैके विशामेके यथाकुलम् ।।**
**उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्।**
**वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्।।** (1)

मनुस्मृतावपि -

**उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।**
**आचारमग्निकार्यञ्च सन्ध्योपाशनमेव च ।।** (2)

सर्वे धर्मशास्त्रकाराः वर्णानुसारमुपनयनकालाः समाः स्वीकुर्वन्ति। परन्तु कुत्रचित् जन्मतः , कुत्रचित् गर्भतो उभयतो वा स्वीकुर्वन्ति। यथा मनुः गर्भतः स्वीकरोति यथा -

**गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।**
**गर्भादेकादेशे राज्ञो गर्भात्तु द्वादशे विशः।।** (3)

ब्राह्मणक्षत्रियवैश्यानामुपनयनस्य परमावधिकालाः यथाक्रमं षोडश-द्वाविंश-चतुर्विंशवर्षाणि भवन्ति । अपस्तम्बधर्मसूत्रानुसारं ब्रह्मचर्याश्रमे गुरुकुलशिक्षाव्यवस्था विषये

विचारो विद्यते यदुपनीतः ब्रह्मचारी आचार्यकुले वसेत्।यथोक्तमस्ति "उपेतस्याऽऽचार्यकुले ब्रह्मचारिवासः"।(4) यद्यपि गुर्वाचार्ययोः सामान्यभेदः विद्यते तथापि लोके बाहुल्येन व्यवहारत्वात् आचार्यकुलस्थाने गुरुकुलस्य प्रयोगः भवति। यथोक्तमस्ति मनुस्मृतौ -

**उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।**
**सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते।।**
**निषेकादीनि कर्माणि यः करोति यथाविधि।**
**संभावय त चान्नेन स विप्रो गुरुरुच्यते।।** (5)

याज्ञवल्क्येनाप्युक्तं यत् -

**स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।**
**उपनीय दद्वेदमाचार्य स उदाहृतः।।** (6)

अनेन ज्ञायते गुरुशब्दस्तु मुख्यरुपेण पित्रर्थे प्रयुज्यते। उपनायनात् वेदाध्यापनादाचार्यस्य नाम आयाति। परन्तु लोकव्यवहारत्वात् गुरुकुलस्य,गुरुगृहस्य वा प्रयोगे वाधा नास्ति। वेदाध्ययनस्य कालाः निर्द्धारिताः सन्ति। चतुर्षु वेदेषु प्रतिवेदं द्वादशवर्षाणि पठेत् चेत् अष्टचत्वारिंशद्वर्षाणि यावत् पठेत्। प्रतिवेदं नव वर्षाणि चेत् षट्त्रिंशद्वर्षाणि ,षड्वर्षाणि चेत् चतुर्विंशतिः वर्षाणि , त्रीणि चेत् द्वादशवर्षाणि यावत् ब्रह्मचारी पठेत्। विद्यार्थिना ब्रह्मचारिणा दिवसमात्रमपि परस्य समीपे न वस्तव्यम्। आचार्यस्य हितकारी भूत्वा शिष्यः प्रतिलोम्यं न कुर्यात्। अधःशायी स्यात् परन्तु दिवा न स्वप्यात्। श्राद्धार्थं देवतार्थञ्चानुद्देश्यं भोजनं न कुर्यात्। क्षारलवणमधुमांसानि वर्जयेत्। चन्दनादीनि सुगन्धद्रव्याणि न धारयेत्। मैथुनं वर्जयेत्। स्वशोभावर्द्धनं नेच्छेत्। स्वसुखार्थमुष्णोदकादिना विना शिरसा शरीरं न प्रक्षालयेत्। जले स्वशरीरशोभावर्द्धनाय ध्यानं दत्वा न स्नायात् परन्तु दण्डवत् प्लवेदिति। जटिलो शिखाजटो वा भूत्वा नापितेन इतरान् केशान् वापयेत्।(7)

अपि च ब्रह्मचारी गुरुगृहे स्थित्वा प्रत्यहं भिक्षाकर्म , ईन्धनसंग्रहः , अग्निकर्म ,रात्रौ गुरोः शयनादनन्तरं शयनं तथा उत्थानात्पुर्वं स्वस्योत्थानमित्यादीनि कर्माण्याचरेत् । यस्य विस्तृतं विवरणं मन्वादिषु स्मृतिग्रन्थेषु विद्यते। अभिवादनप्रसङ्गे ब्रह्मचारी सदैव आचार्यस्य पदोपसंग्रहणं कुर्यात्। उपसंग्रहणविधिः यथा स्वदक्षिणपाणिना आचार्यस्य दक्षिणपादं तथा सव्यपाणिना सव्यपादमधस्ताच्चोपरिष्टाच्च अभिमृश्य उपसंग्रहणं कर्त्तव्यम्। यथोक्तमस्ति आपस्तम्बधर्मसूत्रे - सदैवाऽभिवादनम्। उपसंग्राह्य आचार्य इत्येके। दक्षिणेन पाणिना दक्षिणं पादमधस्तादभ्यधिमृश्य सकुष्ठिकमुपसंगृह्णियात् । उभाभ्यामेवोभावभिपीडयत उपसंग्राह्यावित्येके।(8)

मनुस्मृतावपि-

**व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः।**
**सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः।।** (9)

अनेन ज्ञायते मनुस्मृतौ मुख्यरूपेण वेदारम्भे अवसाने च गुरोः पादोपसंग्रहणस्य व्यवस्था विद्यते परन्तु आपस्तम्बधर्मसूत्रे सदैव इयं व्यवस्था विद्यते। ब्रह्मचारी अध्ययनेषु गुरुकर्मसु च संयुक्तो भवेत् न अन्यत्र। आचार्येणाहूतः सन् अधीयीत ,न अध्यापने स्वयं प्रवर्त्तयेत्। यदा एकः शिष्यः अधीते तदा आचार्यस्य दक्षिणपार्श्वे उपविशेत् परन्तु बहुषु शिष्येषु यथावकाशं ते उपविशेयुः। ब्रह्मचारी यावतीं विद्यां पठितुं शक्नुयात् वेदं ,वेदौ,वेदान् वा तावतीमधीत्य गुरवे यथाशक्तिः दक्षिणां दद्यात्। यदा तु आचार्यः आपद्गतः तदा ब्रह्मचारी उग्रतः शूद्रतो वा प्रतिगृह्य दक्षिणामाहरेत्। अत्र उग्रः नाम वैश्याच्छूद्राभ्यां जातः , उग्रकर्मा द्विजातिः वा बोध्यते। आचार्याय एवमाहृत्य दत्वा न कीर्त्तयेत्। शिष्यः यां विद्यां पठितुमिच्छति तामध्यापयितुं यदि कश्चित् गुरुः असमर्थः भवेत् तर्हि गुर्वन्तरं गत्वा पठेत्। स्वगुरुवत् अपरं गुरुमपि तथैव आचरेत् यत्र अध्ययनसम्वन्धिज्ञानं प्राप्नोति। गुरुपत्निषु पुत्रेषु च गुरुवद्व्यवहरेत् परन्तु तासां पादोपसंग्रहणमुच्छिष्टभोजनं, पुत्राणाञ्च उच्छिष्टभोजनं न कुर्यात्।(10)

अन्तिमे एतद्वक्तुं शक्यते आपस्तम्बधर्मसूत्रे गुरुकुलशिक्षोपरि ये विषयाः वर्णिताः सन्ति ,सर्वेषु स्मृतिग्रन्थेषु सूत्रग्रन्थेषु च प्रायशः समविषयाः एव दृश्यन्ते परन्तु तत्र काचित् भिन्नता दृश्यते यथा वेदाध्ययने उपाकर्मोत्सर्जनविषयोपरि विचारो नास्ति । गुरुगृहे स्थित्वा ब्रह्मचारी भिक्षानिमित्तं यदा लोकालयमागच्छति तदा भिक्षाप्रत्याख्यानेन काः हानयः भवन्तीति विचारः आपस्तम्बधर्मसूत्रैव दृश्यते यदेकस्मिन् ब्राह्मणग्रन्थे विद्यते समाहितो ब्रह्मचारी याभिः स्त्रीभिः भिक्षमाणः प्रत्याख्यायते तेषां गृहस्थानां ,तासां स्त्रीणाञ्च यागैरर्जितं धर्मं ,प्रजां ,पशुमन्नन्तु आत्मसात्करोति। एतदर्थं सङ्घीभूतेषु ब्रह्मचारिषु गृहस्थः कदापि न प्रत्याचक्षीत। यथोक्तमस्ति - स्त्रीणां प्रत्याचक्षाणानां समाहितो ब्रह्मचारीष्टं दत्तं हुतं प्रजां पशून् ब्रह्मवर्चसमन्नाद्यं वृङ्क्ते। तस्मादु ह वै ब्रह्मचारिसंघं चरन्तं न प्रत्याचक्षीतापि हैष्वेवंविध एवंव्रतः स्यादिति हि ब्राह्मणम्।(11)

अपि च अध्यापनकाले एकश्चेत् शिष्यः गुरोः कस्मिन् पार्श्वे उपविशेत् तथा बहवश्चेत् शिष्याः कुत्र उपविशेयुः तस्य विचारः आपस्तम्बधर्मसूत्रैव प्राप्यते। गुरुकुले शिक्षासमाप्त्यनन्तरं ब्रह्मचारी गुरवे गो-भू-हिरण्यादीनि दक्षिणात्वेन स्वशक्त्यानुसारं ददातीति सर्वेषां धर्मशास्त्रकाराणामभिप्रायोऽस्ति। परन्तु आपदि स्वयं दातुमसमर्थे सति ब्रह्मचारी उग्रतः शूद्रतः वा प्रतिगृह्य गुरवे दक्षिणां दातुं शक्नोतीति विचारः अत्रैव दृश्यते।

प्राचीने अस्माकं देशे गुरुकुलशिक्षाव्यवस्थाः आसन्। परन्तु यवनानां वैदेशिकशत्रूणामाक्रमणेन वहवः गुरुकुलाः नष्टाः आसन्। गुरुकुलेषु नालन्दाविश्वविद्यालयस्य नाम सर्वोपरि आसीत् यत्र चीन्-तिब्बत्-श्रीलङ्कादिभ्यः आगताः वैदेशिकाः शिक्षां प्राप्नुवन्ति स्म। वक्तिआर्खिल्जीनाम्ना यवनशासकस्याक्रमणेन अयं ध्वंसः आसीत्। केचन ऐतिहासिकाः वदन्ति तस्मिन् ग्रन्थालये अग्निसंयोगवशान्मासानि यावदग्निप्रकोपादस्माकं वहूनि दुर्लभशास्त्राणि भस्मीभूतान्यासन्। आंग्लकालीनशिक्षानीतिहेतोरपि गुरुकुलस्य महत्त्वं नष्टमभवत्। आधुनिकशिक्षायां जनाः शिक्षिताः भवन्ति , सन्देहो नास्ति परन्तु तत्र नैतिकतायाः अभावः बहुषु स्थलेषु दृश्यते। उच्चशिक्षणादनन्तरमुचितं कर्मसंस्थानं न प्राप्यते चेत् स्थलविशेषेषु मानसिकास्थिरतायाः , आत्महत्यायाः घटनाऽपि दृश्यते। एकस्मात् सर्वेक्षणात् ज्ञायते यत् अस्माकं देशे यत्र कुत्रापि Cyber Crime , ATM Crime इत्यादिकं भवति प्रायशः सर्वेषु स्थलेषु उच्चशिक्षिताः जनाः एवंविधं कुर्वन्ति । बाल्यकालादेव छात्रान् सन्मार्गे आनयितुं ,नैतिकाध्यात्मिकशिक्षार्थञ्च गुरुकुलशिक्षायाः महत्यावश्यकता विद्यते इति नास्ति सन्देहस्यावकाशः।

**पादटीका-**

1-या.स्मृ 1/14-15 ।

2-म.स्मृ 2/69 ।

3- म.स्मृ 2/36 ।

4 –आ.ध.सू 1/1/2/11 ।

5- म.स्मृ 2/140,142 ।

6- या.स्मृ 1/134 ।

7- आ.ध.सू 1/1/2/12-32 ।

8- आ.ध.सू 1/2/5/21-22 ।

9- म.स्मृ 2/72 ।

10- आ.ध.सू 1/2/7/19-30 ।

11- आ.ध.सू 1/1/3/26 ।

***

# अश्विनोः आयुर्विज्ञानम्

**सत्यदेवः**
सहायकाचार्यः, शिक्षाशास्त्रविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, वेदव्यासपरिसरः,
बलाहरः, काङ्गडा, हि.प्र.१७७१०८


| **सङ्केतशब्दाः (Keywords)** | | | |
|---|---|---|---|
| ऋ. | ऋग्वेदः | तै.सं. | तैत्तिरीयसंहिता |
| अथर्व. | अथर्ववेदः | क.सं. | कठसंहिता |
| सुश्रुत. | सुश्रुतसंहिता | मै.सं. | मैत्रायणीसंहिता |
| श.ब्रा. | शतपथब्राह्मणम् | | |


**भूमिका (Introduction)**

वेदाः विज्ञानस्य अक्षयाणि स्रोतांसि सन्ति। भौतिकं विज्ञानं, रसायनविज्ञानं, वनस्पतिविज्ञानं, प्राणिविज्ञानं, भूगर्भविज्ञानं मनोविज्ञानं च इत्यादीनि अतिरिच्य आयुर्विज्ञानविषयकं विशिष्टं ज्ञानम् अपि वेदेषु उपलब्धं भवति। वैदिकासु देवतासु अग्निः, इन्द्रः, वरुणः, अश्विनौ, मरुत्, रुद्रः, आपः, पूषन्, उषस्, सोमः, सविता इत्यादीनीः देवभिषक् मन्वानः एताः मानवजीवनस्य पशूनां च जीवनस्य रक्षणरुपेण चित्रिताः सन्ति –

**शतं ते राजन् भिषजः सहस्रमुर्वी**
**गभीरा समुतिष्टे अस्तु।**
**बाधस्य दूरे निऋतिं पराचैः।**
**कृतं चिदेनः प्र मुमुग्ध्यस्मत्।।**[1]
**उन्नो वीराँ अर्पय भेषजेभिर्भि**
**षक्तमं त्वा भिषजा शृणोमि।।**[2]

1.ऋग्वेदः 1,24,9
2.ऋग्वेदः 2,33,1

ऋग्वेदस्य यजुर्वेदस्य अथर्ववेदस्य च एतादृशाः अनेके मन्त्राः सन्ति येषु एतासां देवतानां चिकित्साकौशलं परिलक्षितं भवति।[1]

वेदेषु आयुर्विज्ञानसम्बद्धासु देवतासु अश्विनोः युगलं सर्वाधिकं महत्त्वपूर्णं वर्तते। द्वावपि प्रसिद्धौ चिकित्सकौ स्तः। ऋग्वेदे एतौ देववैद्यौ कथितौ –

**उतत्या दैव्या भिषजा शं नः करतो अश्विना।**[2]

अथर्ववेदे अपि देववैद्यौ निगदितौ -

**प्रत्यौहतामश्विना मृत्युमस्मद्**
**देवानामग्ने भिषजा शचीभिः।**

अश्विनोः प्रतीकस्य व्याख्या अनेकरीत्या कृता। आयुर्विज्ञानदृष्ट्या एतौ आदर्शचिकित्सकस्य प्रतीकौ स्तः। ज्ञानं कर्म च द्वयम् अपि आयुर्विज्ञानस्य सिद्धान्तव्यवहारपक्षौ कथितौ। उत्तमस्य चिकित्सकस्य कृते अनयोः द्वयोः ज्ञानम् आवश्यकं वर्तते -

**उभयज्ञो हि भिषक् राजार्हो भवति।**[3]

अश्विनोः पक्षिणः पक्षद्वयवत् वर्णितौ स्तः। आयुर्विज्ञानरूपिणः पक्षिणः एतौ द्वौ पक्षौ नाम ज्ञानस्य (सिद्धान्तस्य) कर्मणः (व्यवहारस्य) च प्रतीकौ स्तः। ययोः विना आयुर्विज्ञानस्य गतिः सम्भवा न अस्ति। एतौ न केवलं देवचिकित्सकौ स्तः अपितु कस्यचित् शारीरिकव्याधिना मानसिकव्याधिना च ग्रस्तस्य मनुष्याय नवजीवनं प्रदत्तौ दृश्येते। स्वीयानाम् औषधीनां प्रयोगेण रोगपीडितानां चिकित्सां कुर्वन्ति। औषधीभिः युक्ततावशात् एतौ उत्तमौ चिकित्सकौ स्तः।

**युवं ह स्थो भिषजा भेषजेभिः।**[4]

चरकसंहितायां सुश्रुतसंहितायां कश्यपसंहितायां च अपि आयुर्विज्ञानस्य दैविकोद्भवस्य कथायाम् अश्विनीकुमार्योः उल्लेखः वर्तते। चरकसंहितानुसारं ब्रह्मणः प्रादुर्भूतम् आयुर्विज्ञानं प्रजापतिः अध्यगच्छत्। प्रजापतितः अश्विनौ, अश्विभ्यां पुनः इन्द्रेण, इन्द्रात् च महर्षिणा भरद्वाजेन अधिगतम्। अनेन एव अस्य प्रचारः प्रसारः कृतः।

---

1ऋग्वेदः 1.24.14-15, 1.25.21,7.88.7, 7.89.4-5, 8.41.1, 10.1.129.7, यजुर्वेदः 20.73, अथर्व. 5.15.12, 5.11.1,8-9, 5.2..7-9 (वरुणः) ऋग्वेदः 1.43.1-6,16, 1.3-5,7-10,2.33.2,4, 7.46.2-4,7.59.12 यजुर्वेदः 3.57-63,16.5-8,11,12,15-20,48,9 अथर्ववेदः 1.28.1,2

2. ऋग्वेदः 1.157.6

3. सुश्रुत.सू.3.45

4.ऋग्वेदः 1.157.6

**ब्रह्मणा हि यथाप्रोक्तमायुर्वेदं प्रजापतिः**
**जग्राह निखिलेनादवश्विनौ तु पुनस्ततः।।**
**अश्विभ्यां भगवांश्छक्रः प्रतिपेदे ह केवलम्।**
**ऋषि प्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागतम्।।**

सुश्रुतसंहितायाम् अपि आयुर्विज्ञानस्य इतिहासक्रमे अश्विनीकुमारयोः योगदानं प्रदर्शितं। अस्याः संहितायाः अनुसारं ब्रह्मणा आयुर्वेदस्य उपदेशः कृतः। ब्रह्मणा प्रजापतिः दक्षः, दक्षप्रजापतेः अश्विनीकुमारौ, अश्विभ्याम् इन्द्रः, इन्द्रेण धन्वन्तरिः एतत् ज्ञानं प्राप्नोत् -

**ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे, तस्मादश्विनौ, अश्विभ्यामिन्द्रः इन्द्रादहम्।**

चरकसंहितायां सुश्रुतसंहितायां काश्यपसंहितायां वर्णितायाम् आयुर्विज्ञानस्य उद्भवसम्बन्धिन्याम् अस्यां कथायां कायचिकित्सायाः प्रवर्तकः महर्षिः भरद्वाजः, शल्यचिकित्सायाः प्रवर्तकः महर्षिः धन्वन्तरिः, कौमारभृत्यस्य नाम बालचिकित्सायाः प्रवर्तकः महर्षिः काश्यपः च एतदङ्गीकुर्वन्ति यत् अश्विभ्यां कायचिकित्सायाः, शल्यचिकित्सायाः बालचिकित्सायाः च ज्ञानम् इन्द्राय प्रदत्तम्। इन्द्रेण च एतत् ज्ञानं क्रमशः अस्मभ्यं प्रदत्तम्।

शल्यं, शलाका, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्रं, रसायनतन्त्रं,वाजीकरणं च एतानि आयुर्वेदस्य अष्टौ अङ्गानि सन्ति। वैदिकयोः अश्विनोः परम्परायां सुश्रुतः शल्य-शलाके च चिकित्सायाः अनिवार्यम् अङ्गं मनुते स्म। यतोहि प्रथमे दैवासुरसंग्रामे व्रणोत्पत्तेः रोहणेन यज्ञशिरः संयोजनेन शल्यतन्त्रपरम्परया प्रधानं मन्यते।

सुश्रुतः शल्यचिकित्सायाः क्षेत्रे अश्विनोः दक्षतां वर्णयन् अश्विभ्यां यज्ञस्य शिरः संयोजनस्य कथायाः उल्लेखं कुर्वन् कथयति यत् रुद्रेण यज्ञस्य शिरच्छेदः अकारि। तदा देवताभिः अश्विनोः समीपं गत्वा कथितं यत् भवन्तौ द्वावपि यज्ञस्य शिरः योजयताम् इति। तदा अश्विभ्यां यज्ञस्य शिरसः योजनं कृतम् -

**श्रूयते हि यथा — रुद्रेण यज्ञस्य शिरश्छिन्नमिति, ततो देवा अश्विनावभिगम्योचुः — भगवन्तौ। नः श्रेष्ठतमौ युवां भविष्यथः, भवद्भ्यां यज्ञस्य शिरः सन्धातव्यमिति। तावूचतुरेवमस्त्विति। अथ तयोरर्थे देवा इन्द्रं यज्ञभागेन प्रासादयन्। ताभ्यां यज्ञस्य शिरः संहितम् इति।।**

अश्विनौ अंगप्रत्यारोपणे कुशलौ आस्ताम्। सुश्रुतसंहितायाम् उद्धृता उपरिलिखिता यज्ञस्य कर्तितशिरसः अश्विभ्यां योजनस्य कथा तैत्तिरीयसंहितायां[1] मैत्रायणीसंहितायां[2], कठसंहितायाम्[3] अपि प्राप्यते। कठसंहितायाम्[4] अश्विनीकुमारयोः चिकित्सकरुपस्य वर्णनं कुर्वन् ताभ्यां यज्ञस्य शिरःयोजनस्य उल्लेखः एवम्प्रकारेण अस्ति –

**यज्ञस्य शिरः अच्छिद्यत्। ते देवा अश्विनौ तमब्रुवन् भिषजौ वै स्थः। इदं यज्ञस्य शिरः प्रत्यद्यत्तम् इति। तौ अब्रूतां वरं वृणावहै। ग्रहा एव नौ अत्रापि गृह्यताम् इति। ताभ्यामेतत् अश्विन् अगृह्णन्। ततो वै तो यज्ञस्य शिरः प्रत्यधत्तम्..........तौ देवा, अब्रुवन् अपूतो वै इमौ मनुष्यचरौ भिषजौ इति.........अपूतौ ह एष अमेध्यो भो भिषक्। तौ बहिष्पवमानेन पावयित्वा ताभ्यामेताश्विनमगृह्णन्।**

एतस्मिन् सन्दर्भे एतत् अपि उल्लेखनीयं यत् मनुष्याणां चिकित्सकौ इति कारणेन (मनुष्यचरौ भिषजौ) पूर्वम् अश्विनौ 'अपूतम्''अमेध्यम्'च अधिगम्येते स्म। तदनु देवताः तौ बहिष्पवमानैः स्तोत्रैः पवित्रीकृत्य सोमाधिकारिणौ कुर्वन्ति।

शतपथब्राह्मणे[5] अपि अश्विभ्यां यज्ञशिरसः संयोजनप्रसङ्गः प्राप्यते।

**...तौ एतद्यज्ञस्य शिरः प्रत्यधत्तम्।**

अङ्गप्रत्यारोपणस्य अन्यस्मिन् एकस्मिन् प्रसङ्गे अश्विनोः चिकित्सीयकौशलं वर्णयन् शतपथब्राह्मणे वर्णितमस्ति यत् अश्विभ्यां दधीचिर्षेः (दध्यङ्) कथनानुसारं कस्यचित् अश्वस्य शिरः आनीय योजितम् आसीत्[6]। यदा इन्द्रेण क्रुद्धीभूय दध्यङ्ऋषेः पुरातनं मनुष्यशिरः पुनर्योजितम्। शिरसः प्रत्यारोपणस्य अस्याः कथायाः बीजानि ऋग्वेदे मिलन्ति।[7]

कस्यचित् उत्तमस्य आधुनिकचिकित्सकस्य साम्यत्वे अश्विनौ लौहजङ्घायाः स्थापनरुपिकार्ये अपि दक्षौ स्तः। रवेलराज्ञः सम्बन्धिन्याः विश्पलानामकस्त्रियाः पादः युद्धे कर्तितः अभवत्, अश्विनौ तस्याः लोहजङ्घां संस्थाप्य युद्धाय सज्जीकृतवन्तौ[8] -

---

1. तै.सं. 6.4.9
2. मै.सं.4.6.1.2
3.क.सं.27.4.5
4.क.सं.6.4.9.1.
5.श.ब्रा.14.1.1.15
6.श.ब्रा.14.1.33
7.ऋ.वे.1.116.12, 1.119.9
8.ऋ.वे. 1.116.15, 1.112.10, 1.117.11., 1.118.8

**चरित्तरं हि वेरिवाच्छेदि पर्णमाजा**
**खेलस्य परितक्म्याम्।**
**सद्यो जङ्घामायसीं विश्पलायै**
**धने हिते सर्तवे प्रत्यधत्तम्।।**

अश्विनौ नेत्रचिकित्सकौ अपि स्तः। एताभ्यां वृषगिरनामकस्य राज्ञः पुत्रम् ऋज्राश्वं नेत्रयुक्ताम् अकुरुताम्[1] -

**शतं मेषान् वृक्ये चक्षुदानमृज्राश्वं**
**तं पितान्धं चकार।**
**तस्मा अक्षी नासत्या विचक्ष**
**आधत्तं दस्रा भिषजावनर्वन्।।**

ताभ्यां कस्मैचित् अन्धकवये अपि नेत्रदानं कृतम्[2] -

**उतो कविं पुरुभुजा युवं ह**
**कृपमाणमकृणुत विचक्षे।**

दृष्टिविहीनाय कण्वाय अपि ताभ्यां नेत्रज्योतिः प्रदत्तम्[3] -

**युवं श्यावाय रुशतीमदत्तं महः क्षीणस्याश्विना कण्वाय।**

ताभ्यां (उचश्यपुत्रस्य) दीर्धतमस्य अन्धत्वं दूरीकृतम् अथ च भगस्य विदीर्णनेत्रं समीकृतम्। अश्विनौ कर्णरोगविशेषज्ञौ अपि स्तः। ताभ्यां बधिराय नृषदपुत्राय श्रवणशक्तिः प्रदत्ता[4] -

**प्रवाच्यं तद् वृषणा कृतं वां**
**यन्नोर्षदाय श्रवो अध्यधत्तम्।**

ताभ्यां कक्षीवानस्य बधिरत्वं दूरीकृतम्। एतौ अन्धान् खञ्ज्ञान् च सम्यक् कुरुतः (स्नामं संरिणीथ)[5] चलनशक्तिं प्रयच्छतः।

**याभिः शचीभिः वृषणा परावृजं**
**प्रान्धं श्रोणं चक्षस एतवे।**

1.ऋ.वे.1.117.17
2. ऋ.वे.1.116.14
3.ऋ.वे.1.117.8 (i)
4.ऋ.1.117.8 (ii)
5.ऋ.1.112.8.

अश्विनौ दन्तरोगविशेषज्ञौ अपि स्तः। तौ पूषनः नष्टदन्तान् सम्यक् अकुरुताम्। अश्विनौ नष्टाङ्गानां संधानं कुरुतः। तौ भगनस्थिनां योजनकार्ये प्रवीणौ स्तः। तौ ऋषेः श्रोणस्य जानुसंधिगतायाः दुर्बलतायाः निराकरणं कृतवन्तौ। अश्विनौ त्वग्रोगविशेषज्ञरुपेण अपि चित्रितौ स्तः। एतौ घोषायाः त्वग्रोगस्य निदानं कृतवन्तौ[1] -

**घोषायै चित् पितृषदे दुरोणे**
**पतिं जूर्यन्त्या अश्विनावदत्तम्।।**

अश्विनौ अत्रिर्षेः अग्निदग्धस्य चिकित्सां कृत्वा शल्यचिकित्साक्षेत्रे अद्भुतं कार्यम् अकुरुताम्।

कायाकल्पकलायाम् अश्विनौ अद्वितीयौ स्तः। ताभ्यां स्वस्य चिकित्साकौशलेन वृद्धः च्यवनः पुनः तरुणः कृतः[2]।

**युवं च्यवानमश्विना जरन्तं**
**पुनर्युवानं चक्रथुः शचीभिः।**

एकस्मिन् अन्यस्मिन् सन्दर्भे एतत् कथितं यत् अश्विनौ अतिवृद्धस्य च्यवनर्षेः शरीरात् वार्धक्यचर्म उत भालरेखाः अवतार्य तं तरुणं कृतवन्तौ[3]।

**जुजुरुषो नासत्योत वार्व्रं**
**प्रामुञ्चतं द्रापिमिव च्यवानात्।**
**प्रातिरतं जहितस्यायुर्ददस्त्रादित्**
**पतिमकृणुतं कवीनाम्।।**

महाभारते[4] अपि अश्विभ्यां च्यवनर्षेः कायाकल्पस्य कथा वर्णिता अस्ति। श्रीमद्भागवते[5] अपि इयं कथा वर्णिता वर्तते। कायाकल्पस्य चिकित्सायां प्रवीणौ अश्विनौ राज्ञे कलये पुनर्यौवनं प्रायच्छताम्।[6]

**पुनः कलेरकृणुतं युवद् वचः।**

---

1.ऋ.1.117.7
2.ऋ.1.117.113
3.ऋ.1.116.10
4.123, 124 अध्याये
5.9.21-26
6.ऋ.10.39.8

अश्विनौ वन्दन-कक्षीवान-अत्रि-श्रावादीन् ऋषीन् अपि पुनर्यूनः अकुरुताम्।

अश्विनोः समीपं मृतसंजीवनीशक्तिः वर्तते। इमौ मृतप्रायं नाहुषं स्वस्थं कृतवन्तौ। निमज्जितं मृतप्रायं रेभं जीवितं कृतवन्तौ[1] -

**अश्वं न गृह्ळमश्विना दुरेवैर्ऋषि**
**नरा तं रिणीथो विप्रुतं दंसोभिर्न**
**वां जूर्यन्ति पूर्व्यां कृतानि।।**

अश्विनौ स्त्रीरोगविशेषज्ञौ अपि स्तः। तौ गर्भपोषकतायाः, नियन्त्रकतायाः, सुखपूर्वकप्रसवविद्यायाः च अपि ज्ञातारौ आस्ताम्। इमौ वध्रिमत्याः वन्ध्यात्वं दूरीकृतवन्तौ[2]।

**हिरण्यहस्तमश्विना रराणा पुत्रं नरा**
**.......वध्रिमत्या अदत्तम्।**

अश्विनौ जह्नोः प्रजाः पुत्रवतीः अकुरुताम्। राज्ञे मानाय पुत्रः अदायि। वामदेवः मातृगर्भात् निष्कासितः।

अश्विनीकुमारौ पशुचिकित्साम् अपि जानन्ति। एतौ गर्भधारणदुर्बलायाः धेनोः वन्ध्यात्वं दूरीकृतवन्तौ[3]।

**अधेनुं दस्रा स्तर्यं विषक्तामपिन्वतं शयवे अश्विना गाम्।**

वस्तुतः अश्विनोः आयुर्विज्ञानम् अत्यन्तम् उत्कृष्टं वर्तते। अयं युग्मः शल्यानां चिकित्सानां च सम्प्रदायानां यौगिकं रूपं वर्तते। अश्विनौ आयुर्विज्ञानस्य सैद्धान्तिकं व्यावहारिकं च अनयोः द्वयोः अपि पक्षयोः निष्णातारौ स्तः। तेषां 'सर्जिकल्''मैडिकल्' कार्याणां सूची सुदीर्घा वर्तते।इमौ शल्यचिकित्साविशेषज्ञौ, नेत्रचिकित्साविशेषज्ञौ, कर्णविशेषज्ञौ, दन्तविशेषज्ञौ, अस्थिविशेषज्ञौ, त्वग्रोगविशेषज्ञौ, सामान्य-भयङ्करोगविशेषज्ञौ, स्त्रीरोगविशेषज्ञौ पशुरोगविशेषज्ञौ च स्तः। आयुर्विज्ञानस्य विविधशाखानां विशेषज्ञानाम् एकरूपतायाः दर्शनम् अस्माभिः अश्विनीकुमारयोः प्राप्यन्ते। विज्ञानस्य आधुनिके युगे एवंभूतः विशेषज्ञः नितान्तं दुर्लभः वर्तते, यस्य अश्विनोः सदृशम् आयुर्विज्ञानस्य सर्वक्षेत्रेषु समानाधिकारः भवेत्।

**सन्दर्भाः** -

1ऋ.1.117.24
2ऋ.1.117.4
3.ऋ.1.117.20

* सिद्धान्तालङ्कारः, प.हरिशरण, , ऋग्वेदभाष्यम्, प्रथमं मण्डलम् अभ्युदय भवन, राजस्थानम् संस्करण-2010
* सिद्धान्तालङ्कारः, प.हरिशरण, , ऋग्वेदभाष्यम्, द्वितीयं मण्डलम् अभ्युदय भवन, राजस्थानम् संस्करण-2010
* सिद्धान्तालङ्कारः, प.हरिशरण, , ऋग्वेदभाष्यम्, तृतीयं मण्डलम् अभ्युदय भवन, राजस्थानम् संस्करण-2010
* सिद्धान्तालङ्कारः, प.हरिशरण, , ऋग्वेदभाष्यम्,पञ्चमं मण्डलम् अभ्युदय भवन, राजस्थानम् संस्करण-2010
* सिद्धान्तालङ्कारः, प.हरिशरण, , ऋग्वेदभाष्यम्,षष्ठमं मण्डलम् अभ्युदय भवन, राजस्थानम् संस्करण-2010
* सिद्धान्तालङ्कारः, प.हरिशरण, , ऋग्वेदभाष्यम्, सप्तमं मण्डलम् अभ्युदय भवन, राजस्थानम् संस्करण-2010
* सिद्धान्तालङ्कारः, प.हरिशरण, , ऋग्वेदभाष्यम्, अष्टमं मण्डलम् अभ्युदय भवन, राजस्थानम् संस्करण-2010
* अष्टाविंशत्युपनिषद्, व्यास प्रकाशन, वाराणसी -1
* त्रिखा निर्मल, संस्कृतविज्ञानदीपिका, दिल्ली, संस्करण-2008

***

 ISSN-2321-6948

# योग: चिन्तनञ्च

**डॉ. ओमनारायणमिश्रा**
सहायकाचार्य: शिक्षाशास्त्रविभाग:
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः, पुरी

व्युत्पत्तिदृष्ट्या पातञ्जलयोग: चित्तवृत्तिनेरोध एव। येषाम् आत्यन्तिकरुपेण चित्तवृत्तय: निरुद्धा: जायन्ते ते सर्वे स्वयंसिद्धाः इति प्रसिद्धाः। किञ्चित् कालं यावत् चित्तवृत्तीनां निरोधः न योगः अपि तु चित्तवृत्तीनां आत्यन्तिकैकान्तिकनिरोधः योग: इति।

योगविषये ऋग्वेदे उक्तमस्ति यत् यैः देवैः विना प्रकाशपूर्णज्ञानिनां जीवनयज्ञोऽपि न साफल्यमाप्नोति। तेषु देवेषु विद्वद्भिः स्वबुद्धेः स्वकर्मणश्च योग: कर्तव्यः। तेषां बुद्धिः तद्देवेन सह तदाकारो भवति। तथा सः तेषां कर्मणि अप्याप्लावितो: भवति। अथवेदे अपि उक्तमस्ति -

अष्टचक्रा नवद्वारा देवानां पूरयोध्या।
तस्यां हिरण्मयः कोशः स्वर्गो ज्योतिषावृतः।।[1]

अष्टचक्रयुक्ता: नवद्वारयुक्ता: च अस्माकम् एषा देहपुरी एका अपराजेयदेवपुरी अस्ति। अस्यां देहपूर्यामेको तेजस्वी कोशोऽस्ति। एतान् विहाय ऋग्वेदे, अथर्ववेदे चानेकेषु स्थलेषु योगवर्णनमवलोक्यते। तथा च योगस्य स्थिरतायां धारणायां परिपुष्टिर्भवति य: योगस्य प्राचीनत्वं सिद्धयति।

महाभारते यात्रवल्क्यस्मृतौ च योगस्य आदिप्रवर्तकत्वेन हिरण्यगर्भः प्राप्यते। महाभारते स: वेदे स्तुतः योगिभिः पूजितः तथा संसारस्य विभूत्वेन प्राप्यते योगः। श्रीमद्भागवतपुराणे अपि हिरण्यगर्भो योगस्य प्रवर्तकत्वेन प्राप्यते।

श्रीमद्भगवद्गीतायां तु योगप्रवर्तकत्वेन भगवान् नारायण: प्राप्यते। नारायणात् योगविद्या सूर्यदेवः, सूर्यदेवात् मनुः, मनोरीक्ष्वाकु: लब्धवान्। अनेन रुपेण योगोऽयं धरामण्डलेऽस्मिन् प्रावर्तते।

भगवता हिरण्यगर्भेण एकस्यैव अव्यययोगस्य उपदेश: प्रथमं सनकादिभ्य: प्रदाय पश्चात् च सूर्याय दत्तः। तदनन्तरं समाहितान्तकरण-व्युत्थितान्तकरणभेदेन योगोऽयं ब्रह्मयोग-कर्मयोगनाम्नाभ्यां द्विधा विभक्तो जातः। शुद्धान्तकरणवन्तः ब्रह्मयोगपरायणा : सनकादिऋषयः

[1] अथ.वे. - १०/२/३१

निवृत्तर्मार्गावलम्बिना अभवन्। एषा योगपरम्परा सनक सनन्दन-सनातन-कपिल-आसुरि-वोढु-पञ्चशिख-नारद-शुकादीनामासीत्। एषा परम्परा साङ्ख्ययोग-ज्ञानयोग आध्यात्मयोगनामभिः विख्याता जायते।

अस्यामेव परम्परायां कात्यायन-गौतम-गार्ग्य-आवट्यायन-जैगीषव्य-असित-देवल-केशिध्वज-खाण्डिक्य भार्गव-उलूक-वाल्मिकि-हारीत-बाद्धति-कैरात-पौरि-ऋषभेश्वर-पञ्चाधिकरण-पतञ्जलि-वार्षगण्य-कौण्डिन्य-मूकादिमुनि इतरभृगु-वशिष्ट-करालजनक-पराशर-याज्ञवल्क्यादयः योगिनः जायन्ते। अपरायां योगपरम्परायां सूर्यः एतां योगविद्यां मनवे दत्तवान् मनुरीक्षाकवे, ईक्ष्वाकुः राजर्षिभ्यः प्रजाभ्यश्च दत्तवान्।

**व्यक्तित्वचिन्तनयोः गुणात्मकनिरूपणम् -** व्यक्तित्वं जनस्य मनोशारीरिककारकाणां गत्यात्मकसंघटनं जायते। व्यक्तित्वे न केवलं वाह्यकारकाः ये दृश्यमानाः जायन्ते प्रभवन्ति अपितु आन्तरिकाः करकाश्चेति महत्वपूर्णाः। आन्तरिके पक्षे शरीरस्यान्तरिकी संरचना, रसायनोत्पादनं निर्गमनञ्च प्रभवन्ति तथैव वाह्यशारीरे जनानां शारीरिक सौष्ठवं क्रियाशीलत्वञ्च मुख्यभूमिका निर्वहन्ति।

व्यक्तित्व-चिन्तनयोः निरूपणेऽस्मिन् प्रसङ्गे साङ्ख्यदर्शनस्य अनुभूतिगम्याः त्रिविधाः गुणाः महत्त्वपूर्णाः सन्ति यथा- सत्त्वगुणः, रजोगुणः-तमोगुणश्चेति। सत्वस्य कार्य सुखम्। रजोगुणस्य कार्य दुःखम्। तथैव तमोगुणस्य कार्यं मोहोत्पादनमेव। गुणाः दर्शनेन्द्रियगोचराः भवन्ति। तदुक्तं वर्तते यथा - गुणानां परमं रूपं न दृष्टिपथमिच्छति इति। सर्गकाले एते त्रयो गुणाः एव मिलित्वा सृष्टिकार्य सञ्चालयन्ति। लयकाले बीजरुपेण प्रकृतौ एते विलीनाः जायन्ते। एषां गुणानां साम्यावस्था प्रलयः सृज्यते।

अस्य प्रभावः जनानां चिन्तनशक्तौ तथा च सम्पूर्ण व्यक्तित्वे भवति। सत्वगुणः श्वेतवर्णीयः, सुखदायकः, प्रकाशकः लघुश्च भवति। रजोगुणः दुःखदायकः प्रेरकः तथा च रक्तवर्णीयो भवति। तमोगुणः अवरोधकः प्रेरकः कृष्णवर्णीयश्चेति।

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः।
गुरुवरणकमेव तमः प्रदीपवाच्चार्थतो वृत्तिः।।[1]

प्रत्ययसर्ग इति साङ्ख्यस्याकर्षकः मनोवैज्ञानिकञ्च विमर्शो जायते। प्रतीयन्ते अनेनिति प्रत्ययः बुद्धिः तस्य सर्गः प्रत्ययसर्ग इत्युच्यते। तत्र बुद्धिः धर्माधर्मद्यष्टरुपोपन्ना एकरूपेण अवस्थिता

---

[1] सावय. का. (ई.कृ.) - १३

सतीसमष्ट्या प्रत्ययसर्गेति संज्ञया बोध्यते। एषः प्रत्ययसर्गः आदौ चतुर्विधो भवति। यथा - विपर्यय, आशक्तिः, तुष्टिः सिद्धिश्चेति। तत्र विपर्ययो नाम मिथ्याज्ञानं तस्मिंतद्बुद्धिर्वा। अयं पञ्च प्रकारकाः सन्ति यथा - तमः, मोहः, महोमोहः, तामिस्रः, अन्धतामिस्रश्चेति।

**आशक्तिः -** करणकैवल्यहेतुका आशक्तिः। एषा अष्टाविंशतिप्रकारकाः सन्ति। यथा - आन्ध्य-बाधिर्य अजिघ्रत्व-मूकत्व-जडत्व-कुष्ठित्व-पशुत्व-कौण्व-क्लैव्य-उदावर्त-उन्माद-असुवर्णा-अज्ञत्रानमलिना-मनोज्ञा अदृष्टि-अपरा-सुपरा-असुनेत्रा-वसुनाडिका-अनुत्तमाम्भसिका-अप्रतार-असुतार-उतारतार-अरम्यक-असदामुदित अप्रमोद-अमुदित-अमोदमाना च।

**तुष्टिः -** तुष्टिः नवधा भवति। यथा -प्रकृति-उपादान-काल-भाग्य-पार-सुपार-परापार-अनुत्तमाम्भ उत्तमाम्भरुपात्तिः।

**सिद्धिः -** सिद्धि अष्टविधेत्युच्यते। यथा -अणिमा-लघिमा-महिमा-गरिमा-प्राप्ति- प्राकाम्य-वशित्व ईशश्त्वरुपाः।

अस्य प्रत्यसर्गस्य प्रभावः जनस्य मानसिकस्थितौ भवति यद्यपि अस्य प्रभावः न भवति अपितु वक्तं शक्यते एतेन अस्माकं चरित्रनिर्माणं न केवलं अपितु समष्टि निर्माणं जायते। पूर्वे यथोक्तं वर्तते साम्यावस्था गुणानाम्। अस्यां साम्यावस्थायां परिवर्तनेन विविधा प्रकृतिः निर्मिता जायते। त्रिगुणसिद्धान्ताधारितं व्यक्तित्वम् - मानवव्यक्तित्वनिर्माणे जैविकप्रक्रियायाः भूमिका महत्त्वपूर्णा अस्ति। यद्यपि अस्माकं सम्पूर्णव्यक्तित्वं मनोशारीरिकतत्त्वाभ्यां विनिर्मितम्। व्यक्तित्वे यावत् महत्त्वं गतिशीलस्य रशायनस्य शारीरिकसौष्ठवस्य च भवति तावदेव महत्त्वम् अदृश्यगुणानामपि उपजायते।

यथोक्तं पूर्वं सत्वस्य लक्षणं प्रकाशकं श्वेतवर्णीया च जायते सत्वस्य प्रकृतिः परोपकारिणी चेति।

अत एव यस्मिन् शरीरे वा व्यक्तित्वे सत्त्वगुणानां प्राधान्यं भवति तस्य व्यक्तित्वं सरलं व्यावहारिकञ्च भवति। तेषु जनेषु सहकारित्वं भावप्राधान्यञ्चाधिकं भवति। यस्मिन् व्यक्तित्वे तमोगुणानां प्रभावाधिक्यं भवति चेत् तस्मिन् व्यक्तित्वे उत्साहोर्जा च बलवती भवति। गुणोऽयं प्रभावोत्पादकः दुःखकारकः परन्तु सृजनात्मको भवति। व्यक्तित्वे अस्य गुणस्याधिक्येन जनः साहसी वीर्ययुक्तः आमोद-प्रमोदविलाशी च भवति।

तमो प्रधाने व्यक्तित्वे नकारात्मिकाशक्ति: बलवती भवति। नकारात्मकचिन्तनस्य प्रामुख्यं भवति एतस्मिन् व्यक्तित्वे। धनस्य बलातपहरणं सुख-मोहादिकी प्रवृत्ति: धनार्जनायेच्छा च प्रबला भवति एतेषेषु जनेषु।

**त्रिगुणात्मकव्यक्तित्वं चिन्तनञ्च**

| क्र.सं | सर्गः | व्यक्तित्वम् | चिन्तनम् |
|---|---|---|---|
| 1. | सत् = रज् = तम् | तटस्थः | निष्क्रियः |
| 2. | सत् > रज् > तम् | बहिर्मुखिविद्वान् | लोकोपकारी चिन्तनम् |
| 3. | सत् > तम्> रज् | अन्तर्मुखिविद्वान् | प्रभुत्वात्मकचिन्तनम् |
| 4. | रज् > सत् > तम् | समाजसुधारकः | प्रभवात्मकचिन्तनम् |
| 5. | रज् > तम् > सत् | नेतृत्वकर्ता | लोभपरकचिन्तनम् |
| 6. | तम् >सत् >रज् | षड्यन्त्रकारी | विखण्डनात्मकचिन्तनम् |
| 7. | तम् > रज् > सत् | अधमः | पाशविकचिन्तनम् |

भारतीयायुर्वेदे त्रिगुणेषु वैषम्य: दोषकारको भवति। त्रिगुणेषु वैषम्याधारिद्दोषा: व्यक्तित्वं तथा च चिन्तनं प्रभावयन्ति।

**व्यक्तित्वानुगुणं चिन्तनम् -** चिन्तनं व्यक्तित्वस्य महत्वपूर्णमङ्गं वर्तते। यादृशं व्यक्तित्वं भवति तादृशमेव चिन्तनं जायते। व्यक्तित्वं मनोगत्यात्मिका एका प्रक्रिया। मनोगत्यात्मिकाप्रक्रियायाः आसय: वर्तते जैविकाजैविकक्रियायाः प्रक्रियायाः सङ्घटनम्। तेषु सङ्घटने व्यक्ते: आचार: व्यवहार : वाह्याकृति: स्वास्थञ्च क्रियमाणो भवन्ति।

साङ्ख्ययोगदर्शने प्रकृति: त्रिगुणात्मिका इति विवक्षिता। तथा च प्रकृति: क्रियाशीला वरीवर्ति। प्रकृती क्रियाशीलत्वं तस्या त्रिगुणाधारेण अनुमीयते। भौतिकदृष्ट्या अपि कल्प्यते यत् यादृशी प्रकृति: भवति तादृशमेव व्यक्तित्वं सञ्जायते। प्रकृत्यानुगुणं व्यक्तित्वं सप्तविधं भवितुमर्हति। तस्य निर्माणं त्रिगुणात्मकसिद्धान्तस्याधारे भवति।

प्रसङ्गेऽस्मिन् व्यक्तित्वस्य निर्धारकाः भवन्ति सत-रज-तमेत्यादयः गुणाः। सत्वं लघुः प्रकाशञ्च भवति तादृशरेव रज: उत्साहकारक: सौन्दर्यबोधकश्च तथा च तमोगुणाधिक्येन जनेषु प्रमाद: विसाद: नकारात्मकचिन्तनञ्च वर्धते। इत्यनया व्यक्तित्वम् इत्थं निरुप्यते। तद्यथा -

**(क) निष्क्रियचिन्तनम् -** तटस्थव्यक्तित्वे एतादृशं चिन्तनं जायते। येषु इत्थं चिन्तनं जायते ते जनाः निष्क्रियाः भवन्ति। यद्यपि अत्र निष्क्रियत्वं मूढता न जायते। भगवत्प्रसादत्वेन यत् मिलति तस्मिन्नेव सुखमनुभवन्ति एते। न केनचिदपेक्षा न कस्मिन्नपि अपेक्षा भवति अस्मिन् चिन्तने। चिन्तनं प्रायशः निर्मूलं भवति। न तु धनस्य चिन्तनं कुर्वन्ति न तु निधनस्य। प्रायः एते जनाः एकाकीजीवनं यापयन्ति। संसारे एतेषां समर्पणं न्यूनमेव जायते। एते जनाः तावदेव उत्पादयन्ति यावत् तेषामावश्यकता भवति। एतेषां श्रेणीनिर्धारणं दुष्करं भवति। यतो हि एते विरलाः भवन्ति येषु सामाजिकं पारिवारिकञ्च दायित्वं न भवति।

**(ख) लोकोपकारिचिन्तनम् -** येषां व्यक्तित्वं वहिर्मुखी, मानवतावादी विद्धत्वरेणयञ्च भवति तेषां चिन्तनं जनकल्याणकारीति मन्यते। एते जनाः महान्तः पण्डिताः भवन्ति। लोककल्याणाय तेषामुपयोगिता कथं भवेदिति विषये प्रायशः चिन्तयन्ति। लोककल्याणाय एतेषां जीवनम्। परमार्थाय सर्वाणि कार्याणि विदधन्ति। लौकिकजीवने समस्यायाः सार्थकसमाधान सरलतया अन्वेषयन्ति। एतेषु मायायाः प्रभावः क्षीणो जायते। व्यष्टिभावं विहाय समष्टिभावं प्रति चिन्तयन्ति। व्यक्तिगद्धनं नेच्छन्ति, न तु एतेषां धनार्जस्य औत्सुक्यं भवति अपितु यद्धनं वर्तते तेषां जनहिताय कथमुपयोगः भवेदिति चिन्यन्ति। श्रेण्यामस्यां प्रायशः समाजसेविनः, धर्माचार्याः, कवयः लेखकाश्चागच्छन्ति।

**(ग) प्रभुत्वात्मकचिन्तनम् -** अन्तर्मुखिविदुषां चिन्तनं स्वार्थपरको भवति। इमे जनाः परसुखायैः सह आत्मसुखाय अपि चिन्तयन्ति। इमे प्रतिभाशालिनाः मायावृत्तो भूत्वा आत्मसुखं प्रति चिन्तयन्ति। आत्मसुखं कथं लभेत्? इत्यर्थम् आत्मप्रतिभायाः पूर्णोपयोगः कुर्वन्ति। महत्वाकांक्षिणः इमे जनाः राष्ट्रनिर्माणे समाजनिर्माणे च महत्त्वपूर्ण योगदानं प्रयच्छन्ति। साहसिकाः इमे जनाः राष्ट्ररक्षायां, औद्यौगिककार्येषु च महती भूमिका निर्वहन्ति।

परन्तु योगदानोऽयं प्रथमम् स्वार्थपूर्णो भवति। स्वस्य सामाजिकस्थितिं प्रति चिन्तनशीलाः भवन्ति। समाजे प्रायशः एतेषु जनेषु केचन छद्मसमाजसेविनः, अभियन्तारः तथा च आधुनिकचिकित्सकाश्च अस्यां श्रेण्यामागच्छन्ति।

**(घ) प्रभवात्मकचिन्तनम् -** समाजसुधारकं व्यक्तित्वं भवति एतेषां चिन्तकानाम्। समाजे एतेषां जनानां भूमिका सर्वाधिकमहत्त्वपूर्णा भवति। समाजस्य नेतृत्वकर्तारः एते। प्रायशः राजनैतिक-कूटनीतिककार्येषु तथैव औद्यौगिककार्येषु च इमे सिद्धहस्ताः भवन्ति। एतेषां जनानां मस्तिष्कः उत्पादनकार्येषु निमग्नो भवति। समाजस्य भौतिकविकासाय एतेषां भूमिका विशिष्टा।

व्यवस्थापरिवर्तने एतेषां जनानां भूमिका अग्रगण्या भवति। इमे जना: व्यावसायिनः, उद्योगपतयः, प्रखरचिन्तकाः, राष्ट्रनिर्मातारः, चिकित्सकाः, सैनिकाः, अभियन्तारश्च भवन्ति।

**(ङ) लोभपरकचिन्तनम् -** व्यक्तित्वेन नेतृत्वकर्तारः भवन्ति एतेषां चिन्तकानाम्। नूतनविचारयुक्तानाम् एतेषां जनानां परिवर्तनकारिणीच्छा सदैव बलवती भवति। प्रत्येक क्षेत्रे एते जनाः नेतृत्वमिच्छन्ति। यद्यपि एतेषु लोकहितकारिणिगुणवत्तायाः अभावो विद्यते। व्यक्तित्वे एते दम्भिनः, आलेचकः, इर्षालुप्रवृत्तिकाः जनाः भवन्ति। सर्वत्रलाभमनुचिन्तयन्ति इमे जनाः। अब्राहममाशलो एतादृशानां जनानां स्थानं आदिमात् तृतीयावस्थापर्यन्तं परिकल्प्यते।

समाजे एतेषां भूमिका दृष्टनेतृत्वकर्तुः, छद्मराजनेतृत्वकर्तुः वा धूर्तवणिकस्य भवति। चारित्रिदृष्ट्या इमे जना: सर्वत्रकामुकदृष्ट्या आलोकयन्ति। आपराधिकप्रवृत्तिं सेवयन्ति तथा च यत्र लाभो विद्यते तत्र दुष्कर्मणापि कार्य साधयन्ति। राष्ट्रनिर्माणे समाजे च एतेषां सहकारिता प्रायश: ओलोचनीया एव भवति।

**(च) विखण्डनात्मकचिन्तनम् -** षडयन्त्रकारिव्यक्तित्वं भवति एतेषां चिन्तकानाम्। समाजे सर्वत्र विधटनकार्य कुर्वन्ति कारयन्ति च। एतेषां जनानां बौद्धिकक्षमता अधिका भवति परञ्च विश्लेषणात्मकक्षमता न्यूना भवति, अत एव एतेषां चिन्तने आलोचनाशक्ति: न विद्यते। स्वयमेव न जानन्ति यत् कार्यं कुर्वन्ति तस्य कार्यस्य परिणाम: किं

भविष्यति? परिणामस्य चिन्तनं विना लाभचक्षुसा सर्वाणि कार्याणि विदधन्ति। अब्राहममासलो आवश्यकतापदानुक्रमे प्रथमद्वयोः स्तरयोः एते जना: आगच्छन्ति, येषां भौतिकावश्यकतायाः पूर्ति: न जायते। अत एव इमे जनाश्च सर्वत्र आत्मलाभाय चिन्तयन्ति।

सामाजिकदृष्ट्या एतेषां भूमिका सहयोगपूर्णा न भवति। एते जना: अपि अन्तर्मुखिनो भवन्ति। मनसि सर्वादा एतेषां विखण्डनात्मिका याजना जायमाना भवति। सामाजिकषडयन्त्रम्, असहिष्णुभावं, क्लेशादिकञ्च जनयन्ति।

राष्ट्रियस्तरे एतेषां भूमिका द्रोहात्मिका, अनिष्टकारिका च भवति।

**(छ) पाशविकचिन्तनम् -** अधमः भवन्ति एते चिन्तकाः। समाजे एतेषां स्थितिः अत्यन्तक्षीणा भवति। अर्थात् अधमव्यक्तिनां कार्यं समाजिकदृष्ट्या अनुपयोगी भवति। न केवलं एतेषां चरित्रमशिष्टं भवति अपि च सामाजिकषडयन्त्रे एतेषां भूमिका स्पष्टा भवति। न तु आत्मना सुखमनुभवन्ति नैव अन्येभ्यः सुखं प्रयच्छन्ति। लोभीप्रवृत्तिकाः भवन्ति इमे जनाः। राष्ट्रियान्ताराष्ट्रिययस्तरे आतङ्के वैचारिकविषोत्पादने च सिद्धहस्ताः भवन्ति। अत:

मानवीयविकासे एतेषां भूमिका नकारात्मिका भवति। एतेषु नियन्त्रणम् आवश्यकम्। स्वतन्त्ररूपेण अधमाः समाजेभ्यः अहितकारकाः सन्ति। एतेभ्यः संवैधानिकीदृष्टिः तथा च तदनुगुणं दण्डव्यवस्था अपेक्षिता वर्तते। धनार्जनाय द्रोह-विद्रोह-आतङ्क-अधमकार्याणि सम्पादयन्ति इमे जनाः। अत एव कथ्यते,

अधमा धनमिच्छन्ति धनं मानं च मध्यमाः।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम्।।

**(४.५) कोषाधारितव्यक्तित्वम् -** तैतरीयोपनिषदि पञ्चकोषाणामालेखः प्राप्यते। यत्र आध्यात्मिकशरीरं पञ्चकोषेषु विभक्तः वर्तते। ते पञ्चकोषाः सन्ति - अन्नमयकोष-प्राणमयकोष-मनोमयकोष-विज्ञानमयकोष-आनन्दमयकोषेत्यादयः। एतेषां सर्वेषां प्रपूर्तिः चित्तशुद्ध्यर्थमावश्यकता जायते। मानवशरीरस्य चित्तशुद्धिः क्रमिकरूपेण भवति। यत्र सर्वेषां कार्याणां संस्कारः प्रथमतया अन्नमयकोषे आगच्छन्ति। तत्परं कार्याणां विश्लेषणमनुशीलनञ्च जायते। यानि कार्याणि मायारहितानि जातानि तानि पुनर्योजितानि भवन्ति अन्यथा प्राथमिकस्तरे एव समाप्तानि भवन्ति।




**कोषाधारिद्व्यक्तित्वं चिन्तनं च**

**(क) अन्नमयकोषयुक्तचिन्तनम् -** शरीरस्य भौतिकावश्यकतायाः प्रपूर्ति अन्नमयकोषादेव भवति। अत्र बुभुक्षा सर्वेषां कारकाणाम् आधारः भवति। बुभुक्षया जनाः श्रमं सम्पादयन्ति। परिश्रमेण अन्नसंग्रहणं कुर्वन्ति जनाः। पाककार्यादिकं कृत्वा अन्नमयकोषस्य तृप्त्यर्थं ग्रहणं कुर्वन्ति। येन शरीरं स्वस्थं भवति। तथा चाग्रिमे स्तरे तच्छरीरम्
आत्मना चिन्तयति।

**(ख) प्राणमयकोषयुक्तचिन्तनम् -** पञ्चप्राणानां परिकल्पना अत्र विद्यते। ते सन्ति यथा - प्राण-अपान समान-व्यान-उदान। एतेषु प्राणः प्रत्यक्षीकरणस्य कार्यं करोति। यः पञ्चज्ञानेन्द्रियैः बाह्यतः सम्वेदनां प्राप्य तस्याः समालोचनां करोति। शरीरस्य अपरा शक्ति: जायते अपानशक्तिः। यस्याः कार्य शरीरस्य आन्तरिकशुद्धिकरणम्। अपानशक्त्या शरीरं स्वेद-वायु-विकारादिकं वहिनिष्काषयति। शरीरस्य समानशक्ति: जठराग्निं प्रदीप्य भोजनं पाचयति। यया सम्पूर्णशरीरे उर्जाप्रवाहः सारल्येन भवेत्। अपरा शक्ति: शरीरस्य व्यानशक्तिः। यस्याः कार्य भवति पाचनादनन्तरं रक्त-मज्जा-वसा-मांशादीनां निर्माणम्। प्राणमयकोषस्य अन्तिमो स्तर: जायते उदानशक्तिः। या चिन्तनस्य कार्यं करोति। नवीनसङ्कल्पानां विकास: अनया शक्त्या एव भवति।

**(ग) मनोमयकोषयुक्तचिन्तनम् -** मन: बुद्धि-शरीरयो: सम्बन्धस्य सर्जको भवति। सर्वप्रथमं मनोमयकोषस्य प्रमुखं कार्यं भवति प्राणमयकोषस्य नियन्त्रणम्। येन कोषेन शरीरस्य सामान्यकार्य सुचारुरूपेण भवेदिति।मनोमयकोष: ज्ञानेन्द्रियैः प्रदत्तसूचनानां विश्लेषणं कृत्वा प्राणमयकोषस्य पञ्चप्राणान् निर्दिशति किं करणीयमकरणीयं किम्?

**(घ) विज्ञानमयकोषयुक्तचिन्तनम् -** मनोमयकोषः ज्ञानेन्द्रियैः प्राप्तसूचनानां यथा विश्लेषणं करोति तस्य अस्माकं जीवने का प्रासङ्गिता जायते अस्य निर्धारणं करोति।सुख-दुःखादीनां सङ्कल्पस्य निर्णय: विज्ञानमयकोषात् जायते। मनोमयकोष: समेषां प्रागानुभवानां साम्प्रतिगानुभवनाञ्च केन्द्रः वर्तते। अत्र बहुप्रकारिका: सूचना: जायन्ते। तासु सूचनासु प्रासङ्गिकी सूचना का? कया सूचनया अस्माकं जीवनस्य सार्थकतायाः सिद्धिर्भविष्यति इत्येषां प्रश्नानुत्तिरं शोधयति।

**(ङ) आनन्दमयकोषयुक्तचिन्तनम् -** आनन्दमयकोषः सच्चिदानन्दस्वरुपस्य स्थितिः जायते। कोषेऽस्मिन् समस्तलौकिकविषयाणां चिन्तनं समाप्तं भवति। तथा आत्मसाक्षात्कारस्य विषया: ईश्वरसमर्पणस्य विषयाश्च अवशिष्टविषयत्वेन तिष्ठति।

एतेषां समस्तकोषाणां प्रभाव: अस्माकं भौतिकजीवने भवति। यथा क्रमे कोषाणां प्रपूर्ति भवति तथा एव क्रमे अस्माकं व्यक्तित्वं शुद्धं विभाति। एतस्य पञ्चकोषस्य प्रभाव: न केवलं व्यक्तित्वमुपरि भवति अपि च चिन्तनेऽपि भवति।

**(४.६) त्रिदोषसिद्धान्ताधारितचिन्तनम् -** भारतीयायुर्वेदशास्त्रं त्रिदोषसिद्धान्तमुपरि प्रतिष्ठितमस्ति। यतो हि शरीरस्य मूलकारका: सन्ति दोष-धातु-मला:। वायु: पित्तं कफश्चेति दोषत्रयमेव शरीरे रोगानुत्पादयन्ति। देहधारणात् एतेषां वातादिदोषत्रयाणां प्रत्येकस्य पञ्चप्रकारका: भवन्ति। यदा एते शरीरं दूषयन्ति तदा एतेषां संज्ञा दोष: एव। यदा एते शारीरिकस्वास्थ्यं रक्षयन्ति तदा एतेषां धातुः इति संज्ञा। तथैव शरीरमलिनीकरणात् मला इति संज्ञा उपजायते।

यदा एतषां त्रयाणां वात-पित्त-कफादीनां स्थितौ साम्यं वर्तते चेत् शरीरं स्वस्थं भवति तथा च स्वस्थे शरीरे एव स्वस्थमष्तिष्कस्य विकाशो जायते।

यदा एतेषु एकस्य द्वयोर्वा ह्रास: वृद्धिर्वा भवति तदा शरीरे विकारोद्भवो जायते। दोषवैषम्यात् रोगोत्पत्ति: दोषसाम्यात् आरोग्यं भवतीति महर्षिचरकेणोक्तं वर्तते। मुनिकश्यपेनोक्तं वर्तते यथा- वातादितदोषाणां साम्यतावशात् शरीरस्य वृद्धिः तथा वर्ण-बल-ओज-जठराग्नि-मेधा आयु-सुखेत्येषां प्राप्तिः भवति। किञ्च यदा एते वैषम्यावस्थायामागच्छन्ति। तदा तस्मिन् शरीरे विकारमेव जनयन्ति। एते वात-पित्त-कफः एव शरीरस्य उत्पत्तिकारक: विद्यते।

यथा -

**वात: -** दोषत्रयेषु वातस्य माहात्म्यं विवृण्वन् श्रीशारंगधराचार्य: प्रतिपादयति यथा -पित्तं कफस्तथाऽन्ये मलधातवः पङ्गवः सन्ति अर्थात् एकस्मात् अन्यं स्थानं प्रति गमनागमने अक्षमा: सन्ति। तेषु तद्विषये वायुरेव सक्षमोऽस्ति य: तान् एकस्मात् स्थानात् अन्यं स्थानं प्रति नयति। वायो: लक्षणं प्राप्यते अनेन प्रकारेण यत् वात: वायुर्वा शब्द: वा धातोरुत्पन्नोऽस्ति। यस्यानुसारेण यत् तत्वं शरीरे गतरुत्साहयोर्वा उत्पन्नं करोति तत् तत्त्वं वायु: वात् वा उच्यते।

अस्य तत्त्वस्य विकृतिवसात् रोगा: जायन्ते तथा च मृत्युरपि भवितुमर्हति।

वायोः गुणविषये उक्तमस्ति यत् वायुः रजोगुणमय-सूक्ष्म-शीत-रुक्ष-लघु-चञ्चलगुणवान् भवति। अन्येषां मते तु रुक्ष-शीत-लघु-सूक्ष्म-चल-विषद-खर-इत्येतैः सप्तगुणभिः युक्तो भवति वायुः। केचन तु रुक्ष-लघ-शीत दारुण-खर-विषदेत्येतैः गुणैः युक्तैः भवति वायुरिति वदन्ति।

वैद्यवर: धनवन्तरिस्तु वायुगुणान् गणयति अनेन रुपेण यत् वायुः अव्यक्ततत्वेन स्थित्वा अपि व्यक्तत्वेन कार्यं करोति। सः रुक्ष-शीत-लघु-खरगुणवान् अस्ति। सः तीर्यग्गामी,

शब्दस्पर्शरूपद्विगुणवान्, रजोमयः अचिन्त्यवीर्यवान् दोषाणां नेतृत्वकर्ता, रोगसमूहेषु राजासदृशः, आशुकारी तथा च सदैव गतिमान् भवति।

एषः वायुः पक्वाशय-कटी-सक्थि-श्रौत्र-अस्थि-त्वचेत्येतेषु अवस्थानं करोति। तेष्वपि पक्वाशय एव मुख्यत: वायोरधिष्ठानं प्रतीयते।

वैद्यवरशारङ्गधराचार्येणोक्तं यत् लघु-रुक्ष-मिताहार-अतिशीतपदार्थानां सेवनात्, अतिश्रमाचरणात्, प्रदोषसमये, काम-शोक-भीति-चिन्ता-रात्रिजागरणप्रभावात्, अभिधातात्, अधिकस्नानात्, भोजनजीर्णतावसात् तथा रसरक्तादिधातूनां क्षयात् प्रकूपितो वायुः एतेषां विपरीदाहारविहारैः प्रशाम्यति।

अनेन स्पष्टं भवति यत् वायु: यैः गुणैः युक्तो भवति तद्विपरीतानां गुणानां सेवनेन तथा यैः कारणैः वायुः प्रकुपितो भवति तद्विपरीतानां कार्याणां करणेन प्रकुपितो वायुः प्रशाम्यति। पित्तम् - पित्तमपि त्रिदोषेषु एकम्। पित्तशब्दः चुरादिगणीयतप्-धातोः निष्पन्न: यस्यार्थो भवति तपतीति पित्तम्।

आहारपाक-धातुपाक-मलहाकादिक्रियाणां मूलप्रवर्तकत्वेन स्थितं देहाग्नितत्वमेव पित्तत्वेन ज्ञायते। पित्तलक्षणं विवृण्वन् महर्षिचरको वदति यत् पित्तमस्ति किञ्चित् स्नेहयुक्तम्-उष्णं-तीक्ष्णं-द्रवं-अम्लं सरसकटुगुणयुक्तञ्च। पित्तेऽस्मिन् अतिस्नेहतत्वस्य अभावो विद्यते तथा दोषोऽयं शुक्ल-अरुणेति वर्णद्वयं परित्यज्य अन्यवर्णान् भवति।

एतत् तत्त्वं शरीरे उष्णतां समुत्पाद्य पाचनक्रियां सम्पादयति। पित्तं शरीरे दाह-उष्णता-पाक-स्वेद्-क्लेथ कोथ-कण्डू-स्राव-रोगेत्यादीन् उत्पादयति।

इतोपि अनेकस्थानानुसारेण पित्तं केन प्रकारेण कार्यं करोति तद्विषये प्राप्यते यत् त्वचिस्थितं पित्तं शरीरिकान्ते वृद्धिकरं तथा लेप-अभ्यङ्ग-इत्यादीनां पाचकमस्ति, यकृतस्थितं पित्तं शोणितं निर्माति। नेत्रयुगले स्थितं पित्तं दृष्टिशक्तिं ददाति। हृदये स्थितं पित्तं मेधा-प्रज्ञा-इत्येतयो: द्वयोर्गुणयोः वृद्धिकारकञ्चास्ति।

नाभि-आमाशय-स्वेदमल-लसिका-रक्त-रस-चक्षु-त्वचेत्यादय: पित्तस्थानत्वेन स्वीकृतेऽपि नाभिरेव पित्तस्य स्थानमस्ति।

पित्तं पञ्चधा विभक्तमस्ति यथा - पाचक-भ्राजक-रञ्जक-आलोचक-साधनभेदेन। अन्नादीनां पाचकत्वात् अग्नाशयस्थं पाचकं, लेप्याङ्गादीनां परिपाकेन त्वचः भ्राजनात् त्ववस्थं भ्राजकं,

रसरञ्जनात् आमाशयस्थं रञ्जकं, रुपालोचनात् दृक्स्थम् आलोचकं तथा बुद्धि-मेधा-अभिमानाद्यैरभिप्रेतार्थसाधनात् हृद्गतं साधकमुच्यते।

अत: पित्तं प्रकुपितं कै: कारणैः वा प्रशमितं भवति तद्विषये शारङ्गधराचार्येण उक्तं यत् यैः कारणैः पित्तं प्रकुपितं भवतितद्विपरीतानां कारणानाम् आचरणेन प्रकुपितं पित्तं प्रशाम्यति। प्रकुपितप्रशमनक्षेत्रे विरेचनमेव श्रेष्ठम्। तदुपरि मधु-सर्पि-अजाक्षीर-अनन्तमूल-उत्पल-कुमुद-पद्मकिजल्क-दुरालभा-इत्यादीनां औषधिनामपि पित्तप्रशमनक्षेत्रे उल्लेखनीया भूमिका अस्ति।

कफः श्लेष्मा वा - केन जलेन फलतीति कफ: इति संज्ञा। कफगुणविषये भावप्रकाशग्रन्थे उक्तमस्ति यत् कफ: श्वेत-गुरु-स्निग्ध-पिच्छिल-शीतल-तमोगुणाधिक्यवत्-स्वादु-विदग्धवत्-लवणगुणान्वितो भवति। शारङ्गधराचार्येणापि तन्मतमेव समर्थितमस्ति। महर्षिचरकेणापि कफगुणा गणिता अनेन रुपेण यत् कफ-शीत-गुरु-मृदु - स्निग्ध-स्थिर पिच्छिलेत्येतै गुणैरन्वितो भवति।

साम्यावस्थायां एषः मधुरगुणवान् भवति तथा वैषम्यावस्थायाम् एष: लवणगुणवान् भवतीति तेन विशेषतया उक्तम्। केन कारणेन कफ: प्रकुपितो भवति तद्विषये सुस्रुत: वदति यत् ये जना: स्वपन्ति मात्रं , व्यायामादिसंलग्ना: न भवन्ति, आलस्यमाश्रयन्ति तेषां कफ: प्रकुपितो भवति। तदुपरि मधुर-अम्ल-लवण-शीत-स्निग्ध-माषादिगुरुपदार्थ पिच्छिल-अभिष्यन्दकारक-हायनक-यव-नैषध-इत्कट-माष-महामाष-गोधूम-तिल-पिष्ट-दधि-दुग्ध-कृशर-पायस इक्षुनिर्मितपदार्थ-आनूप-देशजप्राणीनां मास-जलीयस्थानजप्राणीनां मास-वशा-मृणाल-कृशेरु-शृङ्गाटव-मधुरफल वल्लीफलेत्येतेषाम् अधिकतया सेवनेन कफ: प्रकुपुतो भवति।

अत: साम्यावस्थायां स्थिता: एते दोषा: शरीरं परिपुष्टिः प्रददति तथा वैषम्यावस्थायां स्थित्वा एते एव शरीरं रोगाक्रान्तं कुर्वन्ति। अत: एतेषां साम्य-वैषम्योपरि एव शरीरस्य आरोग्यतानारोग्यते निर्भरे भवतः। गुरुपदिष्टमार्गेण योगमेव समभ्यसेदिति। गुरुसन्निधौ एव योगासन-प्राणायाम-ध्यानादीनामाभ्यास: करणीयः।

आसनं प्राणायामश्चोभय: गुरो: निर्देशने समारभ्यते। स्वाध्यायात् परमपि बहव: संशया: विद्यन्ते मनसि। तेषां समस्यानामपाकरणमावश्यकम्। समस्यारहितो भूत्वा प्राणायामभ्यास: आसनञ्च सोत्साहपूर्वकं रमणीयञ्च भवति।

**सन्दर्भग्रन्थाः**

1. आप्टे वामन शिवराम : संस्कृत हिन्दी शब्दकोश,अशोक प्रकाशन दिल्ली, २००९
2. शर्मा, श्रीराम : ऋग्वेदभाष्य, संस्कृति संस्थान ख्वाजा कुतुब (वेद नगर)बरेली (उ.प्र.) १९८८
3. कुमार कृष्ण, शास्त्री हरिदत्त : ऋक्सूक्त संग्रह, मेरठ, साहित्य भण्डार,१९९९
4. दत्त योगेश्वर : पातञ्जल योगसूत्र एवं व्यासभाष्य का आचारमीसांसीय अध्ययन,सत्यम पब्लि. हाउस, नई दिल्ली, प्रथमसंस्क २०१०
5. द्विवेदी, डा. प्रतिभा रानी : योग प्रतिभा - पातञ्जलयोगसूत्राव्यासभाष्य, हिन्दी टीका, राधा पब्लिकेशन नई दिल्ली, प्रथम संस्करण - २०००
6. देशवाल, जगवन्ती : अष्टाङ्गयोग (राजयोग एवं हठयोग के संदर्भ में), अभिषेक प्रकाशन, पीतमपुरा नई दिल्ली, संस्क. २००५
7. शर्मा, आर. ए. : शिक्षा अनुसन्धान के मूल तत्व एवं शोध प्रक्रिया, आर. लाल प्रकाशन, मेरठ, २०११
8. सिंह, अरुण कुमार : उच्चतर सामान्य मनोविज्ञान, पञ्चम् संस्करण, पटना प्रकाशन।

***

# नारदीयसंहितायाः वैशिष्ट्यम्

**Dr. P.T.G. Ranga Ramanujachyulu**
**Assistant Professor, Department of Agama**
**National Sanskrit University, Tirupati- A.P. -517507**

*चातुर्व्यूहं परंब्रह्म षाड्गुण्यपरिकीर्तितम्।*
*पाञ्चरात्रस्य कृत्स्नस्य प्रसूतिं पर्युपास्महे।।*
*वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्चन।*
*वेङ्कटेशसमो देवो न भूतो न भविष्यति।।*

वेदेऽखिलो धर्ममूलमित्युक्तदिशा सर्ववधर्माणां निलयभूताः ऋगादयो चत्वारः वेदाः। वेदानां निगम इति व्यवहारः। निगमेषु भगवतः स्वरूपरूपगुणविभूतयः विव्रियन्ते। स एव भगवान् सर्वमानवाळे अनुग्रहार्थं परव्यूहविभवान्तर्याम्यर्चाभेदेन पञ्चधावस्थितः। भगवतः प्राप्त्यर्थं मार्गोपदेशने निदानभूताः आगमाः। आगमो नामानादिसम्प्रदायसिद्धगुरु-शिष्यपरम्परोपदेशक्रमागतः शास्त्रविशेषः। आगमः प्रधानरूपेणाराध्यदेवतात्वेन वैष्णव-शैवशाक्तभेदेन त्रिधा विभक्तः। आद्यः वैष्णवः पुनः पाञ्चरात्रवैखानसभेदेन द्विविधः। उभय - विधस्यापि प्राञ्चाः प्रधानतां सङ्गिरन्ते। श्रीमन्निगमान्तदेशिकैः पञ्चरात्ररक्षायां सप्रमाणं व्यधायि। महाभारतस्य मोक्षधर्मे– **पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयमि**ति[1] भणितम्।

भगवान्नारायणः स्वाराधनाबोधकं शास्त्रमादौ –

*श्रीशेषपक्षीश्वरपद्मगर्भसेनशमुख्यान् प्रतिबोधयन्तम्।*
*श्रीपाञ्चरात्रागमशास्त्रमाद्यं विष्णुं सदाऽहं शरणं प्रपद्ये।।*[2] इत्युक्तरीत्या

भगवान्नारायणः महालक्ष्म्यै, चतुर्मुखाय, आदिशेषाय, विश्वक्सेनाय, वैनतेयाय चेदं शास्त्रमैदम्प्राथ-म्येनोपदिदेश। शास्त्रस्यास्य एकायनम्, प्रकृतिवेदः, मूलवेदः, भगवच्छास्त्रम्, सात्त्वतम्, तन्त्रम्, दिव्यम्, महोपनिषदिति कतिपयनामानि विद्योतन्ते।कृत्स्नं शास्त्रं प्रधानतया संहितारूपेण विभक्तम्। शास्त्रेऽस्मिन् अष्टचत्वारिंशदुत्तरद्विशतसंहिताः (248) विराजन्ते।

---

1. महा.भा. मोक्षधर्म321.56अ
2 . महोत्यवप्रयोगः 1.1.5

श्रीपुरुषोत्तमसंहितायाम्- **सार्धकोटिप्रमाणेन ब्रह्मणा केशवाच्छ्रुतमि**[1] त्युक्तरीत्या सार्धकोटिश्लोकाः **(15000000**) शास्त्रे प्रकाशन्ते। सम्प्रतिकाले प्रायशः सप्ततिसंहिताः उपलभ्यन्ते।

पाञ्चरात्रसिद्धान्तः मुख्यतया उपदेशपरम्परानुसारं दिव्यम्, मुनिभाषितम्, मानुषमिति त्रिधा विभक्तः। भगवान् वासुदेवः ब्रह्मादिभ्यो निजलोके उपदिदेश। विशिष्य सात्त्वतपौष्कर-जयाख्यासंहिताः दिव्यत्वेन परिगण्यन्ते। तेषामागमसम्प्रदाये रत्नत्रयमित्यपि व्यवहारः। पारमेश्वरसंहितायाम्-

*वासुदेवेन यत्प्रोक्तं शास्त्रं भगवता स्वयम्।*
*अनुष्टुब् छन्दोबद्धेन समासव्यासभेदतः।।*
*तथैव ब्रह्मरुद्रेन्द्रप्रमुखैश्च प्रवर्तितम्।*
*लोकेष्वपि च दिव्येषु तद्दिव्यं विद्धि सत्तम।।*[2] इत्युक्तम्।

एवञ्च ब्रह्मरुद्रेन्दादिभिः तपोधनेभ्यः नारदादिमहर्षिभ्यो उपदिष्टत्वादस्य मुनिभाषितमिति व्यवहारः।ईश्वर-पाद्म-पारमेश्वर-भारद्वाजसंहिताः मुनिभाषितेऽन्तर्भवन्ति।उक्तञ्च-

*ब्रह्मरुद्रमुखैर्देवैः ऋषिभिश्च तपोधनैः।*
*स्वयं प्रणीतं यच्छास्त्रं तद्विद्धि मुनिभाषितम्।।*[3] इति।

मानुषं त्वानुवंशिकतया शिष्यप्रशिष्यपरम्परारूपेण बहुभ्यः वर्षेभ्यः क्रमागतः सम्प्रदायः। एवमेव शास्त्रमिदं पुनः विषयभेदेन ज्ञान-योग-क्रिया-चर्याभेदेन चत्वारः पादाः विद्यन्ते। ज्ञानपादे सृष्टेः विवरणम्, जीवस्वरूपनिरूपणम्, चतुर्विंशतितत्त्वैर्विशिष्टस्य संसारस्य विवेचनम्, भगवत्प्राप्ति -रूपमुक्तेः विवरणम्, भुवनकोशस्वरूपम्, वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धव्यूहानां कथनम्, तेषां महिमातिशवर्णमित्याद्याः विशेषाः सुष्ठूपवर्णिताः।

पाञ्चरात्रे योगशब्दार्थः यमादियोगाङ्गानां पाञ्चरात्रे समन्वयः, येगानुष्ठानेन परमात्मोपासन -विधयश्च योगपदे विवृताः। तृतीये क्रियापादे भूपरीक्षा, ग्रामनिर्माणम्, कर्षणम्, आलयनिर्माण -पद्धतयः, विग्रहनिर्माणविधौ मानोन्मानादीनां विवेचनम्,

---

1. पु.सं.1.16
2 पारमेश्वरसंहिता 1.13
3 . पा.सं.1.17

प्रतिष्ठाद्याः अंशाः व्याख्याताः। तुरीये चर्यापादे शास्त्रेण पथा प्रतिष्ठितानां विग्रहाणां नित्यनैमित्तिकोत्सवानां निरूपणं चकार।

साम्प्रतिके काले उपलभ्यमानासु पाञ्चरात्रसंहितासु नारदीयसंहिता अन्यतमा वरीवर्ति। यद्यपि नारदीयसंहिता नाम्ना नैकाः संहिताग्रन्थाः संस्कृतक्षेत्रे दृश्यन्ते ते सर्वेपि ज्यौतिषभक्ति- धर्मशास्त्रादिविषयप्रतिपादनपराः इति ज्ञेयाः।इयं नारदीयसंहिता **दिव्यमन्त्रक्रियोपेतं वेदगम्यञ्च शाश्वतमि**[1]त्युक्तरीत्या पाञ्चरात्रं ज्ञानमुत्तममिति विधत्ते। नारदीयसंहिता पद्मसंहितादिवन्नाति -विस्तृता पुरुषोत्तमसंहितादिवन्नातिसंक्षिप्ता च।परिमाणेन विषयप्रतिपादनदृष्ट्या च मध्यमस्थानं वहति। संहितायामस्यां विषयनिरूपणे स्पष्टमिदं दृश्यते। यथा-

*शैलाच्छैलान्तरं यच्च स देशे वर्ष उच्यते।*
*हिमशैलसमुद्रान्तं भारतं चाप्यवस्थितम्।।*[2] इत्युक्तरीत्या

भौगोलिकविशेषाः नैकाः स्पष्टतरमस्यां सन्दृश्यन्ते। ग्रन्थमिदं बहो कालात्प्रागेव आचार्य राघव प्रसाद चौधरी महोदयेन 1971 तमे वर्षे तिरुपतिस्थ तदानीन्तनकेन्द्रियसंस्तविद्यापीठे भूरि श्रमा-मविणय्य पाठभेदादिभिः शंशोध्य संस्कृतभाषायां यथाशक्ति समपादि। त्रिंशत्(30) अध्यायात्मि –कायामस्यां 3681 (एकाशीत्यधिकषड्शतोत्तरत्रिसहस्र) श्लोकाः विद्यन्ते। **Dr.Deniael Smith** इति सुप्रसिद्धपाश्चात्यागमपण्डितेनास्यां संहितायामेकत्रिंशदध्यायास्सन्तीति परिशोधितम्।[3] तदुक्तम्- अस्य ग्रन्थस्यालोचनानन्तरं पाठकः एतत्सम्भावयितुं शक्नुयाद्यन्मध्यमायसम्पन्नाना-मालयनिर्माणं श्रेयःप्रदमिति विश्वासेन भक्त्या च भावितान्तःकरणानां विस्तृतालयनिर्माणार्थं पर्याप्तधनरहितानां भक्तेभ्यो ग्रन्थस्यास्योत्थितिः अभूदिति।[4] अतो एतद्वक्तुं शक्यते यस्याः संहितायाः प्रयोजनं पाञ्चरात्रे विद्यमानानां सर्वेषां पण्डितानां विषये मुख्यविषयाः प्रत्यपादयन्। भगवान् वासुदेवः क्षीरसागरे परमभक्तस्य

1 नारदीयसंहिता 1.17

2 ना.सं.9.137

3 . पाञ्चरात्रप्रासादप्रसाधनम् p. 187

4 The conjecture which one idrawn to make after working with this text it might have been aimed at a middle incom class of worshipers, a group who perhaps wished to erect Temples as act of piety and devotion but whome didn’t permitthem extravagance of elobaration over basic building-needs

श्रीनारदमहर्षिणे प्रप्रथमतया संहितामिमामुपदिदेश। ततः नारदमहर्षिः स्वाश्रिताय गौतममहर्षिणे लोकेऽस्मिन् उपदिदेश। पुनः गौतममहर्षिरपि स्वशिष्येभ्यः भृगुः अत्रिमहर्षिणोः संक्षपरूपेण प्राबोधयदिति संहितायाः परम्परा। मुख्यरूपेण नारदमहर्षिः लोकेऽस्मिन्नुपदिष्टत्वादस्य नारदीयसंहिता इति प्रथामवाप। भृगुः स्वाश्रमे समाविष्ट-स्सन्नत्रिमहर्षिः समेत्य विष्णुभक्तिपरं भागवतं ज्ञानाय पप्रच्छ। अत्रिः भृग्वाश्रमं प्रति आगमना-त्पूर्वं वैष्णवज्ञानप्राप्त्यर्थं बहुकालं तपश्चचार।तदनु वैष्णव्या वाण्याऽदिष्टः भृग्वाश्रमं प्रत्याजगाम। भृगुः अत्रिमहर्षिणे निजवैष्णवज्ञानवृत्तान्तकथामेवमवोचत्- पुरा मुनिभिरावृतस्य गौतममहर्षे आश्रमं प्रति दैवयोगात् ब्रह्मपुत्रः नारदः स्वर्गलोकादागतः। नारदं दृष्ट्वा विस्मयमानसः भृगुः तं महर्षिं सकलोपचारैः समपूजयत्। सन्तुष्टः नारदः भृगुं प्रति पुरा तपस्यान्तौ नरनारायणौ मया -ऽऽराधितौ। तौ, अचिरादेव तवाश्रमे नारदात्त्वं ज्ञानसिद्धिमवाप्स्यतीति ऊचतुः। तदाराभ्य एताव -त्पर्यन्तमहं प्रतीक्षमाणोऽस्मि। यदि भवान् तुष्टः तर्हि कृपया ज्ञानमुपदिशत्विति प्रार्थयामास। तस्य वचः श्रुत्वा नारदः गौतमप्रश्नस्यास्य ज्ञानस्य स्वीकारे तदीयार्हत्वं चोक्त्वा पाञ्चरात्रज्ञानं प्रतिपादयितुं प्रतिजज्ञिरे। किन्तु गौतमस्य वैष्णवदीक्षारहितत्वात्पाञ्चरात्रज्ञानं प्राप्तुं सम्पन्नाधिकाः अभूत्। नारदः त्रिंशदध्यायेषु पाञ्चरात्रागमस्थान् सर्वानप्यंशान् संक्षेपतः उपदिश्य अन्तर्दधौ। अस्यां संहितायां विद्यामानविशेषाः सम्प्रति प्रस्तूयन्ते।

प्रथमेऽध्याये ग्रन्थस्यावतारः, पाञ्चरात्रागमस्य स्वरूपनिरूपणम्, शुद्धशुद्धेतरसृष्टेः वर्णनम्, पाञ्चरात्रस्य मायादूरीकरणे प्रभुत्वञ्चोक्ताः। द्वितीये भगवदाराधनाविधिनिरूपणावसरे अर्चकस्य नित्यानुष्ठानादिविशेषाणां विवरणम्, मिश्रार्चनास्वरूपम्, भगवत आवाहनविसर्जनयोः शङ्का -निवारणे भगवतः सामान्यस्वरूपादिकमित्याद्याः प्रोक्ताः। तृतीये वासुदेवादिचातुर्व्यूहाः तेषां समुद्धारक्रमः निरूपितः। चतुर्थे विष्ण्वादिद्वादशमासाधिपानां मन्त्रस्वरूपम्, तेषां साधनप्रकारः फलञ्चोक्ताः। पञ्चमे मत्स्यादिप्रादुर्भावानामवतारादिमूर्तीनां मन्त्रक्रमोद्धारः विवृतः। षष्ठे त्रिपञ्चाश -त्संख्यानां मुद्राणां स्वरूपकल्पना प्रकारज्ञानपुरस्सरं तासां विनियोगादिकञ्च निरूपितम्। सप्तमे दीक्षाप्रकारः, तत्रापेक्षिताग्निकुण्डसंस्कारादीनां निरूपणमुक्तम्। अष्टमे दीक्षायामुपयुज्यमानानां विभिन्नमण्डलानां विवरणमकारि। नवमे दीक्षाप्रयोगः ब्रह्माण्डवर्णनम्, मण्डलेषु वर्णरचना, दीक्षितस्य जीवन्मुक्तत्वम्, भूगोलखगोलशास्त्रीयाणां

विषयाणां विवरणं दृश्यते। दशमे दीक्षान्ताभिषेकनिरूपणम्, सप्तविधवैष्णवानां लक्षणानि, अभिषेकप्रकाराश्च विवृताः। एकादशे दीक्षितस्य दैनन्दिनकृत्यानि, वैष्णवकृत्यानाञ्च विवरणं कृतम्। द्वादशे भगवते समर्पणीयस्य हविषः वर्णनम्, तत्रोपयुज्यमानानामन्नादीनां विरणम्, हविषः भेदः तेषां लक्षणानि चोक्तानि। त्रयोदशे प्रतिमाकल्पनप्रकारः प्रतिमानिर्माणे विभन्नोपादानद्रव्याणां लक्षणानि अङ्गुल्व्यादीनां लक्षणानि, वैसुदेवादीनां कल्पनाप्रकाराश्चोक्ताः। चतुर्दशे आलयकल्पनप्रकाराः, प्रासादस्थल-परीक्षणम्, भूमेः भेदाः वास्तुपदकल्पनपूर्वकं तत्रस्थदेवानां नामानि, इष्टिकान्यासः, गर्भन्यास -क्रमाद्यंशाः निरूपिताः। पञ्चदशे प्रतिष्ठाविधिः, मण्डपादिकल्पनप्रकाराः, प्रतिष्ठायां भेदाः तेषां लक्षणानि चोक्तानि। षोडशे शालामणडपगोपुरादीनां प्रतिष्ठाक्रमः प्रोक्तः। सप्तदशे जीर्णसंस्कार -प्रक्रिया तस्याः भेदाः, बालालयविधिः, आलयानां जीर्णोद्धारविधिः, सिद्धादिकल्पितजीर्णबिम्बा- द्युद्धारक्रमश्चोपवर्णिताः। अष्टादशे उत्सवाङ्गभूतस्य ध्वजारोहणस्य क्रमः, उत्सवशब्दार्थः, उत्सव -भेदाः, ध्वजारोहणप्रयोगविधिश्च व्याख्याताः।एकोनविंशे अङ्कुरार्पणम्, तदाराधनभूतनि पात्रणि, बलिविधिः, होमक्रमः, उत्सवव्याप्तिकालः, दिनदेवतानां परिचयः, आचार्यसंख्या विशेषाशाश्च वर्णिताः। विंशे सनपनक्रमः, उत्तममध्यमाधमस्पनप्रकाराः, स्थापनक्रमः, स्नपनपीठस्य लक्षण-मित्यादिविषयाः चर्चिताः। एकविंशे भगवदाराधने उपयुज्यमानानां योग्यपुष्पाणां फलानां हविषाञ्च परिगणनम्, तत्तद्द्रव्यसंग्रहणयोग्यपात्राणां विवेचनं कृतम्। द्वाविंशे स्नपने विहितानां वस्तूनामलाभे तत्प्रतिनिधिभूतानां वस्तूनां नामकीर्तनं कृतम्। त्रयोदशे पवित्रोत्सवः, तस्य प्रयोजनम्, कालनिर्णयः, स्थानम्, यागशालाकल्पनप्रकारः, पवित्राणां कल्पनमित्येते विशेषाः प्रोक्ताः। चतुर्दशे आराधनानुरूपं फलभेदकथनम्, कृष्णजयन्त्युत्सवनिर्णयः, भगवते तत्तद्वस्तु-निवेदनफलम्, कार्तीकोत्सवः, मर्गशीर्षैकादशीव्रतम्, मसान्तरेष्वनुष्ठातव्यानां विशिष्टपूजादीनां फलञ्च व्याख्याताः। पञ्चविंशे प्रायश्चित्तानां निरूपणावसरे भगवदाराधनादिक्रमे ज्ञाताज्ञात-दोषाणां निरसनार्थं प्रायश्चित्तकथनञ्चोक्तम्। षड्विंशे भगवन्निवेदनार्थं महाहविर्विधानम्, तदर्थं मण्डपाडिकल्पनप्रकारः, हविर्निवेदनाङ्गस्नपनप्रकारः, महाहविर्निवेदनञ्चोपवर्णिताः। सप्तविंशे भगवदाराधनाप्रसङ्गे प्रयुज्यमनानां स्रुक्स्रुवादीनां पात्राणां स्वरूपादिकम्, आहुत्यादौ विहित -द्रव्याणां परिमाणादीनि प्रोक्तानि। अष्टाविंशे

स्वतन्त्रास्वतन्त्रविमानयोर्लक्षणानि, अग्न्यादीनां तत्त -द्देवानां स्वतन्त्रार्चना प्रकारः निरुपितः। एकोनत्रिंशे वैष्णवानां निषकादि-श्मशानान्ताः सर्वविध -संस्काराः उपवर्णिताः। एवमन्तिमे त्रिंशेध्याये अभिगमनोपादानेज्यास्वाध्याययोगाख्यानां पञ्चकालानां सङ्ग्रहेण स्वरुपवर्णनमित्याद्यंशाः व्याख्याताः। एवं नारदीयसंहितयां सर्वविधपाञ्चत्र -सम्बन्धिनः विशेषाः सम्यक् प्रत्यपादयन्।

*********

**BIBLIOGRAPHY ::**


1. पाञ्चरात्रप्रासादप्रसादनम् – **Authored by Dr.Deniael Smith– Gaikwad Oriental Research Institute- Baroda – 1943.**
2. पाद्मसंहिता **Part-I&II – Edited by Dr. V. Varadachari , Sita Padmanabhan** पाञ्चरात्रपरिशोधना परिषद्- मद्रास्- 1982
3. नारदीयसंहिता- **Edited by Dr.** राघवप्रसाद चौधरी –राष्ट्रियसंस्कृतविद्यापीठम्- तिरुपतिः- **1971**
4. पुरुषोत्तमसंहिता **- Edited by Dr** पोडिचेटि सीतारामाचार्युलु - पाञ्चरात्रपरिरक्षणसभा- भद्राचलम् – आन्ध्रप्रदेशः -1936
5. पारमेश्वरसंहिता**- Edited by Dr** उ.वे. श्रीमान् गोविन्दाचार्यः –पाञ्चरात्रसर्वस्वम्- श्रीरङ्ग- तमिळनाडु – 1965
6. महोत्सवप्रयोगः **- Edited by Dr** श्रीमान् श्रीमद्भागवतं लक्ष्मीनरसिंहचार्यः- पद्मश्री प्रकाशनम् – तिरुपतिः- 1985
7. महाभारतम् **(Hindi trans)- Edited by Dr** पण्डित रामनारायणदतशास्त्री –गीताप्रेस्- गोरखपुर – 2017


***

ISSN-2321-6948

# विद्यालयीयशिक्षणे आधुनिकविधीनां योगदानम्

**प्रो. लोकमान्यमिश्रः**
आचार्यो विभागाध्यक्षश्च,
लखनऊपरिसरः, लखनऊ

शिक्षाशास्त्रे शिक्षायाः परिभाषासु वैविध्यं नूनमेव सूचयति यद् एतस्याः तात्पर्ये सततं परिवर्तनं जायते। क्रीष्टोः पञ्चाशदुत्तरैकोनविंशतिशततमे वर्षे (ईसायाः 1950 तमे वर्षे) शिक्षा हि प्रतिक्रिया-प्रक्रियायाः अवगमनम् (To understand response system) इति विषयिका आसीत्। तत्र विविधवस्तूनां परिचय एव पर्याप्तं भवति स्म। सर्वेषां प्राणिनां व्यवहारागमः परमावश्यकम् आसीत्। ततः परं क्रीष्टोः असीत्यधिकैकोनविंशतिशताब्दपर्यन्तं हि असीमितात् हि ज्ञानात् सूचनानां सम्प्राप्तिरेव शिक्षा आसीत्। तदनन्तरं नूतनान्वेषणमाध्यमेन ज्ञानार्जनं तस्य च ज्ञानस्य दैनिकजीवने समुपयोग एव शिक्षा, ज्ञानम् अधिगमो वा आसीत्। तत्पश्चात् अध्यापनशास्त्रे (PADAGOGY इत्यस्मिन्) परिवर्तिते सति विचारावगमाय प्रौद्योगिक्याः प्रयोगपुरःसरं ज्ञानावाप्तिस्पर्द्धा समारभत्। साम्प्रतं हि शिक्षायां छात्रेभ्यस्तथाविधं वातावरणम् अवसरञ्च प्रदीयते येन ते स्वयमेव एतदाकलनं विधेयुः यत् को नाम विधिस्तेषां कृते समुपयुक्तो वर्तत इति। एतेन रुचिपूर्वकं ज्ञानार्जनं सम्भवति इति।

ज्ञानविस्फोटकारणाद् विविधविषयाणां प्रवर्तनं दरीदृश्यते। सर्वत्र ज्ञानस्य प्रसारेण तत्प्राप्त्युपायाः शिक्षणविधिरूपेण प्रस्फुटिताः विद्यन्ते। शिक्षकः कक्ष्यायां शिक्षणोद्देश्यानां प्राप्त्यै येषां साधनानाम्, उपायानाम्, क्रमाणां मार्गाणां वा अनुसरणं करोति त एव शिक्षणशास्त्रे "विधिः", "पद्धतिः"(Method) वेति शब्देन व्यवह्रियन्ते। सन्दर्भेऽस्मिन् बर्नेटमहोदयेन प्रतिपादितं यत् –

"अध्यापको बौद्धिकजगतः, विचारजगतः क्रियाजगतश्च व्याख्यायै विश्लेषणाय वा कक्ष्यायां छात्राणां पुरतः यत् साधनं प्रयुङ्क्ते तदेव तस्य शिक्षकस्य शिक्षणविधिः पद्धतिर्वेति कथ्यते" इति[1]।

---

11"The means which a teacher uses to interpret to the child the world of sense, of thought and action, are called his methods of teaching." - T. J. Burnett,The Essentials of Teaching,Longmans, Green,New York,p.19.

1"A method determines what and how much is taught, the order in which it is taught and how the meaning and from are conveyed and what is done to make use of the Language unconsious."

शिक्षाशास्त्रे कृतभूरिपरिश्रमो मैकीमहोदयोऽपि शिक्षणविधिं व्याख्यातवान् तद्यथा - "विधिशब्देन अयमाशयो यत् किं कथञ्च पाठनीयम्? कस्मिन् क्रमे पाठनीयं कथञ्च अर्थज्ञापनं विधेयम्?केन पथा स्वाभाविकभाषाप्रयोगाय किं कर्तव्यमिति"[1] ?

साम्प्रतं हि आधुनिकशिक्षणविधीनां प्राचुर्यं सततं दरीदृश्यते। तत्र बहुभिः शोधैः इदं प्रमाणितं यत् अस्माकं ज्ञानार्जनस्य प्रक्रियां शिक्षणविधीनां वैविध्येन महाभेः सञ्जायते, यथा डेल एडगर(Dale Edgar 1969) महोदयः एनां प्रक्रियां शंकुरूपेण प्रतिपादितवान्। यथा हि –

अनेन विवरणेन ज्ञायते यत् विद्यालयीयशिक्षणे क्रमशः यथा यथा सक्रियतायां वृद्धिर्भवति, तथा तथैव ज्ञानार्जनेऽपि वृद्धिर्जायते। सक्रियतायाः ज्ञानार्जनस्य च कश्चन सहसम्बन्धो भवत्येव।

एतादृशः अनुभवः वास्तविकानुभवसम एव भवति। आधुनिकशिक्षणविधीनां समुपयोगेन शिक्षणे विद्यार्थी हि केन्द्रे संस्थाप्यते। "सर्वे हि बालाः अनन्याः भवन्ति"(Every child is Unique) इत्येनं सिद्धान्तमादाय सर्वोऽपि शैक्षिकाचारः, सर्वा अपि शैक्षिकयोजना सर्वमपि शैक्षिकतन्त्रञ्च विद्यार्थिनः सौविध्यं प्रकल्प्य व्यक्तिगतविविधतायाः सिद्धान्तस्य अनुपालनं करोति।

लोके बह्व्यः भाषाः विद्यन्ते। तासु सर्वासु भाषासु संस्कृतभाषा अत्युत्कृष्टा अस्ति। तादृश्यां भाषायां प्राचीनकालादाभ्य अध्ययनाध्यापनञ्च प्रचलन्ति। प्रधानतया अस्याः अध्यापने व्याख्यान-टीका- आगमन-निगमन-कण्ठस्थीकरणदीनां विविधानां विधीनां प्रयोगः क्रियते। अनेन ज्ञायते संस्कृतभाषा केवलं परम्परागतविधिना एव अध्याप्यते इति। एभिः विधिभिः छात्राणां सर्वाङ्गीणविकासो भवितुं नार्हतीति ज्ञायते।

अधुनातनकाले वैज्ञानिकाविष्काराणां प्रभावेन महत्परिवर्तनं जातं जायमानञ्चास्ति। तथैव विविधविषयाणाम् अध्यापने अध्ययने च बहूनां प्रविधीनाम् उपयोगः क्रियते। तासां प्रविधीनां प्रयोगेन छात्र-अध्यापयोः सम्बन्धः, छात्राणामधिगमे उत्सुकतां जनयतीति। अतः आङ्ग्लभाषादीनां भाषाणां शिक्षणम् अधिकाधिकं नवीनानां प्रविधीनामाधारेणैव भवति। परन्तु विद्यमानाः विविधाः वैज्ञानिकविधयः सर्वास्वपि भाषासु यदि प्रयुज्महे तर्हि सर्वाः भाषाः सुलभतया अधिगन्तुं शक्येत।

- **प्रत्यक्षविधिः**

विधिरयं संस्कृतवाङ्मये प्रमाणपदेन दर्शनशास्त्रेषु सर्वत्र ख्यापितः। यथोक्तं मनुस्मृतौ –

**प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमनम्।**

-W. F. Maccy, Oxford University Journal,Humanities,Vol.5th, Issue 1,p.3.

**त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता।।**[1]

शिक्षाशास्त्रे (Pedagogy) 'प्रत्यक्षविधिः' वाइल्टरपेनफील्डमहोदयस्य 'मातृदुग्धपद्धतिः' (Mother's Milk Method) इत्यस्य अन्यं नाम वर्तते। सांस्कृतिकभाषाणां (Classic languages) शिक्षणसन्दर्भे विदेरस्य विशिष्टपरीक्षणमभवत्। डॉ.**राऊज**महोदयेन 'परसा'विद्यालये लैटिनग्रीक्भाषे पाठयितुं विधिरयं प्रथमतया प्रयुक्तः। तदनुसारं तस्य प्रयोगोऽयं नूनं साफल्यमविन्दत्।[2]

**प्रत्यक्षप्रणाल्याः स्वरूपम्**

प्रत्यक्षविधिस्तदैव सार्थको भवितुमर्हति, यदा प्रत्येकं पाठः सुनिश्चितयोजनायाम् आधारितस्स्यात्। तत्र विषयवस्तु व्यवस्थितरूपेण प्रस्तुतं कृत्वा क्रमबद्धरीत्या सोपानेषु पाठनीयमावर्तनीयञ्च भवति। अध्येयभाषायाः शब्दानां भावैस्सह पारस्परिकं सामञ्जस्यविधानमेव प्रत्यक्षविधौ प्रामुख्येण क्रियते। प्रत्यक्षविधौ विश्लेषणम् अधोलिखितरूपेण कर्तुं शक्यते। तद्यथा –

(i) वस्तुभिस्सह शब्दानां साहचर्यबोधनम्

(ii) अध्याप्यशब्दानां परिभाषणम्

(iii) उदाहरण-अन्तःकथेत्यादिरूपेण सन्दर्भकथनम्।

शिक्षाशब्दकोशे (Comprehensive Dictionary of Education)प्रत्यक्षविधेरियं परिभाषा निगदिता यत् -प्रत्यक्षविधौ वैदेशिकभाषाशिक्षणे शिक्षकः छात्रान् तेषां मातृभाषायाः स्थाने तयैव वैदेशिकभाषया पाठयतीति[3]। अत्र **कर्कमैन**महोदयस्यापि मतमेतदेव यत् - 'शब्दानामर्थैः सह साक्षात् सम्बन्धो भवितव्यः। एष सम्बन्धः मातृभाषायाः हस्तक्षेपं विनैव संस्थापनीयः'[4] इति।

अनेनार्जितं ज्ञानं, व्यावहारिकं, रोचकं सजीवञ्च भवति। कक्षायाः वातावरणमपि सक्रियम् आह्लादजनकञ्च भवति।अत्र वाचनं महत्त्वपूर्णं स्थानं धारयति। वर्णानां शब्दानाञ्चोच्चारणस्य शैली प्रत्येकं भाषायां भिन्ना भवति। सामान्यतस्तु बालकः स्वपरिवेशे अनुकरणबलात् संस्कारवशाच्च

---

1मनुस्मृतिः, द्वादशोऽध्यायः, श्लोकसंख्या-105

2Comprehensive Dictionary of Education, compiled by M. Ahmad, ATLANTIC Publishers, 2007, p.155

3Direct Method: Foreign language teaching where in the teacher speaks to the pupils only in that language from the outside.

4"...is that a foreign word or word group should be associated with it's meaning directly, in other words without the habitual intervention of the native speech."

-Kirkman quoted by Thompson and Wyatt, The Teaching of English in India, Oxford University Press, London, 1952 p. 34.

सहजमेव शुद्धोच्चारणं कर्तुमर्हति। एतेन वाचनाभ्यासेन स शुद्धोच्चारणसामर्थ्यं लब्धुं शक्नोति। अनेनैव बालकेषु वार्तालापकौशलस्यापि प्राप्तिर्भवति।

अत्र व्याकरणनियमानां साक्षात् बोधनं विनैव व्याकरणसम्मता भाषोपयुज्यते। भाषायाः च व्यावहारिकं ज्ञानं प्रदीयते।

**अभिक्रमितस्वाध्यायविधिः**

क्रिष्टोः 1923 तमे वर्षे सिडनी एल प्रेसे महोदयेन अभिक्रमिताध्ययनविधेः प्रस्तावो विहितः। एतदर्थं महोदयेन अमुना शिक्षणयन्त्रस्य प्रयोगः कृतः। कालान्तरे तु एतदर्थं संगणकादीनां क्रमोन्नतानां यन्त्राणां प्रयोगोऽपि अभवत्। रेखीय-शाखीयरुपेण अभिक्रमिताध्ययनं मुख्यतः द्विविधं भवति। उत्तरोत्तररूपेण न्यूनदोषाणामाचरणं विधेरस्य वैशिष्ट्यमस्ति। अत्र पञ्च सोपानानि भवन्ति। एतानि हि –

1. संक्षिप्तपाठ्यांशस्य सिद्धान्तः,
2. सक्रियसहयोगस्य सिद्धान्तः,
3. सद्यः पुनर्बलनस्य सिद्धान्तः,
4. स्वगत्या अधिगमस्य सिद्धान्तः,
5. स्वपरीक्षणस्य सिद्धान्तश्चेति।

संस्कृतशिक्षणदृष्ट्या सन्धिः, समासः, कारकम्, उपसर्गः, प्रत्ययः इत्यादीनां शिक्षणे अस्य विधेः महती उपयोगिता विविधैः शोधैः प्रतिपादिता। अत्र मन्यते यत् स्वगत्या अध्येतुं क्रियां कृत्वा शुद्धाशुद्धरुपेण स्वप्रतिक्रियायाः फलञ्च विज्ञाय मनुष्यः अधिगमी जायते। शास्त्रेष्वपि निगदितं यथा–

**शास्त्राण्यधीत्यापि भवन्ति मूर्खाः,**
**यस्तु क्रियावान् पुरुषः स विद्वान्।** [1]
**आचार्यात्पादमादत्ते पादं शिष्यस्स्वमेधया।**
**पादं सब्रह्मचारिभ्यः पादं कालक्रमेण हि।।**[2]

**भाषाशिक्षणोपागमाः**

शिक्षणीयांशानां विधीनां तत्फलानां च विषये यादृष्टिः, यः विचारः वर्तते स एव उपागमशब्देनोच्यते। शिक्षणविधीनां दार्शनिकाधारः एव उपागमो भवति।

---

1हितोपदेशः, 1-67
2महाभारतम्, उद्योगपर्व

भाषाशिक्षणे चत्वार उपागमाः मुख्यतया दृश्यते। ते यथा –

1. संरचनोपागमः (Structural Approach),
2. सान्दर्भिकोपागमः (Situational Approach),
3. मौखिकोपागमः (Oral Approach),
4. सम्प्रेषणोपागमः (Communicative Approach).

**1. संरचनोपागमः (Structural Approach)**

अस्मिन् उपागमे भाषायाः वाक्यरचना तद्भेदाश्च प्रमुखतया बोध्यन्ते। तेन भाषावगमनं प्रयोगावगमनञ्च भवति छात्राणाम्। आङ्ग्लभाषायां वाक्यनिर्माणं भवति कर्ता (Subject), क्रिया (Verb), कर्म (Object) अनेन क्रमेण। भारतीयभाषासु भिन्नतया भवति यथा – कर्ता-कर्म-क्रिया च। संस्कृते तथा भेदे सत्यपि अर्थभेदो न सम्भवति। आङ्ग्लभाषायां क्रमः प्रधानः, अन्यथा विपरीतः भवति। यथा –Ravi beat Hari, Hari beat ravi.

अत्र वाक्ययोः पूर्णार्थः परिवर्तित एव। एतादृशक्लेशवारणाय छात्राणां कृते वाक्यसंरचना बोधनीया इति अस्य उपागमस्य प्रधानमुद्देश्यम्।

- **संरचनोपागमस्य मुख्यसिद्धान्ताः**

  1. भाषा प्राथमिकतया भाषणरुपा।
  2. भाषणं विभिन्नाभ्यासानां समूहः।
  3. भाषाशिक्षणम्, न तु भाषाविषयकशिक्षणम्।
  4. भाषा परस्परं भिन्नाः।

- **गुणाः**

  1. अस्मिन् उपागमे छात्रक्रिया अधिका, अध्यापकक्रिया न्यूना वर्तते।
  2. अनेन पदसम्पत् वर्धते, वाक्यरचनाज्ञानं च भवति।
  3. अत्र संरचनाकेन्द्रितम् अध्ययनं भवति।
  4. अत्र छात्रः भाषादक्षतां प्राप्नोति।

- **न्यूनताः**

  1. अयम् अध्यापककेन्द्रितो भवति।
  2. अयं प्राथमिक-माध्यमिकस्तरयोः समीचीनः भवति। उच्चस्तरे नीरसतां जनयति।

**2. सान्दर्भिकोपागमः (Situational Approach)**

बालः भिन्नैः मार्गैः भाषामधिगच्छति। बालः व्याकरणादिकम् अजानन्नेव व्यवहरात् सन्दर्भानुगुणं भाषामधिगच्छति। तादृशान् सन्दर्भान् प्रकल्प्य भाषान्तराणि अधिगमयितुम् उपागमोऽयम् उपयुज्यते। अध्यापकः उपागमस्यास्य आधारेण नव्यपाठ्यांशपाठनाय कक्ष्यायां विभिन्नान् समुचितान् सन्दर्भान् संरचयति। तेषाम् अभ्यासेन अधीतांशे दृढतां सम्पादयति। अयमुपागमः संरचनोपागमाद् समुत्पन्नः।




- **गुणाः -**
  1. अत्र अध्यापकक्रिया न्यूना, छात्रक्रिया अधिका।
  2. विभिन्नसन्दर्भेषु भाषणाभ्यासः कार्यते।
  3. सर्जनात्मकता बहिरायाति।
  4. भाषण-लेखनकौशले वर्धेते।
- **न्यूनताः –**
  1. अध्यापककेन्द्रितः अयमुपागमः।
  2. तथा प्रशिक्षिताः शिक्षकाः विरलाः।
  3. सर्वेऽपि सन्दर्भाः कक्ष्यायां कल्पयितुं न शक्यन्ते।

**3. मौखिकोपागमः (Oral Approach)**

भाषायाः मुखद्वयं वर्तते। एकं ध्वन्यात्मकमपरं लिप्यात्मकं च। लोके यः लिपिं जानाति सः भाषितुम् असमर्थो भवेत्। तथैव भाषणं यः करोति सः लिपिं न जानीयात्। अतः द्वयोः समप्राधान्यं वर्तते। तथापि **भाष्यते इति भाषा** इति निर्वचनात् भाषायाः ध्वनिरूपमुखस्य अत्यन्तं प्राधान्यम्

अङ्गीक्रियत एव। अयमेव सिद्धान्तः अस्योपागमस्याधारः। बालाः आदौ मौखिकाभ्यासेनैव भाषामधिगच्छति ततः परमेव लेखनादिकं करोतीति अनुभववेद्यम् एव।

अत्र छात्राणां मौखिकाभ्यासार्थं समुचितावसरः प्रकल्पनीयः। भिन्नमौखिकाभ्यासैः छात्रेषु विद्यमानाः भावाः बहिरायान्ति तथैव भाषाभ्यासः सम्यक् भवति।

- **गुणाः -**
  1. छात्राणां भाषणाभ्यासः अनेन सम्यक् भवति।
  2. छात्रक्रिया अधिका, अध्यापकक्रिया न्यूना।
  3. प्राथमिक-माध्यमिकस्तरयोः समुचितः अयमुपागमः।
  4. छात्राः सोत्साहं भागं गृह्णन्ति।
- **न्यूनताः**
  1. सर्वेऽपि छात्राः भाषणे उत्साहं न प्रदर्शयन्ति।
  2. उच्चस्तरे नीरसतां जनयति।
  3. सहनशीलाः अध्यापकाःविरलाः।

4. **सम्प्रेषणोपामः (Communicative Approach)**

कस्यचित् विषयस्य सम्प्रेषणं कयाचित् भाषया एव भवतुमर्हति। भाषां विना कस्यापि विचारस्य सम्प्रेषणं नैव भवति। अतः आदौ भाषा सम्यक् शिक्षणीया एव। अत्र भाषायाः शिक्षणे अपि सम्प्रेषणमेव उत्तमं साधनं भवतीति निरूपयति अयमुपागमः।

- **सम्प्रेषणस्य प्रकृतिः**
  1. सम्प्रेषणं पारस्परिकसम्बन्धस्थापनस्य काचित् प्रक्रिया।
  2. एषा काचित् द्विपाक्षिकी प्रक्रिया, यत्र सन्देशसम्प्रेषकः, सन्देशसंग्राहकश्चेति उभौ अपि भवतः।
  3. सम्प्रेषणं काचितदुद्देश्यपूर्णा प्रक्रिया भवति।
  4. सम्प्रेषणप्रक्रियायाम् अन्तःक्रिया, प्रतिपुष्टिः च परस्परम् अपेक्षिते भवतः।
  5. सम्प्रेषणं काचित् निरन्तरा गतिशिलाच प्रक्रियाविति।
- **सम्प्रेषणोपागमस्य सिद्धान्ताः**
  1. सान्दर्भिकम् उचितं च सम्प्रेषणं भवेत्।

2. प्रत्यक्षविधौ संरचनोपागमे च आदौ भाषणमारभ्यते। ततः परं पठनलेखने आरभ्येते। किन्तु सम्प्रेषणे पठन-लेखने अपि समकालम् आरब्धुं शक्यते।
3. अनुस्यूता, प्रामाणिकभाषायाः उपयोगः प्रधानोद्देश्ये सम्प्रेषणोपागमस्य।
4. उपागमेऽस्मिन् छात्राः परस्परं सम्मिलन्ति। स्वभावान् परस्परम् अभिव्यञ्जयन्ति। तत्र शिक्षणे छात्राः युगलक्रियाः (Pair Works), सामूहिकक्रियाः (Group Works) च कर्तुं सम्प्रेर्यन्ते। ततः छात्राः भाषाकौशलानि स्पष्टोच्चारणादिकं च प्राप्नुवन्ति।

- **गुणाः**

1. वैयक्तिकरुपेण सर्वेभ्यः अवसरः दीयन्ते।
2. युगलरुपेणघटकरुपेण च कार्यसम्पादनेन छात्रेषु आत्मविश्वासो वर्धते।
3. भाषाभ्यासः पर्याप्ततया सम्भवति।
4. भाषायाः उपयोगे निर्दुष्टताम्अनुस्यूततां, च प्राप्नुवन्ति।
5. छात्रक्रिया अधिकाअध्यापकक्रिया तु न्यूना।

- **न्यूनता**

1. सामान्यशिक्षक एतत्कर्तुं नैव प्रभवति।
2. मातृभाषायां यथा सम्प्रेषणं कर्तुं शक्नुवन्ति तथैव संस्कृतेन सम्प्रेषणं कर्तुम् असमर्थाः भवन्ति छात्राः।
3. भारतीयविद्यालयपरिस्थितिषु अस्योपागमस्य प्रयोगो न तथा सरलः।

- **भाषाप्रयोगशाला (**Language labs)

भाषाप्रयोगशाला नाम भाषायाः प्रयोगं कर्तुं शाला इति। लोके प्रयोगशालाः बह्व्यः सन्ति। यथा – विज्ञानसम्बद्धप्रयोगशालाः, चिकित्सिकीयाः प्रयोगशालाः, समाजसम्बद्धाः प्रयोगशालाः प्रभृतयः। परन्तु अधुनातनकाले भाषासम्बद्धाः प्रयोगशालाः अपि समारब्धाः। एतासु प्रयोगशालासु विशिष्य भाषाशिक्षणस्यैव प्राधान्यं भवति।

i. **भाषाशिक्षणे भाषाप्रयोगशालानां प्रयोजनानि**

1. भाषोच्चारणे दोषरहितभाषायाःविकसनम्।
2. ध्वन्युच्चारणभेदानाम् अभ्याससम्पादनम्।
3. छात्राः क्लेशं विना उच्चरितुं शक्नुवन्ति, यतः अस्य उच्चारणम् अन्ये श्रोतुं न प्रभवन्ति।
4. उच्चारणाभ्याससम्पादनम्।

5. उच्चारणदोषाणां परिष्करणम्।
6. शिक्षणगत्याः अभिवर्द्धनम्।
7. छात्राणां सक्रियाकरणम्।

ii. **भाषाप्रयोगशालायाः आवश्यकता**

भाषाप्रयोगशालायाः प्रभावो वैदेशिकभाषाभ्यासविषये अधिकतया भवति। तथैव संस्कृतभाषाशिक्षणे अस्याः प्रभावः अत्यधिको भवति। यतोहि भाषायाः सरले विषये अस्याः प्रभावो भवतीति भाषावैज्ञानिकानामभिप्रायः। महाभाष्ये उक्तरीत्या "एकः शब्दः सम्यक् ज्ञातः सुष्ठुप्रयुक्तः स्वर्गे लोके च कामधुक् भवती"तिप्रतिपादितम्। अतः शुद्धोच्चारणस्य यावान् प्रभावः अस्ति तावान् प्रभावोभाषाप्रयोगशाला द्वारा शुद्धोच्चारणं सः ज्ञातुं प्रभवति। अतः संस्कृतभाषाशिक्षणे अस्या आवश्यकता सर्वेष्वपि स्तरेषु अपेक्षते इति।

**iii. उपलभ्यमानोपकरणानि**

**तिरुपतिविद्यापीठेन - संस्कृतशिक्षिका**। अस्यां शिक्षिकायाम् अक्षरशिक्षणादारभ्य श्लोकश्रवणं, गीतानि, अन्त्याक्षरी, सम्भाषणानि क्रीडाः, सङ्ख्याः, प्रवचनानि, इत्यादयः बहवः विषयाः सन्ति। तान् श्रावयितुं शक्नोति शिक्षकः।

**संस्कृतभारतीद्वारा मुद्रिता – भाषिका**। अस्यामपि अक्षरशिक्षणादरभ्य व्याकरणशिक्षणं, क्रीडाः, अभ्यासाः, गीतानि, सम्भाषणानि, कथाः प्रभृतयः विषयाः भवन्ति।

**राष्ट्रियसंस्कृतसंस्थानेन विकसिताः संस्कृतसम्भाषणसम्बद्धाः सान्द्रमुन्द्रिकाः** (CD'S)। एतस्यां सरलसंस्कृतसम्बद्धानां गीत-विभक्ति-काल-अव्ययसम्बद्धानां विषयानां दृश्यश्रव्यसहितं च शिक्षणं भवति।

एतेषाम् उपोयगेन नूतनानां विषयाणां विनियोगेन च संस्कृतभाषाशिक्षणे भाषाप्रयोगशाला बहूपकरोतीति।

❖ **सङ्गणकयन्त्रम् (Computer)**

आरम्भकाले एतत् केवलं गणनायन्त्रत्वेन एव आसीत्। परन्तु अधुनातनकाले इदम् सर्वेष्वपि क्षेत्रेषु महदुपकरोति। सङ्गणकयन्त्रं साम्प्रतं शिक्षायाः कृते अतीव प्रचलितं यन्त्रं भवति। सङ्गणकेन शिक्षाक्षेत्रे एका प्राविधिकी क्रान्तिः समुत्पादिता वर्तते। सङ्गणकीयेऽस्मिन् युगे एतस्य महत्वमत्यधिकं वर्तते।

➢ **सङ्गणकस्य महत्त्वम् –**

1. पारम्परिकशिक्षणपद्धतौ सङ्गणकशिक्षणपद्धतौ च महदन्तरं वर्तते। प्राचीनपद्धतौ तात्पर्यस्याकालनस्य च मध्ये सामञ्जस्यं न भवति। किन्तु सङ्गणकेन कार्यस्य समनन्तरमेव छात्रेभ्यः प्रतिपुष्टिः प्रोत्साहनञ्च लभ्यते।
2. सङ्गणकं पूर्णतया निर्वैयक्तिकशिक्षकः यत् पूर्वाग्रहेण रहितो भवति। छात्राणां जातिः, लिङ्गं, वर्गश्च इत्यादीन् सङ्गणकं न प्रभावयति।
3. छात्राः यावत् पाठ्यबिन्दुमात्मसात् न कुर्वन्ति। तावत्पर्यन्तं सङ्गणकेन पाठ्यबिन्दोः विश्लेषणं पौनःपुन्येन कारयितुं शक्यते।
4. सङ्गणकाधारितपाठः प्रत्येकं छात्रस्य प्रगतिं परिवीक्षितुं शक्नोति। सर्वेषां छात्राणां दौर्बल्ये अवधानं प्रयच्छति। तेषां समीकरणार्थं पर्याप्ताभ्यासाय च अवसरं कल्पयति।
5. सङ्गणकसहायतायै यदि शिक्षयामस्तर्हि छात्राः सावधानं शृण्वन्ति। तेन विषयस्योपरि अवधानं च भवितुमर्हति।
6. शिक्षकस्याभावेऽपि विद्यार्थी अधिगन्तुं शक्नोति।
7. छात्राः स्वतः सक्रियाः भवन्ति।

अस्य प्रयोगो व्याकरणक्षेत्रे भाषाध्ययने च बहूपकरोति। यथा – सन्ध्यध्यापनसमये अध्यापकेन सङ्गणके पूर्वमेव सन्धिः इत्यस्य पावर पांइट(POWER POINT)निर्मीय पाठ्यते तर्हि छात्राः रुचिपूर्वकं शृण्वन्ति स्पष्ठतया च अवगच्छन्ति। एवं शिक्षणेन छात्राणां मनः पाठे एव संलग्नो भवति न तु अन्यत्र। एवम् अन्येषु विषयेष्वपि सङ्गणकप्रयोगं कर्तुं शक्नुमः।

❖ **अन्तर्जालम्**( Internet)

अधुनिकयुगे अस्य प्राधान्यं सर्वत्र दरीदृश्यते। अस्य प्रयोगं प्रधानतया आङ्ग्लभाषायां दृश्यते। परन्तु इदानीं तु अन्तर्जाले सर्वासां प्रान्तीयभाषाणामपि प्रयोगो दृश्यते।संस्कृतस्य शिक्षणावसरे अस्य साहाय्यं स्वीक्रियते।

यथा –चिन्मयमिषन् द्वारा साक्षादेव तन्त्रिकमाध्यमेन(ON LINE)संस्कृतशिक्षणं प्रदीयमानमस्ति। तत्र यस्य यथा समयं भवति तदा ते स्वयं संस्कृतशिक्षणं प्राप्नुवन्ति।तथैव विवधाः संस्थाः सन्ति। यदि यू-ट्यूब (YouTube) द्वारा अपि संस्कृतकथाः, संस्कृतसम्भाषणानि, संस्कृतकक्ष्याः इत्यादयः दृश्यश्रव्यमाध्यमेन उपलभ्यन्ते। एवं रीत्या अन्तर्जालद्वारा संस्कृतशिक्षणं

प्रदातुं शक्यमिति। तथैव जि मेल (Gmail) इत्येतस्मिन् "भारतीयविद्वत्परिषत्" इति नाम्ना एकं समूहं विद्यते। तत्र सन्देशमाध्यमेन (mail) जिज्ञासूनां सन्देहनिवृत्तिः भवति। एवं रीत्या बहुविधतया संस्कृतेऽपि अन्तर्जालस्य प्रयोगं कर्तुं शक्यते।

**अभ्युन्नतकक्ष्याकक्षः (Smart Class Room)** - इदमिदानीं नूतनतया विद्यालय-महाविद्यालय-विश्वविद्यालयेषु अभ्युन्नतकक्ष्याकक्षः (Smart Class Room) इति नाम्ना कक्ष्याप्रकोष्ठाः निर्दिष्टाः सन्ति। एतासु कक्ष्यासु श्वेतवर्णफलकः संलग्नो भवति। तस्याधारेण शिक्षकः दृश्य-श्रव्योपकरणानि उपयुज्य, तथैव श्यामफलकवत् लेखनकार्यं च कर्तुं शक्नोति। फलकमेतत् सङ्गणकेन साक्षाद् संलग्नं भवति। तत्र शिक्षणसामग्री सज्जीकृत्य स्थाप्यते। ध्वनिविस्तारकस्यापि प्रयोगस्तत्र भवति। आधुनिकसमये स्मार्टपट्टस्योपयोगेन विद्यार्थिनां सजीवतया ज्ञानं विधीयते। एवमेव रासायनप्रयोगशालानां रासायनिकप्रतिक्रियायाः अध्ययनं रसायनैः विनैव कर्तुं प्रभवति।

- **क्षेत्रपर्यटनम्**

अद्यत्वे विद्यालयेषु वास्तविकानुभवाय पुस्तकानां स्थाने प्रत्यक्षतः दर्शनार्थं यत्नो विधीयते। यतश्चैतादृशं ज्ञानं वास्तविकम् आचिरञ्च तिष्ठति। आधुनिकविधिषु इयमेव पद्धतिः क्षेत्रपर्यटननाम्ना आख्यातेति। ईसायाः 2014 तमे वर्षे क्षेत्रपर्यटनविधिना प्रभावितः अमेरिकादेशस्य **रिवनवर्क** (Revenbark) महोदयस्य परिवारः स्वबालानां शिक्षायै विद्यालयस्य स्थाने वार्षिकं विश्वभ्रमणं शिक्षणविधिरूपेण चितवान्।

विधिरयं यथा प्राचीनासक्तं नावीन्यं वहति, तथैव नावीन्यासक्तां प्राचीनतामपि निर्वहति। देशाटनेन विद्वत्तायाः उदाहरणं बाणभट्टेनापि कविना स्फुटं प्रदत्तम्। यथा हि -

**देशाटनं राजसभाप्रवेशो व्यापारिविद्वज्जनसंगतिश्च।**
**सर्वेषु शास्त्रेष्ववलोकनञ्च चातुर्यमूलानि भवन्ति पञ्च।।** इति

**निष्कर्षः**

शिक्षणविधिषु सञ्चारप्रौद्योगिक्याः समुपयोगः परमावश्यको भवति। साम्प्रतं हि **फेस्बुक्(Facebook), व्हाट्स एप (WhatsApp)** प्रभृतिसाधनानां समावेशः शिक्षायै विधेयः। एतेन सद्यः एव जिज्ञासानां परिपूर्तिः सम्भवति। एतयोरुपयोगः वैयक्तिकरूपेण सामूहिकरूपेण वेति कर्तुं शक्यते। शिक्षणविधौ एतयोरुपयोगविषये शोधाः (Researches) योजनाश्च (Projects)प्रोत्साहनीयाः। विविधेषु राज्येषु शासनपक्षतः छात्राणां कृते **लेपटाप, स्मार्टफोन**

इत्येतयोः निःशुल्कं वितरणमपि प्रचलति। परम् एतयोपयोगाय प्रभावोत्पादिकायाः योजनायाः विकासः परमावश्यको वर्तते। प्रौद्योगिकी हि न कदापि कथमपि शिक्षकस्य स्थानं न्यूनीकर्तुं शक्नोति परं शिक्षको हि प्रौद्योगिक्याः प्रयोगेण स्वकीयं शिक्षणं प्रभावोत्पादकं कर्तुमर्हति। भारते हि सर्वेषु स्तरेषु शिक्षकाणामभावो दरीदृश्यते। तस्याभावस्य ईषद् परिपूर्तिः प्रौद्योगिक्याः अधिकाधिकप्रयोगेण सम्भवति।

भारतभूमिः सदैव जिज्ञासूनां तोषिकेति रूपेण सुप्रसिद्धा वर्तते। विविधेभ्यो देशेभ्यः समागताः ज्ञानपिपासवः अत्र विद्यमानेषु तक्षशिला-नालन्दाप्रभृतिशिक्षाकेन्द्रेषु गुरुकुलेषु च ज्ञानार्जनं विधाय तृप्ताः सञ्जाताः। साम्प्रतिकं प्रचलितेषु शिक्षाकेन्द्रेषु कार्यरतानां शिक्षकाणां कर्तव्यमिदं भवति यत् ते भारतस्य ज्ञानार्जनपरम्परया सुपरिचिताः भूत्वा वर्तमानज्ञानेन च परिचिताः भवेयुरिति। उभयोर्मध्ये समन्वयं संस्थाप्य शिक्षणविधेः समाश्रयणेन ज्ञानस्य प्रसारणाय संलग्नाः स्युरिति। देशस्य सर्वविधविकासाय परमावश्यकमेतद् वर्तते।

संस्कृतभाषां विहाय भाषान्तरां श्रोतुं यदा क्षीणावसरो भविष्यति तदा सुतराम् ज्ञानं भविष्यति। छात्रं परितः संस्कृतवातावरणस्य निर्माणं कर्तव्यम्। न्यूनातिन्यूनं कक्षायां तु एतत्कार्यं भवेदेवेति। संस्कृतम् अवगन्तुं बहवो मार्गास्सन्ति। संस्कृतस्य विविधविधानां शिक्षणोद्देश्यानां पूर्तये अनेके विधयो भवन्ति। कश्चिदेको विधिः सर्वत्र व्यवहार्यो भवितुं नार्हति। अतः शिक्षकः समस्तविधीनां ज्ञाता विवेकशीलश्च भवेत्। संस्कृतभाषाधिगमाय तद्भाषोपनिबद्धं वातावरणं सर्वथा अनिवार्यम्। शिक्षणप्रौद्योगिक्याः प्रयोगे शिक्षको रुचिवान् स्यात्। एतदर्थं संस्कृतशिक्षकैः महोत्तरदायित्वं वोढव्यमिति। एतेनैव निश्चयेन संस्कृतस्य संरक्षणं, विकासः, प्रसारश्च भविष्यतीति। न कोऽपि राजनेता राजनीतिदलं वा देशस्य विकासं कर्तुमर्हति। देशस्य विकासस्तु तत्र प्रचलितासु कक्षासु सञ्जायते नत्वन्यत्र।

## सन्दर्भग्रन्थसूची

1. मिश्रः, लोकमान्यः; साहित्यशिक्षणविधिः, मृगाक्षीप्रकाशनम्, ५/११३, विरामखण्ड, गोमतीनगर, लखनऊ, २०१०.
2. रा., देवनाथः; उपाध्यायः, भुवनेशः; व्याकरणशिक्षणविधयः, प्रथमं संस्करणम्, भारतीयविद्या संस्थान, वाराणसी, १९९२.
3. पाण्डेयः, इन्दिराचरणः; संस्कृत शिक्षण समीक्षण, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, प्रकाशनविभागः, १९९२.

4. उपाध्याय, राजेश्वर एवं वशिष्ठ श्रीधर; संस्कृत एवं सूक्ष्म शिक्षण प्राविधिकी, प्रथम संस्करण, भारतीय विद्या संस्थान, वाराणसी।
5. चौबे, विजयनारायण; संस्कृत शिक्षण विधि, उत्तरप्रदेश हिन्दी संस्थान, लखनऊ , १९८५.
6. माथुर, एस. एस. शिक्षणकला, शिक्षण तकनीक एवं नवीन पद्धतियाँ, विनोद पुस्तक मन्दिर, आगरा।
7. सफाया, रघुनाथ; संस्कृत शिक्षण, हरियाणा ग्रन्थ अकादमी, १९९०.
8. पाण्डेय, रामशकल, संस्कृत शिक्षण, विनोद पुस्तक मन्दिर, आगरा।
9. शर्मा, सी.एच्.एल्.एन्.; सिंह फतेहश्च, संस्कृतशिक्षणं नवीनप्रविधयश्च, राष्ट्रियसंस्कृतसंस्थानम्, जयपुरपरिसरः।
10. संस्कृत आयोग का प्रतिवेदन (अलखनिरञ्जनपाण्डेयकृत हिन्दी अनुवाद), सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी, १९७९.
11. Bokil, VinayakPandurang; *A New Approach to Sanskrit*, ChitrashalaPrakashan, Poona, 1956.
12. Bhandarkar, Ram Krishna; First book and Second book of Sanskrit, KeshavBhikajiDhavle Publications, Bombay, 1864.
13. Percivial Wren; 'The Indian Teacher's Guide to the Theory and Practice of Mental, Moral and Physical Education' Bombay, (1910).


***

# भाषाचिन्तनं शिक्षा च

प्रो. एस. एल. पाण्डेयः

भाषा सम्प्रत्ययनिर्माणस्याधारभूता, भाषा चिन्तनस्य महत्त्वपूर्णसाधनरूपा भाषा विचाराणां जननी, चिन्तनस्य अभिव्यक्त्यर्थं माध्यमिव कार्यं करोति। मनोवैज्ञानिका 'चिन्तनमान्तरिकसम्भाषणमिति' कथयन्ति। यस्य जनस्य पार्श्वे भाषाशक्ति शब्दभण्डारो वा भवति सः विचारप्रकटने तथैव प्रबलतरः। भाषा शाब्दिका सांकेतिका वा भवितुमर्हति। बहुधा जना जलिटसमस्याया विचारकाले स्वगतवार्तालापे संलग्ना भवन्ति हस्तदिभिः मुखमुद्रया भावान् प्रकटयन् आन्तरिकसम्भाषणे संलग्नाः भवन्ति।

अनेन ज्ञायते यत् चिन्तने भाषाया प्रयोगं यथाकथमपि क्रियते एव। भाषया एव चिन्तनस्य विभिन्नरूपाणां समन्वयः भवति। अतः भाषा प्रतीकरूपा (Symbol) यस्याधारेण व्यक्ति स्वभावान् विचारान् वा प्रकटयति। चिन्तनं च मस्तिष्के विद्यमानानां शब्दानां माध्यमेन अभिव्यक्तं करोति च। वैलेन्टाइन नामाख्य कश्चित् मनोवैज्ञानिकः भाषाचिन्तयोः अर्थं स्पष्टीकृत्य लिखति यत्-

'भाषा सम्प्रत्ययनां निर्माणे सहायिका भवति, एकस्य शब्दस्य अर्थस्य कृते केन्द्रीय भावं निर्माति शब्द-प्रतिमाया रुपे विकसितः स्यात् सः भावः अथवा प्रस्तावितस्य कार्यस्य विचार साहचर्यस्य स्वरुपे वा स्यात्' अस्मिन् सन्दर्भे वैलेन्टाइन महोदय उदाहरणं ददाति- बालकस्य समक्षे वयं पुस्तकम्, पुस्तिका, कलमम् इत्यादीनां शब्दानां पृथक् पृथगुच्चारणं कुर्मः तदा एतेषां शब्दानां बालकः अर्थस्य अवबोधं करोति यद्यपि एतानि वस्तुनि तस्य समक्षे न भवन्ति। 'पुस्तकम्' शब्दस्य प्रतिमा तस्य मस्तिष्के निर्मिता अस्ति, पुस्तकस्य सम्प्रत्ययस्य निर्माणमपि अस्ति। पुस्तकम् श्रुत्वैव स विचारयति यत् पुस्तके मुद्रितानि पत्राणि भवन्ति, पुस्तकं च पठनाय प्रयुक्तं भवति। एतादृशेषु विचारेषु भाषा एव सहाय्यं करोति। अत्र 'पुस्तकम्' शब्द वस्तुप्रतीकस्य कार्यं करोति। चिन्तनप्रक्रियायां प्रतीकानां सहायता स्वीक्रियते।

अतः वयं कथयितुं प्रभवामः भाषाचिन्तनयोः घनिष्ठः सम्बन्धः भाषा रहितं चिन्तनमसम्भवम्। केचन मनोवैज्ञानिकाः तथा न चिन्तयन्ति, ते कथयन्ति यत् –

भाषा रहितं चिन्तनं सम्भवम्। कदाचित् तादृशाः अवसरा अपि आगच्छन्ति यदा भाषारहितं चिन्तनमपि कुर्म, विचारप्रकटीकरणे अभिव्यक्त्यमुपयुक्तशब्दानामभावो भवति।

किन्तु इदं सर्वमान्यं यत् चिन्तने भाषाया महत्त्वपूर्णं योगदानं भवति। अस्य तथ्यस्य मते- चिन्तने भाषाया अधोलिखितानि कार्याणि भवन्ति –

1. भाषाविचाराणां सहायिका।
2. भाषाया विकासेन सम्प्रत्ययानां निर्माणं भवति।
3. भाषाविचारविनिमयस्य साधिका।
4. भाषा विचारप्रकटिकरणे, अभिव्यक्त्यर्थं सहायिका।
5. सम्प्रत्यात्मकचिन्तने भाषाया अत्यधिकं महत्त्वमस्ति।
6. भाषास्मरणे धारणे वा सहायिका।
7. भाषाया कारणेन चिन्तने मितव्ययः भवति। अर्थात् विचारन्यूतनम- विचाराणामाधारेण अधिकमभिव्यक्ति।
8. भाषाया आधारेण चिन्तनस्य विस्तरीकरणं क्रियते।
9. भाषाविचारेषु ध्यानकेन्द्रीकरणे सहायिका भवति।
10. अवधानस्य स्थित्यां चिन्तनक्रियायामान्तरिक सम्भाषणं सहयोगं ददाति।

अनेन वयं कथयामः यत् भाषाचिन्तनयोः घनिष्ठसम्बन्धः चिन्तनस्य विकासे सम्प्रत्यानां भाषाया च महत्त्वपूर्णं स्थानमस्ति द्वौ एव चिन्तनस्य प्रमुखसाधने स्तः।

**चिन्तनम् (Thinking) –**

चिन्तनस्य विषये विश्वस्य समग्रेषु पुरातन राष्ट्रेषु विचारम् अभवत्। धर्मग्रन्थेषु, समाजशास्त्रे, भाषासु विज्ञानेषु प्रमुखतः दर्शनशास्त्रेषु चिन्तनस्य विषये वहवः विचाराः मिलन्ति। अन्ततः सर्वे विषयाः चिन्तनम् एका मानसिकप्रक्रिया अस्ति इति प्रतिपादयन्ति। अनेनैव चिन्तनं मनोविज्ञानस्य विषयो वर्तते। इदं मस्तिष्कस्य योग्यता वर्तते। चिन्तनमस्मान् परिस्थित्याः सह संघर्षस्य शक्तिमुत्पादयति। चिन्तनकाले प्रतीकानामाधारेण भाषाया माध्यमेन समस्या समाधानस्य प्रयासः क्रियते। चिन्तनकाले विविधेषु समाधानेषु एकस्य चयनं कृत्वा समस्या समाधानं कर्तुं प्रयत्नं भवति। **रॉसमहोदयः –** 'मानसिकक्रियाया ज्ञानात्मकपक्षः चिन्तनमिति' मनुते।

**वारेन महोदयः –** 'चिन्तनं प्रतीकात्मकस्वरुपस्य विचारात्मक प्रक्रिया अस्ति, यस्या समारंभः समस्यायाः प्रादुर्भावेन भवति, समाधानेन चिन्तनस्य समाप्ति भवति' इति लिखति।

**वुडवर्थमहोदयः —** चिन्तनप्रक्रियायाम् पञ्चतत्त्वानि भवन्ति इति कथयति। तानि पञ्चतत्त्वानि इमानि —

1. लक्ष्यं प्रति उन्मुखता।
2. लक्ष्य प्राप्त्यर्थं प्रयत्नाः।
3. पूर्वनिरीक्षित तथ्यानामनुभवानां वा स्मरणम्।
4. पूर्वानुभवानां नूतनानुभवेषु संयोजनम्।
5. आन्तरिक वाग्गतयः मुद्राश्च।

जॉन ड्यूई महोदयः — 'How we think' इत्यस्मिन् पुस्तके मानवमस्तिष्कस्य विचारप्रक्रियायां पञ्चतार्किकस्थितीनां वर्णनं करोति-

1. विचारस्य समारंभः समस्या काठिन्यस्य कारणेन भवति।
2. मस्तिष्के समग्रसमस्यायाः स्थित्या, वाख्यायाः, समस्याया चोद्घाटनं भवति।
3. विभिन्नेषु समाधानेषु संभावितस्य समाधानस्य विवरणं प्राप्यते।
4. प्रत्येकं समाधान समुचितरुपेण अधिगत्य सर्वश्रेष्ठ समाधानाय तत्परता।
5. पुनरीक्षणेन, प्रयोगेन परिणामस्याधारेण समाधानं स्वीकृतमस्वीकतं वा भवति।

अनेन प्रकारेण चिन्तनमेका जटिलमानसिक प्रक्रिया वर्तते। या च समस्यायाः प्रादुर्भावात् प्रारभति समाधान पर्यन्तं चलति च।

**चिन्तनस्य प्रकाराः (Types of Thinking) —**

**1. प्रत्यक्षात्मकं चितन्म् (perceptual Thinking) —** एतादृशं चिन्तनं शिशु बालकेषु प्राप्यते। अस्य चिन्तनस्याधारः प्रत्यक्षात्मकं ज्ञानं भवति। अस्मिन् संवेदना प्रत्यक्षीकरणं कार्यं करोति। प्रत्यक्षात्मकचिन्तने मानवजीवो वा पदार्थं परिस्थितीं वा अवलोक्य चिन्तनं करोति अस्मिन् कस्यचिद् शब्दान् नामादीनां वा प्रयोगं नैव भवति। एतादृशं चिन्तनं पूर्वानुभवेषु आधारितं भवति। यया अग्निना दग्धः कश्चित बालकः अग्निमलोक्य भीतो भवति। तथैव गृहकार्यस्य अपूर्णावस्थायां बालक कक्षायां दण्डभयस्य चिन्तनं करोति। इदं चिन्तनं प्रारंभिकचिन्तनमपि कथ्यते।

**2. कल्पनात्मकचिन्तनम् (Imaginative Thinking) —**

अस्मिन् चिन्तने परिस्थिति प्रत्यक्षरुपेण उपस्थिता न भवति परिस्थित्या अभावः भवति। स्मृत्याधारेण पूर्वानुभवानां प्रयोगो भवति मानसिक प्रतिमायामाध्यमेन च चिन्तनं चलति। प्रत्यक्षपदार्थानामभावे प्रयत्नानां माध्यमेन पदार्थानां परिकलप्ना क्रियते। उदाहरणम्- प्रत्येकं दिवसे

पिता बालकस्य कृते भोजनार्थं विभिन्नवस्तूनि आनयति अतः सायं काले प्रतिदिनं जनकाले प्रतीक्षायां नूतनस्य खाद्यपदार्थस्य चिन्तनं करोति। इदं चिन्तनं कल्पनात्मकं चिन्तनम्।

**3. प्रत्ययात्मकं चिन्तनम् (Conceptual Thinking ) –**

इदं चिन्तनं सर्वोत्तम चिन्तनम्। अस्मिन् चिन्तने पूर्वनिर्मितस्य प्रयोगो भवति। सर्वप्रथमं विचाराः केन्द्रीयप्रत्यक्षेण बह्वाः भवन्ति। शनैः शनैः प्रत्यक्षीकृततथ्येभ्यः विचाराः दूरे गच्छन्ति प्रत्ययेषु च गच्छन्ति। तदा पूर्वानुभवानामाधारेण वाचादीनां सूक्ष्मविश्लेषणं कृत्वा भविष्यस्य विषये दृष्टिं विक्षेपणं निश्चये गम्यते। प्रत्ययात्मकचिन्तने भाषायाः ज्ञानमावश्यकम्।

**4. तार्किकचिन्तनम् (Logical Thinking) –**

इदमपि सर्वोत्कृष्टचिन्तनस्य श्रेण्यामायाति। जॉन डी वी महोदय अस्य चिन्तनस्य नाम विचारात्मकं चिन्तनमिति प्रतिपादयति। अस्मिन् चिन्तने तर्कस्य महत्त्वपूर्णं स्थानम् वैज्ञानिकपद्धतीनामपि महत्त्वपूर्मं स्थानं वर्तते। कोऽपि विचार तर्कस्य निकषया स्वीक्रियते। उदाहरणमस्ति- पूर्णिमाया रात्रौ अन्धकारः अस्ति तदा अन्धकारस्य कारणं मेघाः सन्ति अथवा जलवृष्टि अस्ति। किं मेघानां कारणेन चन्द्रिका नैव दृश्यते अथवा वृष्टेः कारणेन आकाशः चन्द्रिकाशून्य प्रतीयते।

**चिन्तनं शिक्षा च (Thinking and Education) –**

शिक्षाया क्षेत्रे चिन्तनस्यात्यधिकं महत्त्वं वर्तते। इयं व्यक्तेः महत्त्वपूर्णा मानसिकक्रिया। बौद्धिकविकासे चिन्तनस्य सर्वोच्चं च स्थानम्। शिक्षाप्रक्रियाया संचालनार्थ चिन्तनशक्त्या विकासः आवश्यकतानां बालकस्य चिन्तनशक्त्या विकासार्थमधोलिखिताः उपायाः करणीया –

**1. प्रत्यक्षीकरणे अनुभवेषु बलम् –** वयं जानीमः यत् चिन्तनप्रक्रियायां प्रत्यक्षीकरणस्य अनुभवानां च महत्त्वपूर्णं स्थानं भवति। अतः शिक्षकाणां कर्तव्यस्ति यत् शिक्षणकाले केवलं सैद्धान्तिकं न स्यात् तस्मिन् प्रत्यक्षीकरणस्य समावेशः स्यात् अनेन सहैव शिक्षणं व्यावहारिकमपि स्यात्। अतः अनुभवानां महत्त्वं स्वीकृत्य अनुभवानां वितरणं स्यात्।

**2. सम्प्रत्ययनिर्माणे सहायता –** शिक्षणं वैज्ञानिकं स्यात्। पुस्तकीयसैद्धान्तिक शिक्षणस्यापेक्षया नूतनं प्रणालीनां सहायताया माध्यमेन प्रत्यक्षाप्रत्यक्षानुभवानां चाधारेण सम्प्रत्यायानां निर्माणं भवेत्। प्रत्येकं विषयस्य सुस्पष्टं ज्ञानार्थं प्रयत्नाः स्युः। येन समुचितानां सम्प्रत्ययानां निर्माणं भवेत्। संप्रत्ययनिर्माणेन समुचितचिन्तनशक्त्याविकासः भवति।

**3. भाषाविकासस्योपरि अवधानम् –** भाषाचिन्तनस्याधारः। चिन्तनस्य प्रकटीकरणं, स्पष्टीकरणं भाषया एव व्यक्तं भवति। भाषायाः सम्बन्धः विचारेषु अपि अस्ति। पूर्वानुभवानामुपयोगार्थमपि उपयुक्तस्या शब्दावल्याः भाषाया आवश्यकता भवति। अतः बालकानां शब्दभण्डारस्य अभिवृद्ध्यर्थं भाषाविकासस्य समरसताया कृते, रोचकताया कृते उपयुक्तशिक्षणप्रणालीनाम् आवश्यकता भवति। अस्य कृते चिन्तनस्यावश्यकता उपरि अवधानं देयं स्यात्।

**4. रटनस्य प्रवृत्या निषेधः –** शिक्षकाणां कर्तव्यमस्ति यत् बालकाः रटनस्य स्थाने अधिगमस्य अवबोधस्य, चिन्तनस्य प्रयोगे कुशलाः स्युः। रटनस्य माध्यमेन प्राप्तज्ञानमस्पष्टं यन्त्रवच्च भवति, अस्मिन् चिन्नस्याभावो भवति विचारस्याभावो भवति। उदाहरणपूर्वकं सामान्यनियमानां निष्कासेन छात्राः समर्थाः स्युः। ते परिभाषायां रचनायामपि समर्थाः स्युः सामान्यीकरणेऽपि समर्थाः स्युः। अतः चिन्तनप्रवृत्या विकासाय रटनस्य शिक्षणे नितान्ताभावो भवेत्।

**5. जिज्ञासायाः जागृतिः –** शिक्षकः बालकानां समक्षे तादृशीणां परिस्थीनां निर्माणं कुर्यात् यस्याधारेण ते पाठ्यसामग्र्यविषये जिज्ञासां कुर्युः येन जिज्ञासाया उत्पत्ति स्यात्। ते चिन्तनं कर्तुं समर्थाः स्युः।

**6. अवधानस्य रुचेः विकासः (रुचि अवधानयोः विकासः) –** चिन्तनस्य कृते अवधानस्य पर्याप्तं महत्त्वमस्ति तथैव अभिरुचे अपि महत्त्वमस्ति। यस्मिन् विषये रुचि अस्ति तस्मिन् एव चिन्तनं चलति यस्मिन् विषये बालक अवधानं ददाति तस्मिन्नैव चिन्तनं चलति, चिन्तनस्य च परिभाषाया आगच्छन्ति। अतः अवधान केन्द्रीकरणोपायाः करणीया। अभिरुचि जागरणोपाया करणीयाः।

**7. अभिप्रेरणम् –** चिन्तनस्य कृते अभिप्रेरणायाः आवश्यकता भवति। कस्याचित् अभिप्रेरणायाः प्रेरितः जनः समस्यायाः समाधानार्थं प्रयतति यस्मिन् विषये अभिप्रेरणा न भवति तस्मिन् अवधानये न ददाति। अतः अभिप्रेरणाया जागरणमावश्यकम्। अस्य कृते शिक्षकः बहुप्रयत्नं कुर्यात् येन बालकाः समुचितचिन्तने समर्थाः स्युः।

**8. तर्कस्य वादविवादस्य कृते अवसरः –** कक्षायां शिक्षकः पाठ्यवस्तु सम्बन्धितविषयेषु पाठ्यान्तरविषयेषु च वादविवादतर्कवितर्कादीनामायोजनं कुर्यात् येन बालकाः स्वतन्त्रचिन्तनाय प्रेरिताः भविष्यचिन्तनाय प्रेरिताः भविष्यन्ति। बालका सामुहिकपरिचर्चा, वादविवादं तर्कवितर्कादीनामाधारेण स्वविचारान् प्रकटयितुं चिन्तनं कुर्वन्ति तदा प्राप्तज्ञानं स्थिरं स्थायी प्रकृत्या भवति।

**9. उत्तरदायित्वविभाजनम्-** बालकानां कृते उत्तरदायित्वं देयं स्यात्। शिक्षकाणां कर्तव्यमस्ति यत् ते बालकानामुपरि विश्वासं कुर्युः। तेभ्य उत्तरदायित्वपूर्णानि कार्यस्य समर्पणमिति परिणामतः ते चिन्तने अभिवृद्धिः भविष्यतीति।

**10. विचाराः अभिवक्ति च –** बालकानां कृते विचाराणां प्रकटीकरणस्य स्वातन्त्र्यं स्यात्। तेषां विचाराणां यदि स्वागतयोग्याः सन्ति तदा समादरः स्यात्। अश्लाघनीयाविचाराणां दृढ़तया निषेधः स्यात्। तेषां स्वतन्त्रक्रियासु न कस्यचिद् निषेधः स्यात्। आत्माभिव्यक्तेः अवसराः देयाः स्यात्। फ्राबेल-मान्टेशरी सदृशाः शिक्षाशास्त्रिणः आत्माविभक्त्यर्थं प्रोत्साहनस्य स्वीकृतिं ददाति तथैव अन्यक्रियायां हस्तक्षेपस्य निषेधं कुर्वन्ति।

**11. शिक्षणविधयः –** शिक्षकः चिन्तनशक्त्या विकासार्थं मनोवैज्ञानिकविधीनां प्रयोगं कुर्यात्। येषु च चिन्तनात्मकक्रियायां समावेशः स्यात्। उपयुक्तशिक्षणविधीनां प्रयोगेण चिन्तनशक्त्या विकासः भवतीति।

**सन्दर्भग्रन्थाः –**

1. सारस्वत, मालती (1993) 'शिक्षामनोविज्ञान की रुपरेखा', आलोक प्रकाशन, इलाहाबाद।
2. शर्मा, आत्माराम (1986) 'शैक्षिक एवं मनोवैज्ञानिक मापन' शिवलाल अग्रवाल एण्ड कं. प्रा. लि. आगरा।
3. Ansari A, (1966) Psychological Macmillan Book co., New York.

***

# छात्राणां सर्वाङ्गीणविकासाय नियमान्तर्गतशौचस्य योगदानम्।

Nandadulal Mandal
M.A, M.Ed, M.Phil, Net & Set in Education,
Net in Sanskrit, P.G Diploma in YOGA.
Assistant Professor , Department of Education
Central Sanskrit University, Ekalavya Campus

व्यक्तेः विकासं तु आजीवनं प्रचलमाना काचित् प्रक्रियाः वर्तन्ते। तत्र तावत् विघ्नतायां सत्यां व्यक्तिषु सर्वाङ्गीणविकासं न भवति। भारतं तावत् प्राचीनकालात् आरभ्य बहुविधानुसन्धानं कुर्वन्तः सन्ति। तत्र तेषाम् अनुसन्धानस्य फलस्वरुपेण भारतभूखण्डे योगशास्त्रस्य आयुर्वेदस्य नीतिशास्त्रस्य च विकासस्य चरमसीमां प्राप्तवन्तः आसन्। सा परम्परा अधुनापि समाजे कुत्रचित् दृश्यमानः वर्तन्ते। किञ्च केचन तस्य वैज्ञानिकव्याक्ष्याणं कर्तुं न पारयन्ति। भवतु नाम रक्षितपारम्परिकशौचादिविषयः समाजे वैज्ञानिकदृष्ट्वा प्रचारं प्रसारं भाव्यम्। वस्तुतोहि केचन भौतिकवादिनः अस्माकं परम्परां कुसंस्काराच्छन्नं इति मत्वा निन्दां कुर्वन्ति। किन्तु अधुना वैज्ञानिकाः अपि कथ्यन्ते योगस्य द्वितीयाङगं नियमः द्वारा एव व्यक्तेः परिपूर्णव्यक्तित्वं विकासयितुं शक्यते। अतः आवहमानकालात् प्रचलितसनातत्वं वेदेषु पुराणेषु दर्शनेषु धर्मशास्त्रेषु भूयाशाः दरीदृश्यन्ते।

महर्षिपातञ्जलप्रणितयोगसूत्रे अष्टयोगाङ्गेषु द्वितीयमस्ति नियमः। तानि नियमानि पञ्चविधानि वर्तन्ते। यथा- "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः।" (पातञ्जलयोगदर्शनम्-2/32)

अत्र प्रथमं तावत् शौचः। शौचाचरणेन ब्रह्मचर्यादौ सहायतां भवति। पूर्तियुक्तजान्तवपदार्थान् आघ्राणात् अस्फूर्तिजनकगुरुभावं भवति। तस्मात् लोके उत्तेजनामिच्छन्ति तद्वशेच उत्तेजकमद्यादि पीत्वा इन्द्रियम् उत्तेजयति। तस्मात् अशूचेः चित्तः मलिनः शरीरश्च योगापयोगी कर्मण्यता शून्यं भवति। अतः शरीरम् वाशश्च निर्मलं भवितव्यम्। मेध्यः अर्थात् पवित्राहारश्च योगीणां विधेयः। अमेध्याहारे शरीराभ्यन्तरे अशूचीपदार्थः प्रवेश्य उपरि उक्तः मलिनभावः आनयति। गलितः दुर्गन्धः मादकः असाविकरुपेण अङ्गस्योत्तेजकः भवन्ति। एतादृशरुपं द्रव्यसकलम् अमेध्यम्। तस्य संसर्गः

आहारश्च अविधेयः। मादकसेवनेन कदापि चित्तं स्थिरं न भवति। योगेन चित्तं स्ववशे आनितव्यम्। मादके सा चित्तं स्ववशे न तिष्ठति। तस्मात् मादकः योगस्य विपक्षः इति। चरकोऽपि सत्यं कथयति-

**"प्रेत्य चेह च यच्छ्रेयस्तथा मोक्षे च यत् परम्।**

**मनोसमाधौ तत् सर्वमायत्तं सर्वदेहिणाम्।।**

**मद्येन मनसश्चायं संक्षोभः क्रियते महान्।**

**श्रेयोभिर्विप्रयुज्यन्ते मदान्धा मद्यलालसाः।।"** (चरकसंहिताः-24/अः)

अर्थात् परलोके अस्मिन् लोके च यत् प्रेयः परमश्रेयश्च तत् सर्वं देहिनपक्षे चित्तस्य समाधिद्वारा लभ्यते। किन्तु मद्येन चित्तस्य अत्यन्तं संक्षोभः भवति। मद्येन येषाम् अन्धःलालसा जायते तेषां श्रेयः भवितुं न शक्यते। मदः मानः असूयादि चित्तमलस्य क्षालनं भवति आभ्यन्तरिकशौचम्। तस्मात् कारणात् योगसूत्रे व्यासभाष्ये भणितम्।

**"तत्र शौचं निर्जलादिजनितं मेध्याभ्यवहरणादि च बाह्यम्।**

**आभ्यन्तरं चित्तमलानामाक्षालनम्।।"** (योगसूत्रव्यासभाष्यम्)

अर्थात् शौचं द्विविधं बाह्यम् आभ्यन्तरश्च। तेषु मृत्तिका जलादि द्वारा शरीरप्रक्षालनम् स्वल्पहारेण च यत् शौचं तत् बाह्यम्। चित्ते कामनावासनादिरुपः यत् मलमस्ति तत् क्षालनम् आभ्यन्तरशौचमिति। स्वशरीरं शोधनं कुर्वन् तत्र जुगुप्सा परशरीरेण सह संसर्गं न रोचते। पशवः खादनाभनेन लेहनेन स्नेहस्य प्रेम्णः च प्रकाशयति। शौचेन तादृशः पाशवप्रेमः दूरी भवति। मैत्रीकरुणादि योगीणां प्रेमः तु इन्द्रियस्पृहाशून्यं भवति। स्त्रीपुत्रादि आसङ्गलीप्सा शौचप्रतिष्ठाद्वारा सम्यक् अपगच्छति। तस्मात् कारणात् महर्षिपतञ्जलिना उक्तम् – "शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः।" (योगसूत्रम्-2/40)

मद-मानासङ्गलीप्सादि दोषः चित्तात् विदुरितभूते सति चित्ते शौचं भूत्वा स्वपरशरीरश्च जुगुप्सावसात् शरीरात् विविक्तता बोधः जायते। शरीरभावेन अकुलसितः तदवस्थानम् आभ्यन्तरशौचमिति। आभ्यन्तरशौचात् चित्ते शुद्धिः मदमानादि च प्रदुषितस्य विक्षेपमलस्य स्वल्पता जायते। ततः चित्तस्य स्वोमन्यस्य आनन्दभावं वा जनयति। स्वोमन्यस्य व्यतितम् एकाग्रता कदापि न सम्भवेत्। एकाग्रता व्यतिरेकेण इन्द्रियातीतात्मदर्शनमपि न सम्भवेत्। तस्मात् कारणात् पतञ्जलिना कथितम् –

**"सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च।"** (योगसूत्रम्-2/41)

वेदान्तसाराणुसारेण नित्यनैमित्तिकप्रायश्चित्तानुष्ठानेन चित्तसुद्धिः भवति। यः ईश्वरस्योद्देश्ये कर्मफलम् अर्पणं कृत्वा निष्कामभावेन नित्यादि कर्माणुष्ठानं करोति तस्य बुद्धिः शुद्धं भवति स्मृतौ

उक्तम् यत् ईश्वरं कर्मफलं समर्प्य कर्म क्रियते चेत् तर्हिः कर्मकर्तुः चित्तः एतादृशं निर्मलं भवति यत् सः ब्रह्मलोकेऽपि वैराग्यवान् भवति।

**"सद्यमानं तु तच्चित्तं ईश्वरार्पितकर्मोभिः।**
**बैराग्यं ब्रह्मलोकादौ व्यनक्ति- आसु सुनिर्मलम्।।"**

ज्ञानोद्देश्येन यदा कर्मविहितः भवति तदा कर्म पापक्षयरूपेण चित्तशुद्धिः द्वारा ज्ञानस्य जनकं भवति। यतः यावत् पर्यन्तं कुलशितं तावत् पर्यन्तं ज्ञानं न जायते। अतः कुलशितं शरीरिरं चित्तं च शुद्धिं कृत्वा विकासं कर्तव्यम्। यदा केनापि स्वकर्तव्यवोधे नित्यकर्मस्यानुष्ठानं करोति तदा नित्यकर्मनिमित्तं चित्तशुद्धेः प्रयोजनम्। यतः स्मृतिः वदति "तपसा कल्मषं हन्ति"। अशोचचित्ते व्यक्तिः ईश्वराणुग्रहलाभमसम्भवम्। नित्यकर्माणुष्ठाणात् धर्मोत्तपत्तिः जायते। धर्मोद्पादनात् पापक्षयं भवति। पापक्षयात् चित्तशुद्धिं भवति। चित्तशुद्ध्यात् संसारस्य अनित्यासुची दुःखमयरूपश्च ज्ञायते। तदा सर्ववस्तुनि वैराग्यात् मुमुक्षा लभ्यते। अनन्तरं सः मोक्षोपायम् अन्येषणं करोति। अपि च तत्वज्ञानोपायं ज्ञात्वा सर्वकर्म त्यक्ता योगाभ्यासं करोति, योगाभ्यासात् विकासस्य मार्गः सन्तुलितं सुसामञ्जस्यं च भवतः। चित्तप्रत्यप्रवणात् 'तत्वमसि' इत्यादिवाक्येन अर्थबोधं भवति, अर्थात् चतुर्वर्गस्य अन्तिमसोपानं मोक्षं प्रप्नोति। तद्वत् शौचद्वारा ज्ञानात्मकं भावात्मकं कौशलात्मकं च विकासं भवेत्। अत्र तु सहकारीत्वेन सन्तोषं स्वाध्यायः ईश्वरप्रणीधानं तपः इत्यादीनां सहकरीत्वेन साहाय्यम् अपेक्षन्ते। अर्थवोधात् अविद्यायाः उच्छेदं भवति, अविद्या उच्छेदात् जीवस्य स्वरुपस्थितिः उत्पद्यते। एवं स्वरुपस्थितिः मोक्षः इति। शिक्षाशास्त्रे परिपूर्णज्ञानमेव विकासस्य मूख्यमुद्देश्यम्। तत्र ज्ञानात्मकविकासाय कलुशिताभ्यन्तरबाह्यश्च वातातवरं शौचद्वारा निवारणं करणीयं वर्तते। यतोहि अज्ञानं शौचमाध्यमेन सच्चिदानन्दरूपज्ञानस्य उन्मेषं भवति। उच्यते यत् यथा आहारः तथा व्यवहारः तद्वत् यथा शौचः तथा विकासः। अतः शिक्षार्थीनां सर्वाङ्गीनविकासाय आष्टाङ्गयोगस्य द्वितीयाङ्गनियमस्य अन्तर्भावः शौचः महत् उपकरोतीति।

**उपयुक्तसहायकग्रन्थसूची-**


1. आरण्य.हरिहरानन्द, "पातञ्जलयोगदर्शनम्", कोलकाता, पश्चिमबङ्गराज्यपुस्तकपर्षद्,सन् -2015.
2. आचार्यः.श्रीकृष्णबल्लभः, "योगदर्शनम्", वाराणसी, चौखाम्बा विद्याभवन् , सन्-2001.
3. पाल.विपद्भञ्जनः, "वेदान्तसारः," कोलकाता, संस्कृतपुस्तकभण्डारः, सन्-2016.
4. साधुखाँ. सञ्जितकुमार, "सर्वदर्शनसंग्रहे वौद्धदर्शन ओ जैनदर्शन," कोलकाता, सदेश,सन्-2016.
5. विद्यालंकार.सुभाषः, "हठयोगत्रयी", दिल्ली, प्रतिभा प्रकाशन्, सन्-2011.
6. श्रावस्ती.ब्रह्ममित्र, "पातञ्जलयोगदर्शन एक अध्ययन," दिल्ली, इन्दुप्रकाशम्।
7. पाल.ड. देवाशिस , धर. देवाशिस, दाश. मधुमिता, शिक्षार्थी, "शिखन ओ निर्देशदानेर मनस्तत्व", रीता. पावलिकेशन, सन्- 2014 -15.

 ISSN-2321-6948

# परीक्षायाः प्रबन्धनम्

**डॉ. कालिकाप्रसादशुक्लः**
सहायकाचार्यः, शिक्षाशास्त्रविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, भोपालपरिसरः

प्रत्येकस्यापि छात्रस्य जीवने परीक्षायाः कालः निश्चयेन आगच्छति। केचन छात्राः प्रतियोगी परीक्षायाः सज्जतां कुर्वन्ति केचन् स्वीय पाठ्यक्रमस्य सज्जतां कुर्वन्ति। प्रत्येकस्यापि परीक्षायाः काले कदा समयः व्यतीतः भवति एतस्य ज्ञानमेव न भवति।

**परीक्षाप्रबन्धनम् –**

'सा विद्या या विमुक्तये' शिक्षा नाम आत्म साक्षात्कारः इति परिभाषया परिभाषितो भूत्वा शिक्षा व्यक्तेः समाजस्य च निर्मातृ अस्ति। अखिल ब्रह्माण्डे वैदिकालात् अद्यावधि यावत् समेषां मानवानां आध्यात्मिक-चारित्रिक-बौद्धिक-सामाजिक विकासं समुन्नेतुं प्रकाशमाणञ्च कर्तुं प्रभवति शिक्षा।

यः शिक्षा ग्रहणं करोति सः शिक्षार्थी। शिक्षाग्रहणे शिक्षार्थी कियत् पर्यन्तं सफलं जातं कियत् अधिगमः जातः अग्रिम कक्षायाः कृते शिक्षार्थी योग्यः अस्ति न वा इति ज्ञानार्थं मूल्याङ्कनस्य आयोजनं भवति। तस्यैव अपर नाम परीक्षा इति।

प्रत्येकस्यापि छात्रस्य जीवने परीक्षायाः कालः निश्चयेन आगच्छति। केचन् छात्राः प्रतियोगी परीक्षायां सज्जतां कुर्वन्ति, केचन् स्वीयपाठ्यक्रमस्य सज्जतां कुर्वन्ति। प्रत्येकस्यापि परीक्षायाः सज्जता कृते प्रबन्धनं आवश्यकं भवति। यतोहि परीक्षायाः काले कदा समयः व्यतीतः एतस्य ज्ञानमेव न भवति।

परीक्षायाः आयोजनं त्रैमासिकं षाण्मासिकं, वार्षिकं च भवति। परीक्षायाः आयोजनात् प्राक् परीक्षायाः सम्पूर्णप्रबन्धनम् आवश्यकं भवति। एतदर्थं परीक्षा प्रबन्धनं व्यवस्थां करोति।

यः परीक्षां आयोजयति (परीक्षाप्रशासनम्)

यः परीक्षां ददाति (विद्यार्थी)

एतयोः कृते परीक्षायां ध्यातव्यंशाः –

**प्रशासन दृष्ट्या –**

समितिनिर्माणम्, छात्राणां नामाङ्कनं, प्रश्नपत्राणां निर्माणम्, परीक्षा केन्द्राणां चयनम्, परीक्षायामुपवेशनव्यवस्था, निरीक्षकाणां चयनम्, आकस्मिक व्यवस्थायाः निर्धारणम्, प्रवेशपत्रस्य प्रबन्धनम्, उत्तरपुस्तिकानां प्रबन्धनम्, यथोचित्काले उत्तरपुस्तिकानां ग्रहणम्, परीक्षाकेन्द्रे जलपानं, बालकानां बालिकानां च कृते पृथक् शौचालय व्यवस्था, उत्तरपुस्तिकानां परीक्षणं निष्पक्षतया भवेत् तदर्थं व्यवस्था, प्रमाणपत्रस्य निर्माणं वितरणं परीक्षा प्रबन्धकस्य प्रशासनस्य च कार्यमस्ति।

**छात्र दृष्ट्या –**

योजनायाः निर्माणम्, परीक्षणोपकरणानां सञ्चयनं, समय सारिण्याः निर्माणम्, विषयवस्तुनः संग्रहणम्, परीक्षावसरे दिवसानां अध्ययनाय प्रबन्धनम्, परीक्षारम्भतः अन्तपर्यन्तम् एका विशिष्टयोजनायाः निर्माणम्, समयस्य प्रबन्धनम्।

परीक्षा प्राक् उपर्युक्त बिन्दूनां परीक्षाप्रबन्धने ध्यानं दातव्यम् –

लूथरगुलिकमहोदयेन प्रतिपादित प्रशासनस्य नियमः तेनानुसारेण POSDCORAB रूपेण परीक्षायाः प्रबन्धनं कर्तुं शक्यते –

P – Planning(योजना)- परीक्षायाः सम्पूर्णयोजनायाः निर्माणं छात्राणां शिक्षकाणाञ्च कृते।

O – Organization (संघटनम्) – परीक्षाप्रशासनं संगठनस्य- समितेः निर्माणं करिष्यति, येन परीक्षाव्यवस्था सम्यक् रीत्या भवेत्। तथा च छात्राः अपि संघटनस्य समूहस्य निर्माणं कुर्युः। येन समूहाध्ययनमाध्येन विषयवस्तुनः अवबोधः सम्यक् भविष्यति।

S – Staffing (कर्मचारीणां प्रबन्धनम्) – परीक्षा प्रशासकः आवश्यकतानुसारं कर्मचारीणां प्रबन्धनं कुर्यात्। तथा च छात्राः अपि समयस्य सदुपयोगार्थं भृत्यस्य व्यवस्थां कुर्युः।

D – Directing (निर्देशनं) – परीक्षाप्रशासनार्थं कश्चन् निर्देशकः स्यात्। येन परीक्षाप्रबन्धने याः न्यूनताः भवेयुः तासां दूरीकरणं स्यात्। तथा च छात्राणां कृतेऽपि एकः निर्देशकः स्यात् यः परीक्षोपयोगी निर्देशनदाने समर्थः भवेत्। यथा- शिक्षकः, अभिभावकः, अग्रजः, ज्येष्ठछात्रः, श्रेष्ठव्यक्तिः।

CO – Coordination (समन्वयकरणं) – परीक्षा प्रबन्धकेषु, प्रशासकेषु, कर्मचारिषु समन्वनं स्यात् तथा च केवलं एतयोः एव न अपितु छात्रेष्वपि समन्वयनं भवेत्।

R – Reporting (प्रतिवेदनलेखनम्) – इदं कार्यं प्रशासनस्य कृते अत्यन्त महत्त्वपूर्णं

वर्तते। परीक्षाप्रशासनं परीक्षानन्तरं केन्द्रियकार्यालये प्रतिवेदनं प्रेषयेत्।

B – Budgeting (अर्थप्रबन्धनम्) – धनस्य प्रबन्धनं कस्यापि कार्यस्य कृते अत्यन्तं महत्त्वपूर्णं भवति, तथैव परीक्षा प्रबन्धनस्य कृतेऽपि। प्रशासनं धनव्ययार्थं एका योजनां निर्मीयात्।

परीक्षायाः प्रबन्धने यदि इमाः सर्वाः व्यवस्थाः सुव्यवस्थितरुपेण भवन्ति चेत् परीक्षायाः प्रबन्धनं उत्तमतया भविष्यति।

अस्मिन् छात्राणां पक्षतः यदि पश्यामश्चेद् इतोऽपि बहवः अंशाः वर्तन्ते ये अवधेयाः भवन्ति।

केचन छात्राः तादृशाः अपि भवन्ति ये आरम्भे परीक्षायाः सज्जतां न कुर्वन्ति तथा परीक्षायाः प्राक् तेषामुपरि अत्यन्तं भारं वर्धते येन कारणेन ते चिन्ताग्रस्ताः भवन्ति। अतः एतादृशी स्थिति नागच्छेत् तदर्थं समयस्य प्रबन्धनं अत्यन्तं महत्वपूर्णं भवति। प्रत्येकस्यापि छात्रस्य कृते 24 विंशति एव होराः मिलन्ति परं ये छात्राः अस्य समयस्य सदुपयोगं कुर्वन्ति ते परीक्षायां उत्तमतया उत्तीर्णाः भवन्ति। अस्मिन् परिस्थितौ परीक्षाकाले समयस्य प्रबन्धनं कथं भवेत् एतस्य ज्ञानमावश्यकम्- अत्र सर्वादौ भवति-

**समयसारिण्याः निर्माणम् –** परीक्षायाः प्राक् समयसारिणी अवश्यमेव निर्मातव्या, अस्यां सारिण्यां केवलं पठनं एव न अपितु अन्यकार्याणि भवन्ति, दैनिक दिनचर्यादि तेषां प्रत्येकं कार्यस्य समयः सुनिश्चितः स्यात्। तद्वदेव प्रतिदिनं अध्ययनं स्यात्।

**प्राथमिकतायाः आधारेण कार्यस्य विभाजनम् –** प्रत्येकस्यापि छात्रस्य कृते चतुविंशति होरासु बहूनि कार्याणि भवन्ति अतः प्रतिदिनस्य कार्याणां प्राथमिकतायाः आधारेण विभाजनं कृत्वा सोपानवद्धं कृत्वा यथावश्यकं कार्यं करणीयम्।

**प्रारंभात् अध्ययनम् –** यदा परीक्षायाः दिनाङ्कः निर्धारितः भवति तस्मात् कालात् न अपितु समयात् प्रागेव पाठ्यक्रमस्य पूर्ति करणीया, अनेन प्रकारेण क्रियते चेत् भारस्यानुभूतिः न भवति, अतः प्रतिदिनं अध्ययनमपेक्षितं वर्तते।

**मुख्यांशानां लेखनं (Notes Righting) –** यदि परीक्षायाः सज्जता क्रियते चेत् प्रतिदिनं मुख्य बिन्दूनां लेखनं अत्यन्तमावश्यकं भवति। यदि अनेन प्रकारेण क्रियते चेत् अधिककालं यावत् विषयवस्तु स्थिरो भवति।

**पाठ्यक्रमस्य समयाधारेण विभाजनम् –** स्वीयं पाठ्यक्रमं समयानुसारं विभाजनं करणीयम्। ये विषयाः कठिनाः भवेयुः तेषां कृते अधिकः कालः देयः। इदमपि ध्यातव्यं यत् ये अंशाः पूर्वतः कण्ठस्थाः वर्तन्ते तेषां कृते अधिकः कालः न देयः।

**सामान्यविषयाणां पूर्वतः सज्जता –** ये विषयाः सामान्याः भवन्ति तेषां विषयाणां परीक्षादृष्ट्या पूर्वतः सज्जा अपेक्षिता भवति। येन कठिन विषयाणां कृते कालः अवशिष्टः स्यात्।

**परीक्षायाः काले सोशलमीडियातः दूरी –** यस्मिन् काले परीक्षा दातव्या तस्मिन् काले सामाजिक ये माध्यमाः वर्तन्ते यथा- फेसबुक्, व्हाट्सप, ट्वीटर इत्यादिभिः दूरी अपेक्षिता वर्तते, यतोहि एतेषु समय नष्टः भवति तथा च ध्यानभंगोऽपि भवति।

परीक्षायाः प्रबन्धन दृष्ट्या अत्यन्तं महत्त्वपूर्णं भवति आत्मविश्वासः, सदैव आत्मविश्वासः भवति तदेव लक्ष्यसिद्धिर्भवति – अत एवोक्तम् –

लक्ष्यमेकं सुनिश्चित्य तत्रैकाग्रं मनः कुरु।
प्रयत्नेन कृतोऽभ्यासः शीघ्र सिद्धिं प्रयच्छति।।

अतः अवधेयं यत् अद्यतनं कार्यं श्व करिष्यामि इति न यदि तथा क्रियते चेत् क्षिप्रं अक्रियमाणस्य कालः पिवति तद् सम्।

तथा क्रियते चेत् दुश्प्रवृत्तेः निर्माणं भवति इयं प्रवृत्ति अत्यन्तं कष्टकरी भवति।

**सन्दर्भ –**

- विष्णुपुराणम्
- सुभाषितरत्नभाण्डागारः
- शैक्षिकयोजना एवं प्रबन्धन
- Google Wikipedia flexibility in examination

***

# समाजे लिङ्गसम्बन्धिसंवेदनशीलता पितृसत्ता च

**डॉ. अञ्जू चौधरी**
सहायकाचार्या, शिक्षाशास्त्रविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, जयपुरपरिसरः।

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः इति मनुस्मृत्युक्त्यानुसारं नार्यः सर्वत्र पूज्यन्ते, यतोहि यत्र नार्यः नैव पूज्यन्ते तत्र सर्वाः क्रियाः अफलाः भवन्ति। अतः समाजे नारीणां स्थानं महत्त्वपूर्णं वर्तते। सर्वे जनाः समाजे निवसन्ति। विद्यालयः अपि समाजस्य एकः लघु-एककः अस्ति। समाजे स्त्रीपुरुषौ सम्मिल्य कार्यं कुरुतः। परन्तु तत्र स्त्रीणाम् अपेक्षया पुरुषाणां प्राधान्यं अधिकं मन्यते।

अतः समाजे काचिद् एतादृशी व्यवस्था भवेत्, येन स्त्रीणां स्थितिः सम्यक् भवेत्। एवं च शैशवावस्थायामेव लिङ्गसम्बन्धिसमानभावना समुचितरुपेण विकसेत्। अयमाशयः वर्तते- समाजे स्त्रीपुरुषयोः समानं समुचितं च स्थानं भवेत्।

**लिङ्गसम्बन्धिसंवेदना-**

लिङ्गसम्बन्धिसंवेदना मानसिकचिन्तनस्य प्रक्रिया वर्तते यदा समाजे स्त्रीपुरुषौ कार्यक्षेत्रेषु अन्यक्षेत्रेषु च परस्परं सम्मुखौ भवतः तदा एका विशिष्टाभावना मनसि उदेति। बहवः शब्दाः सन्ति, यथा- कोमला, संवेदनशीला, सुन्दरा, सुहृदया, सौम्या, वाक्मधुरा, इत्यादयः शब्दाः स्त्रीविषये मनोदशां वर्णयन्ति। कठोरः, नेता, बहादुरः, सुदृढः इत्यादीन् शब्दान् श्रुत्वा जानीमः यत् एतानि लक्षणानि पुरुषाणां सन्ति, इति सर्वेषां मानसिकता वर्तते। एतस्याः मानसिकतायाः निवारणार्थं समाजे बाल्याकालादेव पितृभ्यां बालिकाभिः सह पक्षपातं न प्रदर्शनीयः। अतः बालकेभ्यः बालिकाभ्यश्च समानरूपेण कार्यक्षेत्राणि अपि भवेयुः। बालिकाः पाककलायां, चित्रकलायां, स्वच्छतायाञ्च निपुणाः भवेयुः. बालकाः धनोपार्जने निपुणाः भवेयुः, इति अस्माकं मानसिकता वर्तते। तर्हि एतस्याः मानसिकतायाः निवारणं भवेत्। एवं च समाजस्य, परिवारस्य च सर्वाणि कार्याणि सर्वेभ्यः भवेयुः इति।

समाजे जनाः वदन्ति बालिकानां, स्त्रीणाञ्च सुरक्षा करणीया। याज्ञवल्क्यस्मृतौ एकः श्लोकः वर्तते, तत्र स्त्रीणां रक्षेत् इति-

**रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्त वार्धके।**
**अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वाचित्स्त्रियः।।** (याज्ञवल्क्यस्मृतिः85)

अस्मिन् श्लोके वर्णितमस्ति- स्त्रीणां कौमार्यावस्थायां पिता रक्षति, विवाहानन्तरं पतिः, वृद्धावस्थायां पतिः पुत्रो वा रक्षति। पतिः पुत्रश्च न भवतः तर्हि तस्याः स्वकीयजनाः रक्षन्ति पालयन्ति च। अत्र एकः प्रश्नः जायते, यत् स्त्रीणां रक्षायाः आवश्यकता किमर्थम्? यदि समाजे सर्वे स्वकीयजनाः निवसन्ति तर्हि केभ्यः रक्षन्ति?

यदा समाजे, परिवारे च जनानां स्त्रीविषयकचिन्तनं सम्यक् भवेत्, तदा रक्षायाः आवश्यकता न उत्पद्यते। अतः बाल्यकालादेव पितृभ्यां बालेषु सर्वे समानाः सन्ति इति भावना उत्पदनीया।

**पितृसत्ता-**

यत्र पितुः सत्ता वर्तते, तत्र पितृसत्तात्मकः समाजः। प्राचीनकालादेव अस्माकं समाजः पितृसत्तात्मकः वर्तते। वर्तमाने पुस्तकेषु, भित्तिषु अर्थात् सर्वत्र लिखितं वर्तते- बालकाः बालिकाश्च समाः भवन्ति, परन्तु कोऽपि एतं मूल्यं न धारयति। सर्वेषां परिवारे पितृसत्ता एव भवति। यदा माता परिवारसदस्यानाम् उदरपूर्तिं करोति एवं च पिता मद्यपानमपि करोति तदापि परिवारे पितृसत्ता एव भवति। अतः वर्तमाने अपि समाजे स्त्रीणां स्थानं महत्त्वपूर्णं नास्ति।

अस्माकं भारतीयसंविधाने बालकेभ्यः बालिकाभ्यः अधिकाराः समाः सन्ति, एतस्य कृते नियमाः अपि सन्ति। परन्तु अस्माकं समाजे पितुः सम्पत्तौ पुत्रस्य अधिकारः एव भवति न तु पुत्रीणाम्। पुत्रीभ्यः समाजे आर्थिकाधिकारः न दीयते। एतस्मिन् विषये याज्ञवल्क्यस्मृतौ एकं पद्यं वर्णितमस्ति-

**विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान्।**
**ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः।।**(याज्ञवल्क्यस्मृतिः114)

यदा सम्पत्तीनां विभागं पिता करोति तदा केवलं पुत्रेभ्यः एव करोति। ज्येष्ठपुत्रस्य कृते श्रेष्ठभागं, अन्यपुत्राणां कृते तस्य समांशान् दास्यति। अतः सम्पत्तीनां विभागे पुत्रीणां स्थानमेव न वर्तते।

कस्मिन्नपि परिवारे पितुः नास्ति, यदा पुत्रीणाम् अपेक्षया पुत्रः अधिकः कनिष्ठः वर्तते तदापि मातुः पुत्रीणां च रक्षा पुत्रः करिष्यति। एषा अस्माकं मानसिकधारणा वर्तते। पुत्रः शैशवावस्थायां स्वस्य रक्षां नैव कर्तुं शक्नोति, सः भगिन्याः रक्षकरूपेण भवति। अतः समाजे पितृसत्तात्मिका व्यवस्था वर्तते।

समाजे, परिवारे च पुत्रीपरधनरूपेण मन्यते। गृहस्वाम्यपि लिङ्गाधारेण भवति। यः पुल्लिङ्गः अस्ति सः गृहस्वामी वर्तते। सः एव परिवारं रक्षति। समाजस्य कार्येषु भागग्रहणं पुरुषः करोति, तत्रापि स्त्रीणां स्थानं न भवति। ग्रन्थेषु, वेदेषु च बहु-अधिकं वर्णितमस्ति स्त्रीणां विषये-

**मातृदेवो भवः।** (तैति. उप. 1.11.2)

परन्तु तस्य वास्तविकस्वरूपं किञ्चिद् भिन्नं वर्तते। वर्तमाने अपि स्थितिः यथावत् अस्ति। अतः समाजे सर्वे मानवाः समाः भवेयुः, इति धारणा भवेत्।

**उपसंहारः-**

पितृसत्तात्मकसमाजे लिङ्गविभेदः अत्यधिकः भवति। पितृसत्तायां परिवारस्य आर्थिक-सामाजिकशक्तिनाञ्च हस्तान्तरणं पूर्णतः लिङ्गाधारेण पुत्रेषु भवति। अतः परिवारे पुत्रीणां स्थानं एव न भवति। याज्ञवल्क्यस्मृतौ उल्लिखितमस्ति-

**अरोगिणीं भ्रातृमतीसमानार्षगोत्रणाम्।**

अस्मिन् पङ्क्तौ वर्णितमस्ति- या बालिका तस्याः भ्राता भवेत् अर्थात् सा भ्रातृमती भवेत्, तया सह विवाहं कुर्युः। यस्याः भ्राता न भवेत् तया सह विवाहादिसंस्कारमपि न कुर्युः, अतः समाजे पुत्राणां स्थानं महत्त्वपूर्णं भवति।

अतः वर्तमानकाले लिङ्गाधारेण विभेदः न भवेत् इति शिक्षां समाजः शिक्षयेत्। बालिकाः बालकाश्च समानाः भवन्ति, इति मन्ये कोऽपि कार्यं क्रियेत्। समाजे लिङ्गविभेदस्य महत्त्वं न स्यात् परन्तु मानवता सर्वोपरि भवेत् इति।

**सन्दर्भग्रन्थसूची-**

याज्ञवल्क्यस्मृतिः – डॉ. गङ्गासागरगाय, चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली।
लिङ्ग,विद्यालय और समाज – डॉ. राजकुमार,डॉ. मीरा अग्रवाल, आर. लाल बुक डिपो, मेरठ।
लिङ्ग, विद्यालय एवं समाज -प्रतिमा त्रिपाठी, अग्रवाल पब्लिकेशन्स।
शिक्षा के समाजशास्त्रीय आधार- डॉ. सरयू प्रसाद चौबे, विनोद पुस्तक मन्दिर, आगरा।

***

# जैनदर्शने गुणव्रतानि (पुरुषार्थसिद्ध्युपायग्रन्थदिशा)

**श्रीप्रतापः**

सहायकाचार्यः, जैनदर्शनविभागः

जैनदर्शनस्य एकमेव लक्ष्यमस्ति यत् जीवानां जीवनं श्रेष्ठात् अतिश्रेष्ठं कथं भवितुमर्हति। जीवानां कल्याणं कथं भवितुमर्हति। कथं सर्वदुःखनिवृत्तिः शक्या। तदर्थमेव जैनसिद्धान्ताः प्ररुपिताः जैनाचार्यैः। परमसुखप्राप्त्यर्थं तु मार्गः एक एव आध्यात्मिकमार्गः रत्नत्रयात्मकमोक्षमार्गः। अद्वितीयः अयं मार्गः सर्वैरेव अनुसरतव्यः। मोक्षं प्राप्तुं यः मोक्षमार्गः विद्यते सः वर्तते, सामर्थ्यवतां जीवानाम्। न तथा सारल्यमत्र विद्यते। येषु जीवेषु मोक्षमार्गं गन्तुं साम्प्रतं तथा सामर्थ्यं न वर्तते। तेषां जीवानां कृते श्रावकाचारः सुप्रोक्तः, श्रावकाः ते भवन्तु। जैनदर्शने यानि व्रतानि प्रोक्तानि तानि द्विविधानि, यथा महाव्रतानि, अणुव्रतानि चेति। पञ्च व्रतानि वर्तन्ते- अंहिसा, सत्यम्, अस्तेयम्, ब्रह्मचर्यम्, अपरिग्रहश्चेति। एतानि व्रतानि यदा साधवः मुनयः वा परिपालयन्ति तदा एतानि महाव्रतानि इति भवन्ति यदा च गृहस्थाः श्रावकाः वा पालयन्ति तदा अणुव्रतानि भवन्ति।

साधवः पञ्चपापानां (हिंसा, असत्यम्, स्तेयम्, अब्रह्मचर्यम्, परिग्रहश्चेति) सकलरुपेण त्यागं कुर्वन्ति परन्तु श्रावकः पञ्चपापान् एकदेशरूपेण त्यजन्ति। यद्यपि अणुव्रतानां महाव्रतानि सदृशं महत्त्वं न विद्यते तथापि श्रावकानां कृते अतीवमहत्त्वम् एतेषाम् अणुव्रतानां वर्तते। एतेषां महत्त्वविषये पूज्यपादाचार्यैः प्रोक्तम्-

**वरं व्रतैः पदं देवं नाव्रतैर्वत नारकं।**

**छायातपस्थयोर्भेदः प्रतिपालयतोर्महान्।।**[1]

अर्थात् व्रतैः दैवपदप्राप्तिः वरं वर्तते, कस्मात् ? अव्रतैः नरकगतौ जन्मप्राप्तितः। यथा केनापि पुरुषेण स्वगन्तव्यस्थानं गन्तव्यमस्ति, प्रथमं तु सः आतपे स्थित्वा यानस्य प्रतिक्षां कुर्यात् अथवा द्वितीयं छायायां स्थित्वा यानस्य प्रतिक्षां कुर्यात्। तस्य कृते द्वितीयं वरमस्ति। तथैव व्रतानां फलं वर्तते देवपदं देवगतिर्वा एवञ्च अव्रतानां फलमस्ति नरकगतिः। तर्हि व्रतानाम् आचरणमेव श्रेष्ठम् इति कथनस्य तात्पर्यमस्त्यत्र।

[1] इष्टोपदेशः – श्लोकसंख्या - 03

पूर्वोक्तानां पञ्चाणुव्रतानां रक्षार्थं दृढीकर्तुं च जैनाचारशास्त्रेषु गुणव्रतानां सुव्यवस्था कृता जैनाचार्यैः। एतानि गुणव्रतानि अणुव्रतानां तथैव रक्षणं कुर्वन्ति यथा परिधयः नगराणि रक्षन्ति। यथोक्तम् अमृतचन्द्राचार्येण-

**परिधयः इव नगराणि व्रतानि किल पालयन्ति शीलानि।**
**व्रतपालनाय तस्माच्छीलान्यपि पालनीयानि।।**[1]

त्रीणि गुणव्रतानि सन्ति- दिग्व्रतम्, देशव्रतम्, अनर्थदण्डत्यागव्रतं चेति।

1. **दिग्व्रतम् –**

दिग्व्रतस्य लक्षणमस्ति –

**प्रविधाय सुप्रसिद्धैर्मर्यादां सर्वतोप्यभिज्ञानैः।**
**प्राच्यादिभ्यो दिग्भ्यः कर्तव्या विरतिरविचलिता।।**[2]

अर्थात् उत्तर-दक्षिण-पूर्व-पश्चिम-ईशान-आग्नेय-नैर्ऋत्य-वायव्य-अधः-ऊर्ध्वञ्च दशदिक्षु न गमिष्यामि इति प्रतिज्ञाधारणम् आजीवनाय उत वा सीमितकालं यावत्। इयं प्रतिज्ञा दिक्षु नदी-पर्वत-नगरादीनां प्रसिद्धस्थानानां सङ्केतपूर्वकं भवति। यथा- उत्तरे गङ्गानदी दक्षिणे नीलगिरिपर्वतः, पूर्वे छत्तीसगढः, पश्चिमे खम्भातम्, ईशाने पटनानगरम्, आग्नेये कटकम्, नैर्ऋत्ये कावेरी नदी एवञ्च वायव्ये आबूपर्वतः। अत्र पर्यन्तं यदि कस्यचित् पुरुषस्य प्रतिज्ञा स्यात्। तर्हि सः पुरुषः एतेभ्यः स्थानेभ्यः अग्रे नैतिकतया कृतव्रतकारणात् गन्तुं न शक्नोति। अधोदिशः प्रतिज्ञा कूपादीनां गह्वरतः क्रियते एवञ्च ऊर्ध्वदिशः प्रतिज्ञा मन्दिरपर्वतादीनाम् उच्चतातः क्रियते।

एवं प्रकारेण कृतस्य व्रतस्य फलम् अनुपमं भवति अहिंसारूपेण। उक्तम्-

**इति नियमितदिग्भागे प्रवर्तते यस्ततो बहिस्तस्य।**
**सकलासंयमविरहाद्भवत्यहिंसाव्रतं पूर्णम्।।**[3]

अर्थात् यः एवं प्रकारेण नियमितदिग्भागे प्रवर्तते, तस्य पुरुषस्य तस्मात् क्षेत्रात् बहिः उत वा मर्यादाकृतक्षेत्रात् बहिः सकलात् असंयमविरहात् पूर्णम् अहिंसाव्रतम् भवति।

---

[1] पुरुषार्थसिद्ध्युपायः – श्लोकसंख्या - 136
[2] पुरुषार्थसिद्ध्युपायः – श्लोकसंख्या - 137
[3] पुरुषार्थसिद्ध्युपायः – श्लोकसंख्या - 138

**2. देशव्रतम् –**

**तत्रापि च परिमाणं ग्रामापणभवनपाटकादीनाम्।**
**प्रविधाय नियतकालं करणीयं विरमणं देशात्।।[1]**

श्लोकेऽस्मिन् देशव्रतं स्पष्टयन् आचार्यः विलिखति यत्- तस्मिन् पूर्वोक्ते दिग्व्रते दिशां मर्यादा प्रोक्ता। तत्रापि ग्रामापणभवनपाटकादीनां नियतकालं यावत् अर्थात् दिवससप्ताहपक्षमासायनवर्षादीनां परिमाणपूर्वकं मर्यादा करणीया। तत्र गमनागमनयोः परिमाणं कृत्वा तस्मात् क्षेत्रात् विरक्तो भवितव्यः अस्य नाम एव देशव्रतनामकं गुणव्रतं वर्तते।

देशव्रतस्य गुणव्रतस्य लाभाः अमृतचन्द्राचार्येण प्रोक्ताः-

**इति विरतो बहुदेशात् तदुत्थहिंसा विशेषपरिहारात्।**
**तत्कालं विमलमतिः श्रयत्यहिंसां विशेषेण।।[2]**

अर्थात् एवं प्रकारेण बहुदेशात् विरतः विमलमतिः तत्कालं तेषु क्षेत्रेषु जायमानायाः हिंसायाः विशेषपरिहारात् विशिष्टत्वेन अहिंसाम् आश्रयति। येन पुरुषेण दक्षिणे कन्याकुमारीनगरं पर्यन्तम् उत्तरे च हिमालयपर्वतं पर्यन्तम् गन्तुम् आजीवनं दिग्व्रतं कृतम्। सः पुरुषः सर्वदा तु हिमालयं प्रति न गच्छति। अतः सः प्रतिदिनं तादृशीं प्रतिज्ञां करोति यदद्य अहम् अस्मिन्नेव ग्रामे तिष्ठामि, तस्मात् बहिः न गमिष्यामि।

अतः यस्मिन् दिने सः तस्मिन् एव ग्रामविशेषे स्थातुं प्रतिज्ञां करोति, तस्मिन् दिने तस्मात् ग्रामात् बाह्यप्रदेशेषु अहिंसामहाव्रतस्य परिपालनं भवति तस्य।

**3. अनर्थदण्डत्यागव्रतम्-**

प्रयोजनं विना यत् पापम् उत्पाद्यते क्रियते वा तस्य त्यागस्य नाम अनर्थदण्डत्यागव्रतमस्ति। स्वस्य कुटुम्बस्य च जीवननिर्वाहाय अनिवार्य हिंसाकार्याणि सावद्यानि विहाय अन्यसर्वविधहिंसाप्रवृत्तितः निवृत्तिरेव अनर्थदण्डविरमणव्रतस्ति। अनर्थदण्डत्यागव्रते श्रावकः निरर्थकं कस्यापि हिंसां न करोति। न च निरर्थकं वस्तुसंग्रहं करोति। यतः एवंविधसंग्रहात् हिंसा प्रोत्साहिता भवति। अस्य अनर्थदण्डविरमणव्रतस्य पञ्चभेदाः वर्तन्ते-

3.1 अपध्यानत्यागव्रतम्

[1] पुरुषार्थसिद्ध्युपायः – श्लोकसंख्या - 139
[2] पुरुषार्थसिद्ध्युपायः – श्लोकसंख्या - 140

3.2 पापोपदेशत्यागव्रतम्

3.3 प्रमादचर्यात्यागव्रतम्

3.4 हिंसादानत्यागव्रतम्

3.5 दुःश्रुतित्यागव्रतम्

**3.1 अपध्यान-अनर्थदण्डत्यागव्रतम् –**

अमृतचन्द्राचार्येण उक्तम् –

**पापर्द्धिजयपराजयसङ्गरपरदारगमनचौराद्याः।**
**न कदाचनापि चिन्त्याः पापफलं केवलं यस्मात्।।**[1]

अर्थात् पापर्द्धि-जय-पराजय-सङ्गर-परदारगमन-चौर्याद्याः कदापि न चिन्त्याः यतः तच्चिन्तनं केवलं पापफलमेव नान्यत्।

केनचित् कस्यचित् जीवस्य घातः तथा करणीयः एवं वा करणीयः, एतादृशं चिन्तनम् एतादृशः भावः न कर्तव्यः। युद्धे कस्यापि जयः पराजयः च नेच्छेत् परदारगमनचिन्तनमपि न करणीयं भवति। चौर्यकार्यस्य अपि चिन्तनं न करणीयम्। एवं कार्याणि पापयुक्तानि सन्ति तेषां कार्याणां चिन्तनमपि न कर्तव्यम् यतः एतादृशैः आत्मपरिणामैः निरर्थकमेव पाकर्मणां बन्धनं भवति। अतः एवं यस्य कर्मणः चिन्तनमात्रादेव केवलं पापबन्धनमेव भवति तस्य नाम अपध्यानम् इति। तस्य अपध्यानस्य त्याग एव अपध्यान- अनर्थदण्डत्यागव्रतमस्ति।

**3.2 पापोपदेश-अनर्थदण्डत्यागव्रतम्-**

अमृतचन्द्राचार्येण प्रोक्तम् –

**विद्यावाणिज्यमषीकृषिसेवाशिल्पजीविनां पुंसाम्।**
**पापोपदेशदानं कदाचिदपि नैव वक्तव्यम्।।**[2]

श्लोकस्यार्थोऽयं वर्तते यत् विद्या-वाणिज्य-मषी-कृषि-सेवा-शिल्पजीविनां पुंसां पापोपदेशदानं वचनं कदापि नैव वक्तव्यम्। सर्वे जीवाः स्व-आजीविकानिमित्तं कार्याणि कुर्वन्ति, एवञ्च सर्वेषु कार्येषु अल्पाधिक्येन हिंसा भवति। यदि वयं तत्र कार्यं कर्तुं प्रेरयामः तर्हि कार्यस्य कारणात् या हिंसा भवति तस्याः फलं वयमपि प्राप्स्यामः, अपि च निरर्थकमेव। अतः प्रयोजनं विना कस्यापि कृते पापोपदेशः न करणीयः। अस्य एव नाम पापोपदेश-अनर्थदण्डत्यागव्रतमस्ति।

[1] पुरुषार्थसिद्ध्युपायः – श्लोकसंख्या - 141
[2] पुरुषार्थसिद्ध्युपायः – श्लोकसंख्या - 142

**3.3 प्रमादचर्या-अनर्थदण्डात्यागव्रतम् –**

प्रमादचर्यात्यागविषये अमृतचन्द्राचार्येण प्रोक्तम्-

**भूखननवृक्षमोट्टनशाड्वलदलनाम्बुसेचनादीनि।**
**निष्कारणं न कुर्याद्दलफलकुसुमोच्चयानपि।।[1]**

अर्थात् निष्कारणमेव भूखनन-वृक्षमोट्टन-शाड्वलदलन-अम्बुसेचनादीनि च दलफलकुसुमोच्चयान् अपि च न कुर्यात्। श्रावकेन प्रयोजनानुसारम् विवेकपूर्वकम् आवश्यककार्याणि क्रियन्ते परन्तु यस्मिन् कार्ये किमपि प्रयोजनं नास्ति, यथा- उद्याने उपविश्य भूमिखननम्, वनस्पतित्रोटनं वा एतादृशाणां निरर्थककार्याणां त्यागः श्रावकेन कर्तव्यः, अस्य एव नाम प्रमादचर्या-अनर्थदण्डत्यागव्रतम्।

**3.4 हिंसाप्रदान-अनर्थदण्डत्यागव्रतम् -**

विषयेऽस्मिन् अमृतचन्द्राचार्येण प्रोक्तम्-

**असिधनुविषहुताशनलाङ्गलकरवालकार्मुकादीनाम्।**
**वितरणमुपकरणानां हिंसायाः परिहरेद्यत्नात्।।[2]**

अर्थात् हिंसायाः उपकरणानाम् असिधेनु-विष-हुताशन-लाङ्गल-करवाल-कार्मुकादीनां परिहरेत् अर्थात् हिंसायाः उपकरणानां दानं न कुर्यात्। अन्येभ्यः कदापि हिंसोपकरणानां दानं न कर्तव्यम् एतस्मात् हिंसा करिष्यति अन्यः, निर्थकमेव फलं मिलिष्यति। अतः अस्य एव नाम हिंसाप्रदान-अनर्थदण्डत्यागव्रतम् इति वर्तते।

**3.5 दुःश्रुति-अनर्थदण्डात्यागव्रतम् -**

अमृतचन्द्राचार्येण प्रोक्तम् –

**रागादिवर्द्धनानां दुष्टकथानामबोधबहुलानाम्।**
**न कदाचन कुर्वीत श्रवणार्जनशिक्षणादीनि।।[3]**

अर्थात् मिथ्यात्वबहुलानां रागादिवर्द्धनानां दुष्टकथानां श्रवणार्जनशिक्षणादीनि न कदापि कर्तव्यानि। यस्याः कथायाः श्रवणात् पठनात् शिक्षणात् च विषयादिषु वृद्धिः भवेत्, मोहस्य वृद्धिः भवेत्, स्वपरपरिणामेषु संक्लेशो भवेत्, एतादृश्यः राजकथा, चोरकथा, भोजनकथा, स्त्रीकथा च न तु वक्तव्याः न च श्रोतव्याः। अस्यैव नाम दुःश्रुति-अनर्थदण्डत्यागव्रतं वर्तते। एवं प्रकारेण अत्र संक्षेपेण जैनदर्शने गुणव्रतानि अमृतचन्द्राचार्यकृतपुरुषार्थसिद्ध्युपायग्रन्थदिशा वर्णितानि। इति।

---

[1] पुरुषार्थसिद्ध्युपायः – श्लोकसंख्या - 143
[2] पुरुषार्थसिद्ध्युपायः – श्लोकसंख्या - 144
[3] पुरुषार्थसिद्ध्युपायः – श्लोकसंख्या - 145

# अहिंसा

**महक जैन**
शास्त्री द्वितीय वर्ष

**भूमिका -**

सर्वेषु दर्शनेषु जैनदर्शनस्य स्थानं विशिष्टं स्थानम् अस्ति तस्य विशष्टत्वस्य कारणं अस्ति जैनदर्शनस्य महत्त्वपूर्णाः सिद्धान्ताः जैनसिद्धान्ताः सर्वेभ्यः जीवेभ्यः उपयोगिनः सन्ति। यथा स्याद्वादः, अनेकान्तवादः, अपरिग्रहः च इत्यादयः। अत्र अहिंसा जैनदर्शनस्य पर्यायत्वेन प्राणत्वेन च अस्ति।

यस्मात् कारणात् जैनदर्शनस्य अपर नाम अहिंसा दर्शनम् अपि अस्ति।

जैनदर्शनस्य विशदः उद्घोषः अस्ति- 'अहिंसा परमो धर्मः' इति। समस्तसंसारे सर्वेषु धर्मेषु अहिंसायाः प्राधान्यं स्वीकृतम्।

**अहिंसा शब्दः –**

अहिंसाः शब्दः अ + हिंसा एव अस्ति न हिंसा इति अहिंसा अत्र नञ् तत्पुरुष समासः अस्ति।

**अहिंसायाः लक्षणानि –**

1. प्रमत्तयोगात्- प्राणव्यपरोपणं हिंसा। (7.13 तत्त्वार्थ सूत्र)
2. यत् खलु कषास्य योगात्प्राणानां द्रव्यभावरुपाणाम्।
   व्यपरोपणस्य करणं सुनिश्चिता भवति सा हिंसा।। (43. पुरुषार्थसिद्ध्युपाय)
3. अप्रादुर्भावः खलु रागादीनां भवत्यहिंसेति।
   तेषामेवोत्पत्ति-हिंसेति जिनागमस्य संक्षेपः।। (44. पुरुषार्थसिद्ध्युपाय)

अर्थात् अस्माकम् आत्मनि यदा रागद्वेषादिभावानां उत्पत्तिः भवति तदा हिंसा भवति तथा च यदा अस्माकम् आत्मनि रागद्वेषादिभावानां उत्पत्तिः न भवति तदा अहिंसापालनं भवति।

अमृतचन्द्राचार्येण इदं उक्तम् यत् पञ्च पापानि हिंसास्वरुपाणि सन्ति। पञ्चपापानि सन्ति हिंसा, असत्यम्, स्तेयम्, अब्रह्म, परिग्रहः च इति। पुनरुक्तम् यत् निश्चयेन एकः जीवः हिसां न कुर्वन् अपि हिंसाफलभोक्ता भवति अन्यः च जीवः हिंसां कृत्वा अपि हिंसाफलभोक्ता न भवति। एकस्य जीवस्य अल्पहिंसा उदयकाले अधिकं फलं ददाति। अन्यस्य जीवस्य अधिकहिंसा अपि उदयकाले अल्पं फलं ददाति।

ISSN-2321-6948

जीवैः मिलित्वा कृताः हिंसाः अपि फलकाले विचित्रत्वम् भजति सा हिंसा एकस्मै जीवाय तीव्रं फलं ददाति अन्यजीवाय च सा हिंसा मन्दं फलं ददाति।

काचित् हिंसा पूर्वं एव फलं ददाति काचित् हिंसा कृता अपि फलति, काचित् च अकृता अपि फलति अतः हिंसाः कषायभावानुसारं फलति। एकः पुरुषः हिंसां करोति परन्तु फलभागिनः बहवः भवन्ति। एवं प्रकारेण एव बहवः पुरुषा हिंसां कुर्वन्ति परन्तु हिंसाफलभागी एकः पुरुषः भवति।

आचार्येण उक्तं यत् हिंसाम्, हिंसकम्, हिंस्यम्, हिंसायाः फलं च तत्त्वेन विज्ञाय निजशक्त्या हिंसा त्यक्तव्या।

यः जीवः हिंसायाः त्यागं कर्तुं इच्छति तेन सर्वप्रथमं यत्नपूर्वकं मद्यं, मासं, (मधुः) तथा च पञ्चोदुम्बरफलानि त्यक्तव्यानि।

एवं प्रकारेण हिंसाम् ज्ञात्वा तस्याः कृत-कारित-अनुमोदनाभिः वाक्काय मनोभिः नवधा त्यागः कर्तव्याः। अत्र हिंसात्यागस्य द्वौ भेदौ स्तः सर्वतः त्यागः एकदेशत्यागः च। यः जीवः स्थावर-हिंसाम् अपि न करोति तस्य हिंसायाः सर्वतः त्यागः भवति। तथा च यः जीवः स्थावरहिंसां न त्यक्त्वा त्रसहिसां त्यजति तस्य हिंसायाः त्यागः तु करणीय एव। तत्र स्थावर- हिंसायाम् अपि स्वच्छन्दतायाः निषेधः अस्ति। एवं प्रकारेण हि अहिंसाधर्मं सम्यक्तया विज्ञाय धारणं कृत्वा पालनं कृत्वा परमं मोक्षपदं प्राप्तव्यम्।

**अहिंसायाः महत्त्वम् –**

वर्तमानसमये जीवानां जीवनम् अस्तम्-व्यस्तम् कष्टकरम् च जातम् कारणम् तत्र अस्ति अहिंसायाः अभावः हिंसायाः सद्भावः च इति। जीवनसंकटकाले अस्मिन् संसारिकानां जीवानां कृते सुखं शान्तिः च दुर्लभाः जाताः। सर्वदा मनसि आत्मनि च व्याकुलता खिन्नता चिंताः च जायमाना अस्ति। अत्र अपि कारणत्वं भजते हिंसा। वक्तुं शक्यते यत् जीवानां सर्वेषां दुःखानां कारणम् हिंसा तथा च सर्वेषाम् सुखानां कारणम् अहिंसा वर्तते।

**अहिंसा परमो धर्मः –**

1. जीवस्य हिंसनं, पीडनं, दुःखदानं वा हिंसा इति कथ्यते।
2. हिंसायाः अभाव एव अहिंसा भवति।
3. मनसा-वाचा-कर्मणा वा केनापि रूपेण दुःखदानं न करणीयम्।
4. अहिंसापरमो धर्मः वर्तते।

5. अहिंसा धर्म एव मनुष्यस्य प्रथमः धर्मः अस्ति।
6. हिंसा न केवलं कर्मणा एव अपितु वाचा मनसापि च भवति।
7. अस्याः महत्त्वं सर्वे धर्माः स्वीकुर्वन्ति।
8. अहिंसया एव संसारस्य स्थितिः अस्ति।
9. अहिंसया किं किं न विहितं वक्तुं न शक्यते।
10. मानवेन सर्वथा सर्वदा सर्वभावेन अहिंसाव्रतमाचारणीयम्।

***